among the compositions of *Kshemendra*. It is a didactic in character. In this work the author describes the varied snares and traps of harlots. It describes the social life at the time of Prime Minister of Maharaja *Jayapida*. The first chapter describes how *Kalaavati*, a prospective prostitute, was introduced to an old bawd *Kankaali* by a barber. In the 2nd chapter the barber relates amusing and humorous account of the rambles of *Kankaali* in Kashmir. *Kankaali* marries several persons one after another, and becomes a widow of all of them. She follows many professions and at last becomes a procuress again. In the 3rd an elegant description of the incidents happening at the prostitutes in the evening is given. In the 4th chapter, *Kankaali* meets *Kalaavati* and imparts to her detailed instructions. The 5th chapter gives 8 classes of lovers and 23 tricks to get rid of penniless lovers. The 6th chapter gives a beautiful description at the prostitute in the morning. The 7th and the 8th chapters describe how *Kalaavati* ensnares a young boy, the son of a merchant and cheats his parents.

**Sixth Section – *Atma-vrittam* (Biography)**

This section has some excerpts from various parts of his work which inform about authors life. Four such portions are given here.

**Seventh Section – Appendices**

This section has seven appendices viz., Index of *Slokas*, Works mentioned by *Kshemendra, Slokas* self-authored and quoted by *Kshemendra,* List of unknown words with meaning, Abbreviation and Bibliography of *Kshemendra*. The bibliography on *Kshemendra* is a unique work that is a value

addition to this revised edition. This bibliography covers the entire study that took place in this century on *Kshemendra.*

*A question may be asked here as to why this edition is called 'Revised Edition'?*

We have noticed that many publications have been brought out after publication of these works in *Kavyamala* Series, which is the only source for the first edition in 1962. We felt it was necessary to examine all those readings in comparison to our publication. In this process we find many variant readings in other later editions, which we incorporated in this revised edition. The edition of *Narmamala* and *Deshopadesha* published in Kashmir Series and some southern editions of *Aucitya-vicaara-carcaa* were found useful in adding variations.

We have also prepared a detailed 'Bibliography on *Kshemendra*", which includes all most all studies and works on him. This will be very much useful for the researchers who want to study on *Kshemendra*. In preparation of this bibliography we have used internet facility.

Though I am not a student of literature, the beauty of *Kshemendra's* compositions prompted me to conduct a detailed study on him and to write an introduction, which is a result of that study. I hope readers would welcome this effort.

Date 27th March 2009 — Shrinivasa Varakhedi
*Yugaadi – Virodhi Samvatsara* — Director

## Acknowledgement

This collection of *Kshemendra's* Minor works was compiled with the help of Kavyamala Series by the Sanskrit Academy in 1960s. Prof. Aryendra Sharma, the then Director of the Academy, Sri. P.G.Padhye and Sri.V.V.Raghavacaryalu edited this collection. This second revised edition is published in memory of these reputed scholars.

This is appropriate to place on the records that the editing work of this edition is carried out by Dr. V. Shrinivasa Sharma, Editor along with me with the assistance of Sri. Suryaprakash.K.V. and other scholars namely Dr. V. Subrahmanyam, Dr. Varalakshmi Dr. J.Santosh Kumar. I thank all the scholars for their painstaking work. The special mention of late Prof. K.Kamala is also needed here for her early efforts in bringing out this edition.

I also thank Prof.T.Tiruapati Rao, Honorable Vice-Chancellor of Osmania University and Chairman of Managing Committee and other distinguished members for their kind support.

I also remain ever grateful to Professor. Radhavallabh Tripathi ji, Honorable Vice-Chancellor of Rashtriya Sanskrit Sansthan University, under Ministry of Human Resource Development, Govt. of India for constant support in all aspects. The support and encouragement extended by Sri. C. S. Kanniyal, Registrar of Rashtriya Sanskrit Sansthan is marvelous. My special thanks are due to him and other officials of Rashtriya Sanskrit Sansthan and Osmania University.

Last but not the least; we are thankful to the Director, Osmania University Press and the Karshak printing press for their cooperation in printing work.

Shrinivasa Varakhedi
Director

# १. स्तुतयः

## (१)दशावतारस्तुतिः

अशेषविश्ववैचित्र्यरचनारुचये नमः।
मायागहनगूढाय नानारूपाय विष्णवे॥१॥

देवः पायादपायात् त्रिभुवनभवनस्तम्भभूतः स युष्मा-
नायुष्मान् यस्य भक्त्या प्रभवति पुरुषः स्वर्गमार्गेऽपवर्गे।
मत्स्यः कूर्मो वराहः पुरुषहरिवपुर्वामनो जामदग्न्यः
काकुत्स्थः कंसहन्ता स च सुगतमुनिः कर्किनामा च विष्णुः॥२॥

आदि*मत्स्यः* स जयताद् यः श्वासोच्छ्वासितैर्जलैः।
गगने विदधेऽम्भोधिं गगनं च महोदधौ॥३॥

तं नमस्कुर्महे कूर्मं यः कवाटमसङ्कटम्।
अतीतसर्वब्रह्माण्डमवशेषमिवावहत्॥४॥

*वराहं* नौमि सानन्ता येनोत्क्षिप्ता क्षितिः परम्।
अधोधृतार्धच्छत्रेव तलस्थार्कातपासहा॥५॥

जयाय *नृहरि*र्वोऽस्तु दैत्योरःशोणितार्णवे।
हारमौक्तिकगर्भास्ताश्चेरुर्यन्नखशुक्तयः ॥६॥

*त्रिविक्रमो*ऽस्तु भूत्यै वः प्राग् लघ्वी मध्यमा ततः।
यस्य पश्चादनन्ताभूत् सत्सङ्गतिरिवाकृतिः ॥७॥

अभग्नं *जामदग्न्यो* वः प्रयच्छतु जयोदयम्।
यत्कुठारकठोराग्नौ भूपालैः शलभायितम् ॥८॥

नौमि *रामं* रिपोश्चक्रे यः काञ्चननिभैः शरैः।
होमानलशिखारूढमिव वक्त्रवनं पुनः ॥९॥

*शौरि*र्जयति कंसस्य जीवितप्रथमातिथिः।
यश्चक्रे चक्रदानेन बाणबाहुप्रतिग्रहम् ॥१०॥

यस्य सभ्रूभ्रमाकम्पा माररामाःससैनिकाः।
चक्रुर्न रागं न द्वेषं स शान्त्यै *सुगतो*ऽस्तु वः ॥११॥

स्वच्छन्दप्रोच्छलन्म्लेच्छतिमिरोद्भेदसच्छविः।
*कल्कि*विष्णुः प्रकाशाय प्रभातार्क इवास्तु वः ॥१२॥

अवतारकथायुक्त्या भक्त्या भगवतो हरेः।
श्रीव्यासदासः क्षेमेन्द्रः कुरुते सरसां *स्तुतिम्*॥१३॥

**इति महाकविश्रीक्षेमेन्द्रविरचिते दशावतारचरिते**
**दशावतारस्तुतिः समाप्ता ॥ (१.१-१३)**

## (२) वाल्मीकिप्रशंसा

ज्येष्ठो जयति वाल्मीकिः सर्गबन्धे प्रजापतिः।
यः सर्वहृदयालीनं काव्यं रामायणं व्यधात्॥१॥

स्वच्छप्रवाहसुभगा मुनिमण्डलसेविता।
यस्मात् स्वर्गादिवोत्पन्ना पुण्या प्राची सरस्वती॥२॥

नुमः सर्वोपजीव्यं तं कवीनां चक्रवर्तिनम्।
यस्येन्दुधवलैः श्लोकैर्भूषिता भुवनत्रयी॥३॥

स वः पुनातु वाल्मीकेः सूक्तामृतमहोदधिः।
ओङ्कार इव वर्णानां कवीनां प्रथमो मुनिः॥४॥

**इति क्षेमेन्द्रविरचितायां रामायणमञ्जर्यां**

**वाल्मीकिप्रशंसा** ( पृ.१श्लो २-४, पृ.५०९, श्लो.२)

## (३) व्यासाष्टकस्तोत्रम्

नमो ज्ञानानलशिखापुञ्जपिङ्गजटाभृते।
कृष्णायाकृष्णमहसे कृष्णद्वैपायनाय ते॥१॥

नमस्तेजोमयश्मश्रुप्रभाशबलितत्विषे।
वक्त्रवागीश्वरीपद्मरजसेवोदितश्रिये॥२॥

नमः सन्ध्यासमाधाननिष्पीतरवितेजसे।
त्रैलोक्यतिमिरोच्छेददीपप्रतिमचक्षुषे॥३॥

नमः सहस्रशाखाय धर्मोपवनशाखिने।
सत्त्वप्रतिष्ठापुष्पाय निर्वाणफलशालिने॥४॥

नमः कृष्णाजिनजुषे बोधनन्दनवासिने।
व्याप्तायेवालिजालेन पुण्यसौरभलिप्सया॥५॥

नमः शशिकलाकारब्रह्मसूत्रांशुशोभिने।
श्रिताय हंसकान्त्येव सम्पर्कार्किमलौकसः॥६॥

नमो विद्यानदीपूर्णशास्त्राब्धिसकलेन्दवे।
पीयूषरससाराय कविव्यापारवेधसे॥७॥

नमः सत्यनिवासाय स्वविकाशविलासिने।
व्यासाय धाम्ने तपसां संसारायासहारिणे॥८॥

**समाप्तमिदं भारतमञ्जरीस्थं व्यासाष्टकस्तोत्रम्**

**कवेर्व्यासदासापरनाम्नः प्रकाशेन्द्रसूनोः क्षेमेन्द्रस्य॥** (पृष्ठ.८५०, श्लो. १३-२०)

* * * * *

# २. साहित्यशास्त्रम्

## I. औचित्यविचारचर्चा

कृतारिवञ्चने दृष्टिर्येनाञ्जनमलीमसा।
अच्युताय नमस्तस्मै परमौचित्यकारिणे ॥१॥

कृत्वापि काव्यालङ्कारां क्षेमेन्द्रः कविकर्णिकाम्।
तत्कलङ्कं विवेकं च विधाय विबुधप्रियम् ॥२॥

औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥३॥

काव्यस्यालमलङ्कारैः किं मिथ्यागणितैर्गुणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते ॥४॥

अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥५॥

परस्परोपकारकरुचिरशब्दार्थरूपस्य काव्यस्य उपमोत्प्रेक्षादयो ये प्रचुरालङ्कारास्ते कटककुण्डलकेयूरहारादिवद् अलङ्कारा एव, बाह्यशोभाहेतुत्वात्। येऽपि काव्यगुणाः केचन तल्लक्षणविचक्षणैः

समाम्नाताः, तेऽपि श्रुतसत्यशीलादिवद् गुणा एव, आहार्यत्वात्। औचित्यं त्वग्रे वक्ष्यमाणलक्षणं स्थिरमविनश्वरं जीवितं काव्यस्य, तेन विनाऽस्य गुणालङ्कारयुक्तस्यापि निर्जीवत्वात्। रसेन श्रृङ्गारादिना सिद्धस्य प्रसिद्धस्य काव्यस्य धातुवादरससिद्धस्येव तज्जीवितं स्थिरमित्यर्थः।

उक्तार्थस्यैव विशेषमाह-

*उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः।*
*औचित्यादच्युता नित्यं भवन्त्येव गुणा गुणाः॥६॥*

अलङ्कृतिरुचितस्थानविन्यासादलङ्कर्तुं क्षमा भवति, अन्यथा त्वलङ्कृतिव्यपदेशमेव न लभते। तद्वद् औचित्यादपरिच्युता गुणा गुणतामासादयन्ति, अन्यथा पुनरगुणा एव।

यदाह-

१. कण्ठे मेखलया नितम्बफलके तारेण हारेण वा
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यताम्
औचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणाः॥

किं तदौचित्यमित्याह -

## औचित्यम्

*उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।*
*उचितस्य च यो भावस्तदौचित्यं प्रचक्षते॥७॥*

यत्किल यस्यानुरूपं तदुचितमुच्यते, तस्य भावमौचित्यं कथयन्ति।

## औचित्यप्रकाराः

अधुना सकलकाव्यशरीरजीवितभूतस्य औचित्यस्य प्राधान्येनोपलभ्यां स्थितिं दर्शयितुमाह-

*पदे[1] वाक्ये[2] प्रबन्धार्थे[3] गुणे[4]ऽलङ्करणे[5] रसे[6]।*
*क्रियायां[7] कारके[8] लिङ्गे[9] वचने[10] च विशेषणे[11]॥८॥*
*उपसर्गे[12] निपाते[13] च काले[14] देशे[15] कुले[16] व्रते[17]।*
*तत्त्वे[18] सत्त्वे[19]ऽप्यभिप्राये[20] स्वभावे[21] सारसङ्ग्रहे[22]॥९॥*
*प्रतिभायाम[23]वस्थायां[24] विचारे[25] नाम्न्य[26]थाशिषि[27]।*
*काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम्॥१०॥*

एतेषु पदप्रभृतिषु स्थानेषु मर्मस्विव काव्यस्य सकलशरीरव्यापि जीवितमौचित्यं स्फुटत्वेन स्फुरदवभासते।

## १. पदौचित्यम्

तेषूदाहरणानि क्रमेण दर्शयितुमाह-

*तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम्।*
*चन्द्राननेव कस्तूरीकृतं श्यामेव चान्दनम्[१]॥११॥*

एकमेवोचितं पदं तिलकायमानं बिभ्राणा सूक्तिः समुचितपरभागशोभातिशयेन रुचिरतामावहति।

---

१. चन्दनम् इति माधवशर्मा

यथा *परिमलस्य*-

२. मग्नानि द्विषतां कुलानि समरे त्वत्खड्गधाराकुले
नाथास्मिन्निति बन्दिवाचि बहुशो देव श्रुतायां पुरा।
मुग्धा गुर्जर[1] भूमिपालमहिषी प्रत्याशया पाथसः
कान्तारे चकिता विमुञ्चति मुहुः पत्युः कृपाणे दृशौ॥

अत्र मुग्धापदेन अर्थौचित्यचमत्कारकारिणा सूक्तिः शरदिन्दुवदनेव श्यामतिलकेन, श्यामेव शुभ्रविशेषकेण विभूषिता सकलकविकुल-ललामभूतां विच्छित्तिमातनोति।

न तु यथा *धर्मकीर्तेः*-

३. लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः।
एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहतस्तन्व्यास्तनुं तन्वता ॥

अत्र तन्व्याः इति पदं केवलशब्दानुप्रासव्यसनि[2]तया निबद्धं न काञ्चिदा[3]र्थौचित्यचमत्कारकणिकामाविष्करोति। सुन्दर्याः[4] इत्यत्र पदमत्रानुरूपं स्यात्। अन्यानि वा निरतिशयरूपलावण्यव्यञ्जकानि। तन्वी पदं तु विरहविधुररमणीजने प्रयुक्तमर्थौचित्यशोभां जनयति।

---

१. घूर्जर इति माधवशर्मा २. व्यसनतया इति हरिहरप्रकाशनम् ३.काचित् इति माधवशर्मा ४. सुन्दर्या इति माधवशर्मा

यथा श्रीहर्षस्य-

४. परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिम[1]लनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्॥ रत्ना. २.१३

अत्र सागरिकाया विरहावस्थासूचकम् 'कृशाङ्ग्याः[2]' इति पदं परममौचित्यं पुष्णाति।

## २. वाक्यौचित्यम्

वाक्यगतमौचित्यं दर्शयितुमाह-

**औचित्यरचितं वाक्यं सततं सम्मतं सताम्।**
**त्यागोदग्र[3]मिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम्॥१२॥**

औचित्यरचितं वाक्यं काव्यविवेकविचक्षणानामभिमततमम्[4]।

यथा मम विनयवल्ल्याम्-

५.देवो दयावान् विजयो जितात्मा यमौ मनःसंयममाननीयौ।
इति ब्रुवाणः स्वभुजं प्रमार्ष्टि यः कीचकाकालिककालदण्डम्॥

६.धीरः स किर्मीर[5]जटासुरारिः कुबेरशौर्यप्रशमोपदेष्टा।
दृष्टो हिडिम्बादयितः कुरूणां पर्यन्तरेखागणनाकृतान्तः॥(युग्मम्)

---

१. परिमिल इति हरिहरप्रकाशनम् २.कृशाङ्ग्या इति माधवशर्मा ३.त्यागोचग्र इति माधवर्शा ४. अभिमतम् इति हरिहरप्रकाशनम् ५. किम्मीर इति माधवशर्मा

अत्र भीमस्य भीमचरितोचितकीचकाकालिककालदण्ड-हिडिम्बादयितादिभिः पदैरुन्निद्ररौद्ररसस्वरूपानुरूपो वाक्यार्थः सजीव इवावभासते।

यथा वा राजशेखरस्य-

७. सम्बन्धी पुरुभूभुजां मनसिजव्यापारदीक्षागुरु-
गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः।
सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युतिः
चन्द्रस्सुन्दरि! दृश्यतामयमितश्चण्डीशचूडामणिः॥ बा.रा.१०-४१

अत्रापि चन्द्रमसः शृङ्गारान्तरङ्गैरनङ्गोद्दीपनैः पदैर्निर्वर्तितो वाक्यार्थः सदर्थौचित्यसामर्थ्येनात्यर्थमर्थनीयतां प्राप्तः।

न तु यथास्यैव-

८. नाले शौर्यमहोत्पलस्य[१] विपुले सेतौ समिद्वारिधेः
शश्वत्खड्गभुजङ्गचन्दनतरौ क्रीडोपधाने श्रियः।
आलाने जयकुञ्जरस्य सुदृशां कन्दर्पदर्पे परं
श्रीदुर्योधनदोष्णि विक्रमपरे लीनं जगन्नन्दतु॥ प्र.पा. २-११

अत्रातिशयपरकर्कशसोत्कर्षसुभटभुजस्तम्भस्यासमुचितेन कुवलयनालतुलाधिरोपणेन वाक्यार्थः सोपहासतयेव निबद्धः परिज्ञायते।

---

१. महोत्सवस्य इति माधवर्मा

## ३. प्रबन्धार्थौचित्यम्

प्रबन्धार्थौचित्यं दर्शयितुमाह-

**उचितार्थविशेषेण प्रबन्धार्थः प्रकाश्यते[१]।**
**गुणप्रभावभव्येन विभवेनेव सज्जनः ॥१३॥**

अम्लानप्रतिभाप्रकर्षोत्प्रेक्षितेन सकलप्रबन्धार्थाप्यायिपीयूषवर्षेण समुचितार्थविशेषेण महाकाव्यं स्फुरदिव चमत्कारकारितामापद्यते।

यथा *कालिदासस्य*-

९. जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा॥ मेघदूतम्-६

अत्र अचेतनस्य चेतनाध्यारोपेण मेघस्य दौत्ययोग्यताधानाय प्रथितपुष्करावर्तकपर्जन्यवंश्यत्वम् अमात्यप्रकृतिपुरुषत्वं च यदुपन्यस्तं तेन समस्तप्रबन्धस्य अभिधानतोत्प्रेक्षितेतिवृत्तरुचिरतरस्य निरतिशयमौचित्यम् उद्द्योतितम्।

यथा वा *भवभूतेः*-

(नेपथ्ये)

१०. योऽयमश्वः पताकेयमथवा वीरघोषणा।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः॥ उ.रा.४-२७

---

१. प्रकाशते इति माधवर्मा

*लवः*- (सगर्वमिव) अहो! सन्तापनान्यक्षराणि। भो! भोः!, किमक्षत्रिया पृथिवी? यदेवमुद्घुष्यते। (विहस्य) आः!, किं नाम स्फुरन्ति शस्त्राणि (धनुरारोपयन्)

११.ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत्।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बि विकटोदरमस्तु चापम्॥ उ.रा.४-२९

अत्रार्थे रामायणकथातिक्रमेण नूतनोत्प्रेक्षिता रामतनयस्य सहजविक्रमानुसारिणी शौर्योत्कर्षभूमिः परप्रतापस्पर्शासहिष्णुता प्रबन्धस्य रसबन्धुरामौचित्यच्छायां प्रयच्छति।

न तु यथा *राजशेखरस्य*-

*रावणः*-

१२.यत्पार्वतीहठकचग्रहणप्रवीणे
पाणौ स्थितं पुरभिदः शरदां सहस्रम्।
गीर्वाणसारकणनिर्मितगात्रमत्र
तन्मैथिलीक्रयधनं धनुराविरस्तु॥ बा.रा.१-३९

*जनकः* - आविरस्तु सममगर्भसम्भवया सीतया।

अत्र 'आविरस्तु समं सीतया' इति जनकराजेन यदुच्यते, तेनास्य पिशिताशनाय तनयाप्रतिपादनमभिमतमिवोपलक्ष्यते। न चैतद्विद्मः कथं

भक्ष्यभूता कुसुमकोमलाङ्गी पुरुषादाय प्रतिपाद्यते। इत्यनौचित्येन प्रसिद्धेन वृत्तवैपरीत्यं परं हृदयविसंवादमादधाति।

यथा वा कालिदासस्य-

१३. ऊरुमूलनखमार्गपङ्क्तिभिस्तत्क्षणं हृतविलोचनो हरः।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत्॥ कु. सं.८-८७

अत्राम्बिकासम्भोगवर्णने पामरनारीसमुचितनिर्लज्जसज्जनखराजि विराजितोरुमूलहृतविलोचनत्वं त्रिलोचनस्य भगवतस्त्रिजगद्गुरोर्यदुक्तं तेनानौचित्यमेव परं प्रबन्धार्थः पुष्णाति।

## ४. गुणौचित्यम्

गुणौचित्यं दर्शयितुमाह-

**प्रस्तुतार्थोचितः काव्ये भव्यः सौभाग्यवान् गुणः।**
**स्यन्दतीन्दुरिवानन्दं सम्भोगावसरोदितः॥१४॥**

प्रस्तुतस्यार्थस्यौचित्येनौजःप्रसादमाधुर्यसौकुमार्यादिलक्षणो गुणः काव्ये भव्यः सौभाग्यवत्तामवाप्तः सहृदयानन्दसन्दोहमिन्दुरिव स्यन्दति।

यथा *भट्टनारायणस्य-*

१४. महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥ वे.सं.३-४

अत्रौजस्विनः भटमुकुटमणेरश्वत्थाम्नः स्फूर्जदूर्जितप्रतापानुरूपं वाक्यमोजसा काव्यगुणेन उदग्रतामवाप्तं सहस्रगुणमिव विक्रमौचित्य-गौरवमावहति।

यथा वा *भट्टबाणस्य*-

१५.हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः॥

अत्र विप्रलम्भभरभग्नधैर्यायाः कादम्बर्या विरहव्यथावर्णना - माधुर्यसौकुमार्यादिगुणयोगेन पूर्णेन्दुवदनेव प्रियंवदत्वेन हृदयानन्ददायिनीं दयिततमतामातनोति।

न तु यथा *चन्द्रकस्य*-

१६.युद्धेषु भाग्यचपलेषु न मे प्रतिज्ञा
दैवं नियच्छति जयं च पराजयं च।
एषैव मे रणगतस्य सदा प्रतिज्ञा
पश्यन्ति यन्न रिपवो जघनं हयानाम्॥

अत्र क्षत्रवृत्तिरिवौजसा काव्यगुणेनास्पृष्टा सुभटोक्तिरुचितार्थापि तेजोजीवितविरहिता दुर्गतगृहदीपशिखेव मन्दायमाना न विद्योतते।

यथा वा *राजशेखरस्य* -

१७.एतस्याः स्मरसंज्वरः करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनापि जनेन दाहभयतः प्रस्थंपचः पाथसाम्।
निर्वीर्यीकृतचन्दनौषधविधौ तस्मिंस्तडत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयः सर्वेऽपि हारस्रजाम्॥ बा.रा.५-११

अत्र विरहविधुररमणीमनोभवावस्थानुरूपं माधुर्यमुत्सृज्य तडत्कारिणो लाजस्फोटं स्फुटन्तीत्योजः[1] स्फूर्जितोर्जितस्वभावाधिवासिता सूक्तिर्लावण्यपेशलतनुर्ललितललनेव परुषभाषिणी झटित्यनौचित्यं चेतसि सञ्चारयति।

## ५. अलङ्कारौचित्यम्

अलङ्कारौचित्यं *दर्शयितुमाह-*

**अर्थौचित्यवता सूक्तिरलङ्कारेण शोभते।**
**पीनस्तनस्थितेनेव हारेण हरिणेक्षणा॥१५॥**

प्रस्तुतार्थस्यौचित्येन उपमोत्प्रेक्षारूपकादिनालङ्कारेण सूक्तिश्चकास्ति कामिनीवोच्चकुचचुम्बिना रुचिरमुक्ताकलापेन।

यथा *श्रीहर्षस्य* -

१८.विश्रान्तविग्रहकथो रतिमान्जनस्य
चित्ते वसन् प्रियवसन्तक एव साक्षात्।
पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति॥ रत्ना. १-८

---

१. स्फुटन्तीवत्योजः इति माधवशर्मा

अत्र वत्सेश्वरस्य कुसुमचापेन उपमा श्रृङ्गारावसररसरस-चारुतरतामौचित्येन कामपि चेतश्चमत्कारिणीमाविष्करोति।

न तु यथा *चन्दकस्य*-

१९. खगोत्क्षिप्तैरन्त्रैस्तरुशिरसि दोलेव रचिता
शिवा तृप्ताहारा स्वपिति रतिखिन्नेव वनिता।
तृषार्तो गोमायुः सरुधिरमसिं लेढि बहुशो
बिलान्वेषी सर्पो हतगजकराग्रं प्रविशति॥

अत्रानुचितस्थानस्थितायाः पुरुषपिशिततृप्तसुप्तायाः शिवायाः सुरत-केलिक्लान्तकान्तया विच्छायैवोपमा परं वैपरीत्यं प्रकाशयति।

यथा वा *मालवरुद्रस्य*-

२०. अभिनववधूरोषस्वादः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः॥

अत्र कोमलकामिनीकोपेन करीषकृशानोः सादृश्यं शीतसमयस्वादुतया हृदयसंवादसुन्दरमप्यनुचितत्वेन सहसैव चेतसः सङ्कोचमिवादधाति।

यथा वा *राजशेखरस्य*-

२१. चिताचक्रं चन्द्रः कुसुमधनुषो दग्धवपुषः
कलङ्कस्तत्रत्यः स्पृशति मलिनाङ्गारकलनाम्।
यदेतत् सज्ज्योतिर्दरदलितकर्पूरधवलं
मरुद्भिर्भस्मैतत्प्रसरति विकीर्णं दिशि दिशि॥

अत्राप्यानन्दिसुधावस्यन्दसुन्दरस्य इन्दोश्चिताचक्रत्वमनुचिततया कर्णकटुकमातङ्कमिवातनोति। योऽर्थस्तु हृदयसंवादी स यद्यनौचित्यस्पर्शलेश रहितस्तदधिकतरामलङ्कारशोभां पुष्णाति।

यथा *कार्पटिकस्य*-

२२.शीतेनोद्धूषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः
शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे।
निद्रा क्वापि विमानितेव दयिता सन्त्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी॥

अत्रानौचित्यस्पर्शपरिहारेण केवलं हृदयसंवादसौन्दर्यमेव स्वादुतामादधाति।

## ६. रसौचित्यम्

रसौचित्यं दर्शयितुमाह-

**कुर्वन् सर्वाशये व्याप्तिमौचित्यरुचिरो रसः।**
**मधुमास इवाशोकं करोत्यङ्कुरितं मनः॥१६॥**

औचित्येन भ्राजिष्णुः शृङ्गारादिलक्षणो रसः सकलजनहृदयव्यापी वसन्त इवाशोकतरुमङ्कुरितं मनः करोति।

यथा *श्रीहर्षस्य*-

२३.उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम्॥ रत्ना.२-४

अत्रेर्ष्याविप्रलम्भरूपस्य श्रृङ्गाररसस्य वासवदत्तायामवेक्ष्यमाणस्य नवमालिकालताया ललितवनितातुल्यतया विरहावस्थारोपणेन नितरामौचित्यरुचिरचमत्कारिणी दीप्तिरुपपादिता।

यथा वा *कालिदासस्य*-

२४. बालेन्दुवक्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥ कु.सं.३-२९

अत्र पार्वत्यां परमेश्वरस्याभिलाषश्रृङ्गारे वक्ष्यमाणे प्रथममुद्दीपन-विभावभूतस्य वसन्तस्य वर्णनायां कामुकाध्यारोपेण वनस्थलीललनानां कुटिललोहितपलाशकलिकाभिर्नवसङ्गमयोग्यनखक्षतानि उत्प्रेक्षितानि परमौचित्यचारुतां प्रतिपादयन्ति।

न तु यथास्यैव-

२५.वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः॥
कु.सं.३-२८

अत्र केवलकर्णिकारकुसुमवर्णनमात्रेण विधातृवाच्यतागर्भेणैव प्रस्तुतश्रृङ्गारानुपयोगिना तदुद्दीपनविभावोचितं न किञ्चिदभिहितम्।

हास्यरसे यथा मम *लावण्यवतीनाम्नि*काव्ये-

२६.सीधुस्पर्शभयान् च[1] चुम्बसि मुखं किं नासिकां गूहसे
रे रे! श्रोत्रियतां तनोषि विषमां मन्दोऽसि वेश्यां विना।

---

१. सीधुस्पर्शभयान्न इति माधवशर्मा

इत्युक्त्वा मदघूर्णमाननयना वासन्तिका मालती
लीनस्यात्रिवसोः करोति बकुलस्येवासवासेचनम्॥

अत्र श्रोत्रियस्यात्रिवसोरपवित्रसीधुस्पर्शशङ्कासङ्कोचनिलीनस्य शुष्कबकुल[1]वृक्षस्येव सरसतापादनाय वेशविलासिन्या यदासवासेचनं तदङ्गभूतश्रृङ्गाररसाभासस्पर्शेन हास्यरसस्य वरासवस्येव सहकाररसवेधेन सचमत्कारमौचित्यमाचिनोति।

यथा वा मम *लावण्यवत्यामेव*-

२७.मार्गे केतकसूचिभिन्नचरणा सीत्कारिणी केरली
रम्यं रम्यमहो पुनः कुरु विटेनेत्यर्थिता सस्मिता।
कान्ता दन्तचतुष्कबिम्बितशशिज्योत्स्नापटेन क्षणं
धूर्तालोकनलज्जितेव तनुते मन्ये मुखाच्छादनम्॥

अत्रापि हास्यरसस्य कुटिलविटनर्मोक्तिवचनौचित्येन श्रृङ्गाररसाभासाधिवासितस्य सचमत्कारः परः परिपोषः समुन्मिषति।

न तु यथा *श्यामलस्य*-

२८. चुम्बनसक्तः सोऽस्या दशनं च्युतमूलमात्मनो वदनात्।
जिह्वामूलप्राप्तं खाडिति कृत्वा निरष्ठीवत्॥

अत्र हास्यरसस्य बीभत्सरसाधिवासितस्य लशुनलिप्तस्येव कुसुमशेखरस्यातिजुगुप्सितत्वादनीप्सितस्य परमानौचित्येन चमत्कारस्तिरोहितः। वृद्धापरिचुम्बने जिह्वामूलप्राप्तस्य च्युतदशनस्य कण्ठलोठिनः ष्ठीवनेन बीभत्सस्यैव प्राधान्यम्, न तु हास्यरसस्य।

---

१. वकुल इति माधवशर्मा

करुणे यथा मम *मुनिमतमीमांसायाम्-*

२९.प्रत्यग्रोपनताभिमन्युनिधने हा! वत्स! हा! पुत्रके-
त्यश्मद्रावि सुभद्रया प्रलपितं पार्थस्य यत्तत्पुरः।
येनोद्बाष्पविमुक्तशष्पकवलैः सेनातुरङ्गैरपि
न्यञ्चत्पार्श्वगतैककर्णकुहरैर्निःस्पन्दमन्दं स्थितम्॥

अत्र प्रत्यग्रोपनतप्रियतरतनयवियोगोपजनितशोकाख्यस्थायिभावोचितं दृषदामपि हृदयद्रावणं सुभद्रया यत्प्रलपितं तदर्जुनचेतसि प्रतिफलितं न केवलमुद्दीप्ततामुपगतं यावत्तिरश्चां तुरङ्गमाणामप्यन्तः सङ्क्रान्तमुद्बाष्प-विमुक्तशष्पकवलनिः स्पन्दस्थितादिभिरनुभावैः उदीर्णतरुणकरुणरस-प्रतिपत्तिं किमप्यादधाति।

न तु यथा *परिमलस्य-*

३०.हा! श्रृङ्गारतरङ्गिणीकुलगिरे! हा! राजचूडामणे!
हा! सौजन्यसुधानिधान! हहहा! वैदग्ध्यदुग्धोदधे!।
हा! देवोज्जयिनीभुजङ्गयुवतिप्रत्यक्षकन्दर्प हा!
हा! सद्बान्धव! हा! कलामृतकर! क्वासि प्रतीक्षस्व नः॥

अत्र हाहेति हतमहीपतिविरहे तद्गुणामन्त्रणपदैर्वक्तृवक्त्रगत एव शोकः केवलमुपलक्ष्यते। न तु विभावानुभावव्यभिचारिसंयोगेन शोकाख्यस्य स्थायिभावस्य उचितं रसीकरणं किञ्चिन्निष्पन्नम्।

रौद्रे यथा *भट्टनारायणस्य-*

३१.यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।

यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपं
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥

वे.सं.३-३२

अत्र क्रूरक्रोधस्थायिभावात्मकस्य उन्निद्ररसरौद्रस्य उचिता शिशुस्थविरगर्भगतविशसननिस्त्रिंशकर्माध्यवासायाधिरोहणसंवादिनी द्रोणवधविधुरामर्षविषविषमव्यथाकश्मलशिथिलमश्वत्थाम्नः स्थेमानं प्रतिज्ञापयति।

न तु यथा *श्रीप्रवरसेनस्य-*

३२.दणुएन्दरुहिरलग्गे जस्स फुरन्ते णहप्पहाविच्छड्डे।
गुप्पन्ती विवलाआ गलिअ व्व थणंसुए महासुरलच्छी॥
(दनुजेन्द्ररुधिरलग्ने यस्य स्फुरति नखप्रभाविच्छर्दे[1] ।
व्याकुला विपलायिता गलित इव स्तनांशुके महासुरलक्ष्मीः ॥)

से.वं.१-२

अत्र क्रोधव्यञ्जकपदविरहिततया दनुजेन्द्ररुधिरलग्ने यस्य नरसिंहस्य स्फुरति नखप्रभासमूहे व्याकुलीभवन्ती विपलायिता गलितस्तनांशुका महासुरलक्ष्मीः इति वर्णनया रुधिरलग्न इति बीभत्सरसस्पर्शे व्याकुलीभवन्ती दैत्यश्रीः पलायिता इति भयानकरससङ्करेण प्रकृतोचितप्रधानभूतस्य रौद्ररसस्य क्वचिद् मुखमपि न दृश्यते।

वीरे यथा मम *नीतिलतायाम्-*

३३.शौर्याराधितगर्भ[2]भार्गवमुनेः शस्त्रग्रहोन्मार्गिणः
संक्षेपेण निवार्य संक्षयमयीं क्षत्रोचितां तीक्ष्णताम्।

---

१.समूहे इति माधवशर्मा २. भर्ग इति माधवशर्मा

आकर्णायतकृष्टचापकुटिलभ्रूभङ्गसंसर्गिणा
येनान्यायनिषेधिना शममयी ब्राह्मी प्रदिष्टा स्थितिः ॥

अत्र 'सोऽयं रामः' इति रावणाग्रे शुकसारणाभ्यां दूरान्निर्दिश्यमानस्य रामस्य निःसंरम्भगम्भीरावष्टम्भसम्भाव्यमानप्रभावोचितायां शस्त्र-सङ्ग्रहोन्मार्गगामिनो भार्गवस्य मुनेः स्वजातिसमुचितस्थित्युपदेशे सति प्रभविष्णुतायां चापरूपभङ्ग्या भ्रूभङ्गः प्रदर्शितः, न तु स्वाभाविकः, वीरस्य क्रोधे विकारासम्भवात्। प्रसन्नमधुरधीरा हि वीरवृत्तिः। तदुचितमत्राभिहितम्। भार्गवाभिभवेन च प्रधाननायकस्योत्कर्षः प्रतिपादितः।

यथा वा *राजशेखरस्य*-

३४.स्त्रीणां मध्ये सलीलं भ्रमितगुरुगदाघातनिर्नष्टसंज्ञः
सद्यो वध्योऽभवस्त्वं पशुरिव विवशस्तेन राज्ञार्जुनेन।
तस्य च्छेत्तापि योऽसौ सकलनृपरिपुर्जामदग्न्यो भुजानां
जित्वोच्चैः सोऽपि येन द्विज इति न हतस्तापसस्त्वेष रामः ॥

दूताङ्गद. ३-७८

अत्र रावणकार्तवीर्यजामदग्न्योत्कर्षोत्कर्षतरसोपानपरम्पराधिरोहणक्रमेण प्रधाननायकस्य प्रतापः परां कोटिमारोपितः।

न तु यथा *भवभूतेः*-

३५. वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्ततां
युद्धं स्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते।
यानि त्रीणी कुतोमुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥ उ.रा.५-३४

अत्राप्रधानस्य रामसूनोः कुमारलवस्य परप्रतापोत्कर्षासहिष्णोर्वीर-रसोद्दीपनाय सकलप्रबन्धजीवितसर्वस्वभूतस्य प्रधाननायकगतस्य वीर-रसस्य ताडकादमनखररणापसरणान्यरणसंसक्तवालिव्यापादनादिजन-विहितापवादप्रतिपादनेन स्ववचसा कविना विनाशः कृत इत्यनुचितमेतत्।

भयानके यथा *श्रीहर्षस्य*-

३६. कण्ठे कृत्तावशेषं कनकमयमधःश्रृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः॥ रत्ना. २-२

अपि च -

३७. नष्टं वर्षवरैर्मनुष्यगणनाभावादकृत्वा त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः॥ रत्ना. २-३

अत्र अङ्गनानां निशितदशननखशिखोल्लेखातङ्कदानेन प्रचुरतरवानरा-भिसरणभयसम्भ्रान्तान्तःपुरिकवृद्धवामनकिरातकुब्जादीनां पुरुषगणना-विहीनतया धैर्यविरहकातराणामुचितचेष्टानुभाववर्णनया भयानकर-ससंवादिरुचिरौचित्यमाचकास्ति।

न तु यथा राजपुत्रमुक्तापीडस्य-

३८. नीवारप्रसराग्रमुष्टिकवलैर्यो वर्धितः शैशवे
पीतं येन सरोजपत्रपुटके होमावशेषं पयः।

तं दृष्ट्वा मदमन्थरालिवलयव्यालोलगल्लं (ण्डं) गजं
सानन्दं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः॥

अत्र गजस्याघातकविकृतचेष्टानुवर्णनाविरहिततया स्थायिभावस्य भयस्यानुभाववर्जितस्य केवलं नाममात्रोदीरणेन च भयानकरसोचित-सम्भ्रमाभावादुपचितमौचित्यं न किञ्चिदुपलभ्यते।

बीभत्से यथा मम *मुनिमतमीमांसायाम्*-

३९. सर्वापायचयाश्रयस्य नियतं कुत्सानिकायस्य किं
कायस्यास्य विभूषणैः सुवसनैरानन्दनैश्चन्दनैः।
अन्तर्यस्य शकृद्यकृत्कृमिकुलक्लोमान्त्रमालाकुले
क्लेदिन्यन्तदिने प्रयान्ति विमुखाः कौलेयकाका अपि॥

अत्र वैराग्यवासनाच्छुरितबीभत्सरसस्य जुगुप्साख्यस्थायिभावो-चितकायगतकुत्सिततरान्त्रतन्त्रादिसमुदीरणेन परा परिपुष्टिः निःसार-शरीराभिमानवैरस्य जननी प्रतिपादिता।

न तु यथा चन्दकस्य-

४०. कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलः
क्षुधाक्षामो रूक्षः पिठरककपालार्दितगलः।
व्रणैः पूतिक्लिन्नैः कृमिपरिवृतैरावृततनुः
शुनीमन्वेति श्वा तमपि मदयत्येष मदनः॥

अत्राशुचिचर्वणरुचेरुचितविचिकित्सकुत्सानिकायकायस्य स्वभावजुगुप्सितयोनेः शुनकस्य किमेतैः बीभत्सविशेषणैरतिशयनिर्बन्धा-

नुबद्धैरधिकमुद्भासितम्। एतैरेव पुरुषगतैर्जुगुप्सा परं गौरवमावहति।

अद्भुते यथा *चन्दकस्य*-

४१.कृष्णेनाम्ब! गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया
सत्यं कृष्ण? क एवमाह? मुसली मिथ्याम्ब! पश्याननम्।
व्यादेहीति विकासितेऽथ वदने दृष्ट्वा समस्तं जगत्
माता यस्य जगाम विस्मयपदं पायात् स वः केशवः!॥

अत्र पाण्डुराङ्गकरसाक्षिलक्षितमृद्भक्षणाक्षेपोद्यजननीभयचकितस्य अपह्नवकारिणः शिशोर्विकासितास्यस्यान्तः समस्तजगद्दर्शनेन मातुश्च तत्प्रभावा नभिज्ञतयावात्सल्यविह्वलायाः विस्मयगमनेनात्युचितोऽयम-द्भुतातिशयः।

न तु यथा मम मुनिमतमीमांसायाम्-

४२.समस्ताश्चर्याणां जलनिधिरपारः सवसति-
स्ततोऽप्याश्चर्यं यत्पिबति सकलं तं किल मुनिः।
इदं त्वत्याश्चर्यं लघुकलशजन्मापि यदसौ
परिच्छेत्तुं को वा प्रभवति तवाश्चर्यसरणिम्॥

अत्रापारसरित्पतिप्रभावेण मुनिना तस्यैकचुलका[१]चमनेन मुनेश्च लघुकलशजन्मना क्रमाक्रान्तिसमारूढोऽप्यसमविस्मयोऽयमद्भुतप्रसरः संसारस्य एवंविधैवाश्चर्यसरणिरपरिच्छिन्ना न किञ्चिदेतत्कौतु-कमित्यर्थान्तरन्यासमामर्थ्येन सहसैवावरोपित इव तिरोभूततामुपगतः।

---

१.चुलुक इति माधवशर्मा

शान्ते यथा मम *चतुर्वर्गसङ्ग्रहे* (४.७)-

४३.भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयम्!
दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयम्।
माने म्लानिभयं जये रिपुभयं काये कृतान्ताद् भयम्
सर्वं नाम भवे भवेद् भयमहो! वैराग्यमेवाभयम्॥

अत्र सकलजनाभिमतभोगसुखवित्तादीनां भयमयतया हेयतां प्रतिपाद्य वैराग्यमेव सकलभयायासशमनमुपादेयतया यदुपन्यस्तं तेन शान्तरसस्य निरर्गलमार्गावतरणमुचिततरमुपदिष्टं भवति।

यथा वा *मम मुनिमतमीमांसायाम्*-

४४.कुसुमशयनं पाषाणो वा प्रियं भवनं वनं
प्रतनु मसृणस्पर्शं वासस्त्वगप्यथ तारवी।
सरसमशनं कुल्माषो वा धनानि तृणानि वा
शमसुखसुधापानक्षैव्ये[१] समं हि महात्मनाम्॥

अत्र सकलविकल्परहिताभेदावभासमानात्मतत्त्वविश्रान्तिजनित-सर्वसाम्यसमुल्लसितशमसुखपीयूषपानोदितनित्यानन्दघूर्णमानमानसानां प्रिया प्रियसुखदुःखादिषु महतां सदृशी प्रतिपत्तिरिति जीवन्मुक्ति-समुचितमभिहितम्।

न तु यथा *श्रीमदुत्पलराजस्य*-

४५.अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा।

---

१.क्षैब्ये इति माधवशर्मा

तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित् पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥

अत्र जीवन्मुक्तोचितं प्रियाप्रियरागद्वेषोपशमलक्षणमोक्षक्षमं सर्वसाम्यमहिहारसुहृदरिसमदृष्टिरूपमभिदधता क्वचित् पुण्यारण्ये यदभिहितं तद्विकल्पप्रतिपादकमभेदवासनाविरुद्धमनुचितमवभासते। धाराधिरूढसर्व-साम्यविगलितभेदाभिमानग्रन्थेः हि सर्वत्र सर्वं शिवमयं पश्यतस्तपोवने नगरावस्करकूटे च विमलात्मलाभतृप्ततया समानदृशः क्वचित् पुण्यारण्यादिवचनमनुचितोच्चारणमेव।

**यथा मधुरतिक्ताद्या रसाः कुशलयोजिताः।**
**विचित्रास्वादतां यान्ति शृङ्गाराद्यास्तथा मिथः॥१७॥**
**तेषां परस्पराश्लेषात् कुर्यादौचित्यरक्षणम्।**
**अनौचित्येन संस्पृष्टः कस्येष्टो रससङ्करः॥१८॥**

रसाः कटुकमधुराम्ललवणाद्याः कुशलसूदेन वेसवारपानादिषु (शुण्ठ्यादिचूर्णपानादिषु) योजिता विचित्रास्वादतामुपयान्ति तथैव परम्परमविरुद्धाः शृङ्गारादय इति। तेषामन्योन्यमङ्गाङ्गिभावयोजनायामौ-चित्यस्य जीवितसर्वस्वभूतस्य रक्षां कुर्यात्। अनौचित्यरजसा रससंयोगः स्पृष्टो न कस्यचिदभिमत इत्यर्थः।

*रससङ्करौचित्ये* शान्तशृङ्गारयोरङ्गाङ्गिभावो *भगवतो महर्षेः व्यासस्य*

४६. सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गिलोलं हि जीवितम्।

अत्र भगवता जन्तुहिताभिनिविष्टेन मोक्षक्षमोपदेशे अङ्गिनः शान्तरसस्य रागिजनानिष्टत्वात् सकलजनमनः प्रह्लादने बालगुडजिह्विकया शृङ्गारेऽङ्ग-भावमुपनीते पर्यन्ते शान्तस्यैव लोलं जीवितमित्यनित्यताप्रतिपादन-परिनिर्वाहेण परमौचित्यमुच्चैः[१] कृतम्।

*बीभत्सशृङ्गारयोरङ्गाङ्गिभावो यथा मम बौद्धावदानकल्पलतायाम्-*

४७.क्षीबस्येवाचलस्य द्रुतहृतहृदया जम्बुकी कण्ठसक्ता
रक्ताभिव्यक्तकामा कमपि नखमुखोल्लेखमासूत्रयन्ती।
आस्वाद्यास्वाद्य यूनः क्षणमधरदलं दत्तदन्तव्रणाङ्कं
लग्नानङ्गक्रियायामिय मतिक्षरभसोत्कर्षमाविष्करोति॥

अत्र श्लेषोपमया तुल्यकक्षाधिरूढयोरपि परस्परविरुद्धयोरर्थयोः बीभत्सश्रृङ्गाराङ्गाङ्गिभावयोजनायां जम्बुकी तरुणशवस्य क्षीबस्येव निश्चलस्थितेः सहसैव हृतहृदयपद्मा कृष्टचित्ता वा, कण्ठे लग्ना शोणिते भृशमभिव्यक्तस्पृहा रक्ताभिव्यक्तकामा वा, नखोल्लेखमासूत्रयन्ती दत्तदन्तव्रणमधरमास्वाद्यास्वाद्य अङ्गच्छेदक्रियायामनङ्गभोगक्रियायां वा लग्ना गात्राणामूर्ध्वगतं कर्षणं रक्तकौशलोत्कर्षं वा, प्रकाशयतीति समानयोः बीभत्सश्रृङ्गारयोः कामिनीपदपरित्यागेन केवलं जम्बुक्याः कर्तुत्वेन बीभत्सस्यैव प्राधान्ये श्रृङ्गरेऽङ्गतामुपगते वक्तुर्बोधिसत्त्वस्यान्तर्गत-गाढवैराग्य वासनाधिवासितचेतसः कुत्साहर्जुगुप्सया नितम्बिनीरति-विडम्बनम् औचित्यरुचिरतामादधाति। यद्यप्यत्र महावाक्ये शान्तस्यैव प्राधान्यं तथाप्युदाहरणश्लोकवाक्ये बीभत्सस्यैव।

---

१.परममौचित्यम् इति माधवशर्मा

*वीरकरुणयोः* यथा मम *मुनिमतमीमांसायाम्-*

४८.गाण्डीवस्रुवमार्जनप्रणयिनः स्नातस्य बाष्पाम्बुभि-
श्चण्डं खाण्डवपावकादपि परं शोकानलं बिभ्रतः।
जिष्णोर्नूतनयौवनोदयदिनच्छिन्नाभिमन्योश्चिरं
हा वत्सेति बभूव सैन्धववधारब्धाभिचारे जपः॥

अत्र त्रिगर्तसङ्ग्रामगतस्य गाण्डीवधन्वनः शत्रुभिर्नवयौवनोदयसमयनिहत तनयस्य कार्मुकस्रुवमुन्मार्जयतः प्रसरदश्रुस्नातस्य शोकाग्निमुद्वहतश्चिरं हा पुत्रेति जयद्रथवधारब्धाभिचारे जपो बभूवेति यदुपन्यस्तं तेनारिक्षये दीक्षासमुचितव्रतवर्णनया शोकाग्नेश्चण्डत्वेन खाण्डवपदोदीरणेन वीररसस्याङ्गिनः सहसैवागन्तुके करुणरसे प्रज्वलिते सैन्धववधारब्धाभि-चाराभिधानेन पर्यन्ते शौर्यनिर्वाहेण परमौचित्यमुज्जृम्भते।

*शान्तश्रृङ्गारकरुणबीभत्सानां* यथा मम तत्रैव-

४९.तीक्ष्णान्तस्त्रीकटाक्षक्षतहृदयतया व्यक्तसंसक्तरक्ताः
क्रोधादिक्रूररोगव्रणगणगणनानीततीव्रव्यथार्ताः।
स्नेहक्लेदातिलग्नैः कृमिभिरिव सुतैः स्वाङ्गजैर्भक्ष्यमाणाः
संसारक्लेशशय्यानिपतिततनवः पश्य सीदन्ति मन्दाः॥

अत्र मुख्यस्याङ्गिनः शान्तरसस्यैवोद्दीपने कारणीभूताः तीक्ष्णान्तस्त्रीकटाक्षक्षतहृदयव्यथार्तस्नेहक्लेदातिलग्नकृमितुल्यतनयादि-पदोपादानेन श्रृङ्गारकरुणबीभत्साः शान्तमुखप्रेक्षिणः संलीनतया स्तिमितवृत्तयो भृत्या इव परमौचित्यं दर्शयन्ति।

## रससङ्करस्यानौचित्यम्

रससङ्करस्यानौचित्यमुद्भावयितुमाह। श्रृङ्गारशान्तयोः यथा अमरुकस्य-

५०.गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव दिनानि तिष्ठतु भवान् पश्यामि यावन् मुखम्।
संसारे घटिकाप्रणालविगलद्धारा समे जीविते
को जानाति पुनस्त्वया सह मम स्याद् वा न वा सङ्गमः॥

अत्र प्रकरणवर्तिनः श्रृङ्गाररसस्य पश्यामि यावन्मुखमित्युत्कण्ठोत्कण्ठासमुज्जृम्भमाणस्य स्वभावविरोधिनि शान्तेऽङ्गभावमुपनीते विस्तीर्णतरानित्यतावर्णनया वैराग्येण रतेर्न्यग्भावमापादयन्त्याप्रधानरससंबन्धेनाधिकमनौचित्यमुत्साहितम्। निःसारसंसाराचारुताश्रवणेन हि कठिनक्रियाक्रूरकोमलमनसां विलासवताम्। प्रान्ते च शान्तपरिपोषनिर्वाहिण रागवैरस्यमेव पर्यवस्यति।

तदुक्तमा*नन्दवर्धनेन*-

विरोधी वाविरोधी[१] वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यस्तेन स्यादविरोधिता॥ ध्वन्या. ३-८०

तदेवात्र वैपरीत्येनोपलभ्यते परिपोषविपरीते स्वभावविरोधिन्यपि प्रधानानुपरोध एव।

यथा *राजशेखरस्य*-

५१.माणं मुंचध देह वल्लहजणे दिट्ठिं तरंगुत्तरं
तारुण्णं दिअहाहं पंच दह वा पीणत्थणत्थंभणं।

१.वाऽविरोधी इति माधवशर्मा

इत्थं कोहलिमंजुसिंजिणमिसाद्देवस्स पंचेसुणो
दिण्णा चित्तमहूसवेण सहसा आणब्ब सब्बंकसा॥

(मानं मुञ्चत ददत वल्लभजने दृष्टिं तरङ्गोत्तरां
तारुण्यं दिवसानि पञ्च दश वा पीनस्तनस्तम्भनम्।
इत्थं कोकिलमञ्जुशिञ्जितमिषाद् देवस्य पञ्चेषो-
र्दत्ता चैत्रमहोत्सवेन सहसाज्ञेव सर्वङ्कषा॥) क.म.१-१८

अत्र मानं मुञ्चत, ददत वल्लभजने दुष्टिं तरङ्गितां, तारुण्यं दिनानि पञ्च दश वा पीनस्तनस्तम्भनमित्थं कोकिलमधुरध्वनिव्याजेन देवस्य पञ्चेषोश्चैत्रमहोत्सवेनाज्ञेव सर्वङ्कषा दत्ता इति वाक्ये मुख्यः श्रृङ्गाररसः प्रारम्भपर्यन्तव्याप्तिशाली कतिपयदिवसस्थायि यौवनमित्यनित्यतारूप-शान्तरसबिन्दुना मध्यब्रुडितेनेव विरसतां न नीतः। विरुद्धस्य परिपोषाभावात्। विरुद्धवर्णनोदितेन ह्यनौचित्येन स्थायी कुञ्जर इव श्वभ्रपातितः पुनरुत्थातुं नोत्सहत इत्यलं विस्तरेण। अनया दिशा रससङ्करे भेदप्रपञ्चौचित्यं विपश्चिद्भिः स्वयं विचार्यम्।

## ७. क्रियापदौचित्यम्

रसौचित्यविचारानन्तरम् उद्देशानुसारक्रमेण क्रमोपगतं क्रियापदौचित्यं दर्शयितुमाह-

**सगुणत्वं सुवृत्तत्वं साधुता च विराजते।**
**काव्यस्य सुजनस्येव यद्यौचित्यवती क्रिया॥१९॥**

काव्यस्य माधुर्यादिगुणवत्ता वसन्ततिलकादिसुवृत्तता परिपूर्णलक्षण साधुता च विराजते, यद्यौचित्ययुक्तं क्रियापदं भवति। सुजनस्येवेति तत्तुल्यत्वं स्पष्टार्थमेव।

क्रियापदौचित्यं यथा मम *नीतिलतायाम्*-

५२. यः प्रख्यातजवः सदा स्थितिविधौ सप्ताब्धिसन्ध्यार्चने
दोर्दर्पेण निनाय दुन्दुभिवपुर्यः कालकङ्कालताम्।
यः पातालमसृङ्मयं प्रविदधे निष्पिष्य मायाविनं
सुग्रीवाग्रविभूतिलुण्ठनपटुर्वाली स किं स्मर्यते॥

अत्र सप्ताब्धिसन्ध्यार्चनप्रख्यातजवो महिषरूपदुन्दुभिदानवोन्माथी मायाविदानवनिष्पेषोद्भूतशोणितपूरितपातालतलः स किं वाली स्मर्यत इति क्रियापदेन शुकसारणाभ्यां रावणस्य दुर्नयाभिनिवेशिनस्तद्विरामाय हितोपदेशेन भवान् वसनकोणनियमिततनुः कक्षायां निःक्षिप्त इत्युचित-युक्तियुक्तमुक्तं भवति।

न तु यथा श्रीप्रवरसेनस्य-

५३. सग्गं अपारिजाअं कोत्थु हलच्छिरहिअं महुमहस्स उरं।
सुमिरामि महणपुरओ अमुद्धअन्दं हरअडापब्भारं॥
(स्वर्गमपारिजातं कौस्तुभलक्ष्मीरहितं मधुमथनस्योरः।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम्॥) से.ब.४-२

अत्र जाम्बवताभिधीयमाने स्वर्गमपारिजातं कौस्तुभलक्ष्मीभ्यां विरहितं मधुमथनस्योरः स्मराम्यमृतमथनपुरतोऽप्यबालचन्द्रं हरजटाप्राग्भारम् इति प्रगुणाख्यानप्रसङ्गे क्रियापदेन जराजर्जरशरीरत्व-मात्रमेव प्रतिपादितम्। न तु पौरुषोत्कर्षविशेषातिशयः कश्चिदुचितः संसूचितः।

## ८. कारकौचित्यम्

कारकौचित्यं *दर्शयितुमाह-*

**सान्वयं शोभते वाक्यमुचितैरेव कारकैः।**
**कुलाभरणमैश्वर्यमौदार्यचरितैरिव ॥२०॥**

उचितैरेव कारकैः सदन्वयवद् वाक्यं विराजते सद्वंशभूषितमैश्वर्यं सच्चरितैरिव।

## कर्तृपदौचित्यम्

कर्तुपदौचित्यं यथा *भट्टबाणस्य-*

५४.स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥ कादं.परि.१०

अत्र शत्रुस्त्रियो व्रतं चरन्तीति वक्तव्ये, स्तनयुगं बाष्पसलिलस्नातं शोकाग्निसमीपवर्ति विमुक्तभोजनं विगतमुक्ताहारं च सद् व्रतं चरति इत्युक्ते कर्तुपदमौचित्यमुपचितं जनयति।

न तु यथा *परिमलस्य-*

५५.आहारं न करोति नाम्बु पिबति स्त्रैणं न संसेवते
शेते यत्[1] सिकतासु मुक्तविषयश्चण्डातपं सेवते।
त्वत्पादाब्जरजःप्रसादकणिकालोभोन्मुखस्तन्मरौ
मन्ये मालवसिंह! गुर्जरपतिस्तीव्रं तपस्तप्यते॥

---

१.या इति हरिहरप्रकाशम्

अत्र गुर्जरपतिर्विद्रुतो मरुगहनं प्रविष्टः परित्यक्ताहारादिसमस्त-विषयश्चण्डातपोपसेवी तपश्चरतीति यदुक्तं तत्कर्तृपदस्य विशेषाभिप्रायोचितं न किञ्चिदुपलक्ष्यते, शत्रुत्रासतरलतया मरुकान्तारान्तरावसन्नः सकल-विषयसुखभोगपरिभ्रष्टः किमन्यत् कुरुताम्। स्तनयुगवत्। कर्तृपदस्य चमत्कारोचितं न किञ्चिदभिहितम्।

## कर्मपदौचित्यम्

कर्मपदौचित्यं यथा मम *लावण्यवत्याम्*-

५६.सदा सक्तं शैत्यं विमलजलधारापरिचितं
घनोल्लासः क्षमाभृत्पृथुकटकपाती वहति यः।
विधत्ते शौर्यश्रीश्रवणनवनीलोत्पलरुचिः
स चित्रं शत्रूणां ज्वलदनलतापं भवदसिः॥

अत्र निश्चलममलजलधारागतं शैत्यं तैक्ष्ण्यं शीतलत्वं च, घनोल्लासो निबिडोत्साहः पर्जन्यतुल्योदयश्च, क्षमाभृतां सानुसैन्यनिपाती वहति स शौर्यश्रीश्रवणनवनीलोत्पलतुल्यः त्वत्खड्गश्चित्रं शत्रूणां सन्तापं करोतीति यदुक्तं तत्कर्मभूतस्य तापस्य शिशिरतरसामग्रीजन्मनः परं वैचित्र्यं रुचिरमौचित्यमासूत्रितम्।

न तु यथा *ममैवावसरसारे*-

५७.भग्नाहितश्वसितवातविबोध्यमानः
काष्ठाश्रयेण सहसैव विवृद्धिमाप्तः।
तापं तनोति निहतारिविलासिनीनां
वह्निर्द्युतिर्भुवननाथ! भवत्प्रतापः॥

अत्र विद्रुताराातिनिःश्वसितानिलप्रबोध्यमानः काष्ठाश्रयेण दिक्चक्रपूरणेन प्रौढतां प्राप्तः पावकतुल्यस्त्वत्प्रतापः शत्रुकान्तानां तापमात्रं तनोतीति तत् समुचितमाश्चर्यं च किञ्चित्।

## करणौचित्यम्

करणौचित्यं यथा *गौडकुम्भकारस्य*-

५८.लाङ्गूलेन गभस्तिमान् वलयितः प्रोतः शशी मौलिना
व्याधूता जलदाः सटाभिरुडवो दंष्ट्राभिरुत्तम्भिताः।
प्रोत्तीर्णो जलधिर्दृशैव हरिणा स्वैराट्टहासोर्मिभि-
र्लङ्केशस्य च लङ्घितो दिशि दिशि प्राज्यः प्रतापानलः॥

अत्र हरिणा हनुमता जलनिधितरणे तरणिर्लाङ्गूलेन वलयितः किरीटप्रान्तेन शशी प्रोतः सटाभिर्मेघा व्याधूतास्तारा दंष्ट्राभिरायासितास्तीर्णोऽब्धिर्दृष्ट्यै वाट्टहासतरङ्गैः लङ्केशस्य विस्तीर्णः प्रतापाग्निः शमित इति बहुभिः करणपदैरुत्साहाधिवासितैः विस्मयशिखरारोहणसोपानैरिव रघुपतिप्रभावारम्भविजयध्वजायमानस्य पवनसूनोरौचित्यातिशयः प्रकाशितः।

न तु *भट्टबाणस्य*-

५९.जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद् भिन्नमिवास्रपाटलम्॥

कादं. प्र. ३

अत्र भगवतो नृसिंहस्य कोपरक्तया दृष्ट्यैव क्षणलब्धलक्ष्यया हिरण्यकशिपोर्वक्षः स्वयं भयाद् भिन्नमिवेति यदुक्तं तन्महोत्साहपराक्रमस्य

प्रतिनायकस्य रिपोः प्रधाननायकप्रतापोद्दीपनोपकरणीभूताधिकधैर्यस्य स्वयं भयविह्वलतया हृदयस्फुटनमित्युपचितमनौचित्यं दृशैव करणपदस्य शिरसि विश्रान्तम्।

## सम्प्रदानौचित्यम्

सम्प्रदानौचित्यं यथा *भट्टप्रभाकरस्य*-

६०. दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमः
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम्।।

अत्र दिग्गजचतुरस्त्रा भूः साध्यते, सा च सिद्धो हेलयैवान्नमुष्टिरिवैकस्मै विप्रमात्राय प्रतिपाद्यत इति निरतिशयौदार्याश्चर्यचमत्काररुचिरौचित्य-चर्वणया वयं रोमाञ्चाञ्चिताः पश्यत, रोमाञ्चस्य प्रत्यक्षपरिदृश्यमानत्वात् किमपरमपूर्वत्यागिने भार्गवाय तस्मै नम इति विप्राय इति सम्प्रदानपद-गत[1] एव उत्कर्षविशेषः प्रकाशते।

न तु यथा *राजशेखरस्य*-

६१. पौलस्त्यः प्रणयेन याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति।
तद्वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम्।। बा.रा.२-२०

१. सम्प्रदानगत इति माधवशर्मा

अत्र रावणदूतेन परशुं याचितो भार्गवो ब्रूते 'नैष हरप्रसादलब्धः परशुर्दानयोग्यः। तत्तस्मादस्मद्वचसा स दशग्रीवो वाच्यः। पृथ्वी मया कश्यपाय प्रतिपादिता। तुभ्यं पातालत्रिदिवयोर्मध्यात् किं निर्जित्य दीयताम्' इत्यनुचितं मुनेर्लोकहितप्रवृत्तस्य त्रैलोक्यकण्टकभूताय राक्षसाय भुवनप्रतिपादनम्।

## अपादानौचित्यम्

अपादानौचित्यं यथा *मालवरुद्रस्य*-

६२. एतस्माज्जलधेर्मिताम्बुकणिकाः काश्चिद् गृहीत्वा ततः
पाथोदाः परिपूरयन्ति जगतीं रुद्धाम्बरा वारिभिः।
भ्राम्यन्मन्दरकूटकोटिघटनाभीतिभ्रमत्तारकां
प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युतः॥

अत्र यदुक्तमेतस्मान् महोदधेः परिमिताम्बुकणिकाः प्राप्य जलदा जगत् पूरयन्ति तथा भ्रमन्मन्दरकूटकोटिसंघट्टत्रासतरलतारकामेकां जलमानुषीं श्रियं प्राप्य श्रीमानच्युतोऽभूदिति तेन सागरगतनिरतिशयोत्कर्ष विशेषः प्रदर्शितः। एतस्माज् जलधेरित्येतत्पदमौचित्यस्य मूलभूमिः।

न तु यथा भट्टेन्दुराजस्य-

६३. आदाय वारि परितः सरितां मुखेभ्यः
किं नाम साधितमनेन महार्णवेन।
क्षारीकृतं च वडवादहने हुतं च
पातालमूलकुहरे विनिवेशितं च॥

अत्र महार्णवव्यपदेशेन अन्यायोपार्जितद्रविणदुर्व्ययकारिणः सत्संविभागविमुखस्य कस्यचिदुच्यते। सरितां मुखेभ्यः समन्तात् तोयमादायापात्रेभ्यः प्रतिपादितं दूषितम्। यत्त्वत्र सरिद्भ्यः समादायेति वक्तव्ये सरिन्मुखेभ्यः इति यदुक्तं मुखशब्दस्य नैरर्थक्यादत्रानौचित्यमेव पर्यवस्यति।

## अधिकरणौचित्यम्

अधिकरणौचित्यं यथा *कुन्तेश्वरदौत्ये कालिदासस्य*-

६४.इह निवसति मेरुः शेखरः क्ष्माधराणां
इह विनिहितभाराः सागराः सप्त चान्ये
इदमहिपतिभोगस्तम्भविभ्राज्यमानं
धरणितलमिहैव स्थानमस्मद्विधानाम्॥

अत्र महाराजदूतोऽपि सामन्तास्थाने स्वप्रभुसमुचितगौरवपूजार्हमासनमनासाद्य कार्यवशेन भूमावेवोपविष्टः प्रागल्भ्यगाम्भीर्येणैवं ब्रूते यथास्मद्विधानां वसुधातल एव भुजगपतिभोगस्तम्भप्राग्भारनिष्कम्पे धरासने स्थानं युक्तं यस्मादिहैव मेरुरचलक्रवर्ती समुपविष्टः सप्तमहाब्धयश्च तत्तुल्यता एव अस्माकमित्यौचित्यमधिकरणपदसम्बद्धमेव।

न तु यथा *परिमलस्य*-

६५.तत्र स्थितं स्थितिमतां वर! देव! दैवाद्
भृत्येन ते चकितचित्तमियन्त्यहानि।
उत्कम्पिनि स्तनतटे हरिणेक्षणानां
हारान् प्रवर्तयति यत्र भवत्प्रतापः॥

अत्र त्वद्भृत्येन मया तत्र तस्मिन् देशे स्थितं यत्र भवत्प्रतापः कम्पतरलस्तनतटे हरिणदृशां हारान् प्रवर्तयतीति यदुक्तं तेन शौर्यश्रृङ्गार-गुणोत्कर्षस्तुतौ सर्वतो दिग्गमनाविच्छिन्नप्रसरः प्रतापः पारिमित्यं प्राप्तः। एकत्र परिच्छिन्ने देशे मया तत्र स्थितं यत्र त्वत्प्रतापस्तरुणीस्तनतटेषु हारतरलनं करोत्यन्यदेशे विलक्षणमुपलक्षणम्। सर्वगतश्चेत्प्रतापः तत् सर्वत्रैव मया स्थितमिति वक्तव्ये तत्रेत्येकदेशाभिधायि पदं नोपपद्यते। दस्युमात्रस्याप्येकदेशे जृम्भमाणप्रतापत्वात्। तदत्राधिकरणपदगतमनौ-चित्यमुपलभ्यते। तत्र तत्र मया स्थितं यत्र यत्र भवत्प्रताप इत्येव स्तुत्युचितं युक्तमुक्तं स्यात्।

## ९. लिङ्गौचित्यम्

लिङ्गौचित्यं दर्शयितुमाह-

**उचितेनैव लिङ्गेन काव्यमायाति भव्यताम्।**
**साम्राज्यसूचकेनेव शरीरं शुभलक्ष्मणा॥२१॥**

प्रस्तुतार्थोचितेन लिङ्गेन काव्यं भव्यतामुपयाति, राजलक्षणेनेव शरीरम्।

यथा मम *ललितरत्नमालायाम्*-

६६.निद्रां न स्पृशति त्यजत्यपि धृतिं धत्ते स्थितिं न क्वचित्
दीर्घां वेत्ति कथां व्यथां न भजते सर्वात्मना निर्वृतिम्।
तेनाराधयता गुणस्तव जपध्यानेन रत्नावलीं
निःसङ्गेन पराङ्गनापरिगतं नामापि नो सह्यते॥

अत्र वत्सेश्वरस्य रत्नावलीविरहविधुरचेतसः स्मरावस्थासमुचितं विदूषकेण सुसंगतायै यदभिहितं निद्रां न स्पृशति, धृतिं त्यजति, स्थितिं

न धत्ते, दीर्घां कथां व्यथामिव वेत्ति, निर्वृतिं न भजते, तां विना तेन तद्गुणजापिना तद्ध्याननित्येन जनसङ्गत्यागिनान्यासामङ्गनानां नाममात्रमपि न सह्यते। स्थितिधृतिकथानिर्वृतीनां स्त्रीलिङ्गाभिधानेनाङ्गनात्वाध्यारोपेण परमौचित्यं प्रतिपादितम्।

न तु यथा मम *नीतिलतायाम्*-

६७. वरुणरणसमर्था स्वर्गभङ्गैः कृतार्था
यमनियमनशक्ता मारुतोन्माथसक्ता।
धनदनिधनसज्जा लज्जते मर्त्ययुद्धे
दहनदलनचण्डा मण्डली मद्भुजानाम्॥

अत्र रावणः कपिनिकारामर्षविषमविकाराविष्कारोचितं ब्रूते। वरुणादिलोकपालविशालबलावलेपविप्लवकारिणी मर्त्यमात्रयुद्धे लज्जते प्रचण्डा मद्भुजमण्डलीति स्त्रीलिङ्गेन निर्देशस्त्रैलोक्यविजयोर्जितस्य प्रतापस्य कठोरतामपहरन् अनौचित्यं सूचयति।

## १०. वचनौचित्यम्

वचनौचित्यं दर्शयितुमाह-

**उचितैरेव वचनैः काव्यमायाति चारुताम्।**
**अदैन्यधन्यमनसां वदनं विदुषामिव॥२२॥**

उचितैरेकवचनद्विवचनबहुवचनैः काव्यं चारुतामायाति। अदैन्योदारचेतसां विदुषामिव वदनमयाच्ञारुचिरौचित्यचारुभिर्वचोभिः।

यथा मम *नीतिलतायाम्*-

६८.त्रैलोक्याक्रमणैर्वराहविजयैर्निःसंख्यरत्नाप्तिभिः
प्रख्यातः स्वरसस्वयंवरशतैर्युद्धाब्धिमध्ये श्रियः।
साश्चर्यैर्बलिबन्धनैश्च बहुभिर्नित्यं हसत्युत्थितः
पौलस्त्यः सकृदुद्यमश्रमवशाद् व्यासक्तनिद्रं हरिम्॥

अत्र शुकसारणाभ्यां रघुपतेरग्रे दशग्रीवपराक्रमेऽभिधीयमाने यदुक्तं पौलस्त्यः शेषशायिनं हरिमेकवारोद्योगश्रमवशेन संसक्तालस्यनिद्रमेकत्रैलोक्याक्रमणैर्वराहविजयिनां सुभटानां जयैरनेकरत्नाप्राप्तिभिः समरसमुद्रमध्ये बहुवारविहितैः श्रियः स्वयंवरशतैः बलिनां च लोकपालानां बन्धनैः प्रख्यातः सदोत्थितः सोत्साहः सततं हसति इति बहुवचनैः एव हरिवैलक्षण्यलक्षणमुपचितमौचित्यमुदञ्चितम्।

न तु यथा मातृगुप्तस्य-

६९. नायं निशामुखसरोरुहराजहंसः
कीरीकपोलतलकान्ततनुः शशाङ्कः।
आभाति नाथ तदिदं दिवि दुग्धसिन्धु-
डिण्डीरपिण्डपरिपाण्डु यशस्त्वदीयम्॥

अत्र नायं शशी, त्वदीयमिदं दुग्धाब्धिफेनपिण्डपाण्डुरं यश इति यदभिहितं तदविच्छिन्नप्रसराणां यशसां बहुवचनेन वर्णनायां समुचितायामेकवचनोपन्यासः चन्द्रबिम्बाकारेण पिण्डमात्रपरिच्छिन्नतया सङ्कोचरूपमनौचित्यमुद्भावयति।

## ११. विशेषणौचित्यम्

विशेषणौचित्यं दर्शयितुमाह-

**विशेषणैः समुचितैर्विशेष्योऽर्थः प्रकाशते।**
**गुणाधिकैर्गुणोदारः सुहृद्भिरिव सज्जनः॥२३॥**

काव्ये विशेष्योऽर्थः समुचितैरेव विशेषणैः शोभां लभते। गुणोदारः साधुर्यथाभ्यधिकगुणैः सुहृद्भिः।

यथा मम *मुनिमतमीमांसायाम्*-

७०.चैत्रे सूत्रितयौवनान्युपवनान्यामोदिनी पद्मिनी
ज्योत्स्नाप्रावरणानि रत्नवलभीहर्म्याणि रम्याः स्त्रियः।
सर्वं चारुतरं न कस्य दयितं यस्मिंस्तु तद् भुज्यते
तन् मृन्निर्मितमामभाजनमिव क्षिप्रक्षयं जीवितम्॥

अत्र युधिष्ठिरस्यासादितमहाविभूतेः मयनिर्मितमणिमयसभाभिमानिनो विभवप्रभावे वर्ण्यमाने सकलभावाभावस्वरूपाभाववादोपदेशिनो महामुनेराशयविचारावसरे यदुक्तं कुसुमसमयसमुपचितयौवनान्युपवनानि, मकरन्दामोदसुन्दरारविन्दिनी, ज्योत्स्नापटप्रावृतानि रत्नवलभीहर्म्याणि, रमणीया रमण्यश्चेति सर्वमेतच् चारुतरं सर्वस्याभिमतम्। किन्तु यस्मिन् भुज्यते तज्जीवितमाममृत्पात्रनिःसारं क्षिप्रक्षयमिति तद्विशेष्यपदोत्कर्षकारि विशेषणपदोदितसौन्दर्येण पर्यन्तनिःसारतानिर्वेदसंवादि स्फुरदौचित्यमातनोति।

न तु यथा *भट्टलट्टनस्य*-

७१.ग्रीष्मं द्विषन्तु जलदागममर्थयन्तां
ते सङ्कटप्रकृतयो विकटास्तडागाः।
अब्धेस्तु मुग्धशफरीचटुलाचलेन्द्र
निष्कम्पकुक्षिपयसो द्वयमप्यचिन्त्यम्॥

अत्र ग्रीष्मं द्विषन्तु, मेघागमं सङ्कटस्वभावा विकटा विस्तीर्णाश्च तटाकाः प्रार्थयन्ताम्, महाब्धेस्तु बालशफरीलोलाचलेन्द्रनिश्चल-कुक्षिपयसो ग्रीष्मघनागमौ अप्यगणनीयौ इति यदुक्तम्, तत्र तडागविशेषणयोः सङ्कटविकटपदयोः परस्परविरुद्धार्थयोः अनौचित्यं स्पष्टमवभासते। सङ्कटस्वभावस्य हि विकटत्वं विस्तीर्णत्वं नोपपद्यते। अथ स्वभावे सङ्कटत्वमाकारे विपुलत्वं तदपि तटाकस्य निश्चेतनस्य स्वभावाभावाद् अनुपपन्नमेव।

## १२. उपसर्गौचित्यम्

उपसर्गौचित्यं दर्शयितुमाह-

**योग्योपसर्गसंसर्गैर्निरर्गलगुणोचिता।**
**सूक्तिर्विवर्धते सम्पत् सन्मार्गगमनैरिव॥२४॥**

उचितैः प्रादिभिरुपसर्गैः सूक्तिरुन्नतिमासादयति। विभूतिरिव सन्मार्गगमनैः।

यथा मम *मुनिमतमीमांसायाम्*-

७२. आचारं भजते त्यजत्यपि मदं वैराग्यमालम्बते
कर्तुं वाञ्छति सङ्गभङ्गगलितोत्तुङ्गाभिमानं तपः।

दैवन्यस्तविपर्ययैः सुखाशिखाभ्रष्टः प्रणष्टो जनः
प्रायस्तापविलीनलोहसदृशीमायाति कर्मण्यताम्॥

अत्र दुर्योधनस्य घोषयात्रायां गन्धर्वबन्धपराभवभग्नाभिमानस्य प्राज्य-साम्राज्यमुत्सृज्य तपः प्रयत्नाभिनिर्दिष्टस्य[1] दुर्ग्रहे वर्ण्यमाने यदुक्तं, सर्वो जनः सुखभ्रष्टः प्रणष्टविभवः सदाचारं भजते, मदं त्यजति, वैराग्यमाश्रयति, सङ्गभङ्गेन विगलितोत्तुङ्गाभिमानं तपः कर्तुं वाञ्छति, प्रायो बाहुल्येन तापविगलितलोहपिण्डसदृशीं कर्मण्यतामायाति अत्रोत्पूर्वतया सोपसर्गस्य तुङ्गशब्दस्य स्वभावोन्नतिः द्विगुणतामुपयाता दुर्मदाभिमानार्थौचित्यमुच्चैः करोति।

न तु यथा *कुमारदासस्य*-

७३.अयि! विजहीहि! दृढोपगूहनं त्यज! नवसङ्गमभीरु! वल्लभम्।
अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः॥ जा.ह.

अत्र अभिनवानङ्गसंगमगाढमालिङ्गनिश्चालाङ्गच्छन्नाङ्गनाप्रबोधने सख्या यदुक्तं वल्लभं मुञ्च प्रभातसन्ध्यायाम् अरुणकिरणोद्गमो वर्तते, कुक्कुटाश्च संप्रवदन्ति इति, तत्र संप्रोपसर्गशून्यशब्दापूरणमात्रेण निरर्थकत्वादनुचितमेव।

## १३.निपातौचित्यम्

निपातौचित्यं दर्शयितुमाह-

**उचितस्थानविन्यस्तैर्निपातैरर्थसङ्गतिः।**
**उपादेयैर्भवत्येव सचिवैरिव निश्चला॥२५॥**

१.प्रयत्नाभिनिविष्टस्य इति माधवशर्मा

उपादेयैश्चादिभिर्निपातैरुचितपदविनिवेशितैः काव्यस्य अर्थसङ्गतिरसंदिग्धा सत्सहायैरिव भवति।

यथा मम *मुनिमतमीमांसायाम्*-

७४. सर्वे स्वर्गसुखार्थिनः क्रतुशतैः प्राज्यैर्यजन्ते जडा-
स्तेषां नाकपुरे प्रयाति विपुलः कालः क्षणार्धं च तत्।
क्षीणे पुण्यधने स्थितिर्न तु यथा वेश्यागृहे कामिनां
तस्मान् मोक्षसुखं समाश्रयत! भोः सत्यं च नित्यं च यत्॥

अत्र स्वर्गसुखस्य वेश्याभोगवदवसानविरसचपलतायां प्रतिपादितायां निश्चलमोक्षसुखस्य। निःसन्देहनिश्चिता प्रतिपत्तिः निपातपदोपबृंहिता वाक्यार्थौचित्यं जनयति।

न तु यथा *श्रीचक्रस्य*-

७५.देवो जानाति सर्वं यदपि च तदपि ब्रूमहे नीतिनिष्ठं
सार्धं सन्धाय जालान्तरधरणिभुजा निर्वृतो बान्धवेन।
म्लेच्छानुच्छिन्धि! भिन्धि! प्रतिदिनमयशो रुन्धि! विश्वं यशोभिः
सोदन्वन्मेखलायां परिकलय! करं किं च विश्वम्भरायाम्॥

अत्र क्षितिपतिस्तुतिप्रस्तावे देवो जानाति सर्वं यदपि च तदपि इति यदुक्तं तत्र पूर्वापरपदयोरसंबद्धत्वेन निरर्थक एव निरुपयोगश्चकारः प्रततोत्सव बहुजनभोजनपङ्क्तौ अपरिज्ञातः स्वयमेव मध्ये समुपविष्टः पश्चादभिव्यक्तः परं लज्जादुर्मना[१] इवानौचित्यं प्रतनोति।

---

१.दुर्मनौचित्यम् इति माधवशर्मा

## १४. कालौचित्यम्

कालौचित्यं दर्शयितुमाह-

**कालौचित्येन यात्येव वाक्यमर्थेन चारुताम्।**
**जनावर्जनरम्येण वेषेणेव सतां वपुः ॥२६॥**

कालकृतौचित्ययुक्तेनार्थेन वाक्यं चारुतामेति वेषपरिग्रहेणेव कालयोग्येन सतामवसरज्ञानां वपुः।

यथा मम *मुनिमतमीमांसायाम्*-

७६. योऽभूद् गोपशिशुः पयोदधिशिरश्चौरः करीषङ्कष-
स्तस्यैवाद्य जगत्पते! खगपते! शौरे! मुरारे! हरे!।
श्रीवत्साङ्क! जडैरिति स्तुतिपदैः कर्णौ नृणां पूरितौ
ही! कालस्य विपर्ययप्रणयिनी पाकक्रियाश्चर्यभूः॥

अत्र अमर्षविषविषमाविष्कारमुमूर्षुणा शिशुपालेन अभिधीयमाने यत् किल गोपालबालः पयोदधिशिरश्चौरः करीषंकषोऽभूत् तस्यैवाद्य जगन्नाथादिभिः स्तुतिपदैर्नृणां कर्णौ पूरितौ, ही! बत!, कालस्य विपर्ययकारिणी पाकक्रियाश्चर्यभूमिः इति। तत्राभूद् इतिभूतकालेन आश्चर्यपरिपोषरुचिरमारब्धाधिक्षेपलक्षणं वाक्यौचित्यं कृतम्।

यथा वा मालवकुवलयस्य-

७७. च्युतसुमनसः कुन्दाः पुष्पोद्गमैरलसा द्रुमा
मनसि च गिरं गृह्णन्तीमे किरन्ति न कोकिलाः।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम्॥

अत्र शिशुतरवसन्तकान्तोपवननवरसोल्लाससूच्यमान मनसिजोत्कण्ठा-वर्णनायाम् ऋतुसन्धिसमुचिताः कुन्दाः कुसुमावसानशून्यतनवः किंशुकाशोकाः कलिकोद्गमभरालसाः, मनसि कोकिलाः कलकूजितानि अनुसंदधति, रवेर्मरीचयः शीतोल्लासमथ च निवारयन्ति न च सन्तापदायिनीं प्रौढतामालम्बन्ते, इत्युक्ते वर्तमानकालपदेषु एव हृदयसंवादसुन्दरमौचित्यं किमप्यामोदते।

यथा वा *भट्टभल्लटस्य*-

७८.मृत्योरास्यमिवाततं धनुरिदं मूर्च्छद्विषाश्चेषवः
शिक्षा सा विजितार्जुना प्रतिलयं सर्वाङ्गलग्ना गतिः।
अन्तः क्रौर्यमहो शठस्य मधुरं[1] हा हारि गीतं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम्॥ भ.श.९७

अत्र लुब्धकस्य धनुः सायकशिक्षागतिक्रौर्यगीतानि तथा यथा वनं निर्मृगं भविष्यति इति भविष्यत्कालः प्रकृतार्थपरिपोषेण हृदयसंवादौचित्यमादधाति।

न तु यथा *वराहमिहिरस्य*-

७९.क्षीणश्चन्द्रो विशति तरणेर्मण्डलं मासि मासि
लब्ध्वा काञ्चित् पुनरपि कलां दूरदूरानुवर्ती।
सम्पूर्णश्चेत् कथमपि तदा स्पर्धयोदेति भानो-
र्नो दौर्जन्याद् विरमति जडो नापि दैन्याद् व्यरंसीत्॥

अत्र रवेर्मण्डलं क्षीणः शशी प्रतिमासं प्रविशति ततः

१.मधुनो इति माधवशर्मा

काञ्चिदाप्यायिकां कलां प्राप्य दूरे दूरे भवति। परिपूर्णश्च तस्यैव स्पर्धयाभ्युदेति। दौर्जन्यान् न विरमति न च दैन्याद् व्यरंसीत् इति एतौ विरमति व्यरंसीत् इति परम्परासङ्गतं कालपदद्वयं चन्द्रस्य सदृशयोः दौर्जन्यदैन्ययोः सर्वकालमभिनिर्वृत्तयोः यदुपन्यस्तं तत्र व्यरंसीदिइति विरुद्धार्थत्वाद् अनुचितमेव।

## १५. देशौचित्यम्

देशौचित्यं दर्शयितुमाह-

**देशौचित्येन काव्यार्थः ससंवादेन शोभते।**

**परं परिचयाशंसी व्यवहारः सतामिव॥२७॥**

देशविषयौचित्येन हृदयसंवादिना काव्यार्थः सतां व्यवहार इव परिचयसूचकः शोभते।

यथा *भट्टभवभूतेः*-

८०. पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥ उ.रा. २-२७

अत्र बहुभिः वर्षसहस्रैरतिक्रान्तैः शम्बूकवधप्रसङ्गेन दण्डकारण्यं रामः पूर्वपरिचितं पुनः प्रविष्टः समन्तादवलोक्य एवं ब्रूतेपुरा यत्र नदीनां प्रवाहस्तत्रेदानीं तटम्, वृक्षाणां घनविरलत्वे विपर्ययश्चिराद् दृष्टं वनमिदम-

पूर्वमिव मन्ये, पर्वतसंनिवेशस्तु तदेवैतद् इति बुद्धिं स्थिरीकरोति इत्युक्ते चिरकालविपर्ययपरिवृत्तसंस्थानकाननवर्णनया हृदयसंवादी देशस्वभावः परमौचित्यम् उद्योतयति।

न तु यथा राजशेखरस्य-

८१.कर्णाटीदशनाङ्कितः शितमहाराष्ट्रीकटाक्षाहतः
प्रौढान्ध्रीस्तनपीडितः प्रणयिनीभ्रूभङ्गवित्रासितः।
लाटीबाहुविवेष्टितश्च मलयस्त्रीतर्जनीतर्जितः
सोऽयं संप्रति राजशेखरकविर्वाराणसीं वाञ्छति॥

अत्र कर्णाटमहाराष्ट्रान्ध्रलाटमलयललनासम्भोगसुभगः कालेन गलितरागमोहः सम्प्रति राजशेखरकविः वाराणसीं गन्तुमिच्छति इत्युक्ते श्रृङ्गाररसतरङ्गितवराङ्गनाप्रसङ्गेऽनङ्गनिरर्गलदक्षिणापथदेशोद्देशमध्ये प्रणयिनीभ्रूभङ्गवित्रासित इति देशोपलक्षणविरहितकेवलप्रणयिनीपदेन देशौचित्यमुपचितमप्यनुचिततां नीतम्।

## १६. कुलौचित्यम्

कुलौचित्यं दर्शयितुमाह-

**कुलोपचितमौचित्यं विशेषोत्कर्षकारणम्।**
**काव्यस्य पुरुषस्येव प्रियं प्रायः सचेतसाम्॥ २८॥**

पुरुषस्येव काव्यस्य कुलोन्नतमौचित्यं सविशेषोत्कर्षजनकं प्रायेण बाहुल्येन सहृदयानामभिमतम्।

यथा *कालिदासस्य*-

८२.अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तथा सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्।। रघु.३-७०

अत्र अथ स राजा वृद्धस्तरुणाय सूनवे राज्यं प्रतिपाद्य तया देव्या सह तपोवनं भेजे। विरक्तचेतसामिक्ष्वाकूणामन्ते हि कुलव्रतमिदमेव इति उक्ते भूतवर्तमानभाविनां तद्वंश्यानामौचित्यमुन्मीलितम्।

न तु यथा *यशोवर्मदेवस्य*-

८३. उत्पत्तिर्भण्डकुले यदभीष्टं तत्पदं समाक्रान्तम्।
भोगास्तथापि दैवात् सकृदपि भोक्तुं न लभ्यन्ते।।

अत्र ममोत्पत्तिर्भण्डकुले समीहितपदाक्रमणं च निष्पन्नं तथापि दैवार्पितप्रियाविप्रयोगाद् भोगा भोक्तुं न लभ्यन्त इत्यभिहिते स्वसंवेद्यमेव भण्डकुलमन्यत्राप्रसिद्धं स्वयमेव निर्दिश्यमानम् उत्कर्षविशेषणविरहित-केवलपदोपादानेन निरर्थकतया निरौचित्यमेव। इक्ष्वाकुकुलस्य तु निर्वि-शेषणत्वमुपपद्यत एव त्रिभुवनप्रसिद्धौचित्यचरित्रत्वात्।

## १७. व्रतौचित्यम्

व्रतौचित्यं दर्शयितुमाह-

**काव्यार्थः साधुवादार्हः सद्व्रतौचित्यगौरवात्।**
**सन्तोषनिर्भरं भक्त्या करोति जनमानसम्।।२९।।**

काव्यार्थः समुचितव्रतगौरवात् साधुवादयोग्यः सन्तोषपूर्णं जनमनः करोति। भक्तिः विच्छित्तिः।

यथा मम *मुक्तावलीकाव्ये*-

८४.अत्र वल्कलजुषः पलाशिनः पुष्परेणुभरभस्मभूषिताः।
लोलभृङ्गवलयाक्षमालिकास्तापसा इव विभान्ति पादपाः॥

अत्र तपोधनोचितव्रतव्यञ्जकवल्कलभस्माक्षसूत्रप्रणयिपादपवर्णनायामचेतनानामपि शमसमयविमलचित्तवृत्तिः औचित्यमुपजनयति।

न तु यथा *दीपकस्य*-

८५.पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीकपाली-
मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम्।
द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः॥

अत्र वैराग्यनिरर्गलवर्णनायां भिक्षाकपालीमादाय क्षुत्क्षामः कुक्षिपूरणाय प्रवृत्तो मानी वरं द्वारं द्वारं यष्टिनिविष्टपाणिः परिभ्रान्तो न पुनरनिशं तुल्यकुल्येषु दीन इत्युक्ते सहजप्रशमविमलमानसविश्रान्तिसन्तोषमुत्सृज्य तुल्यकुल्यद्वेषविजिगीषापरमेव वाक्यं भृशमनौचित्यमुद्भवायति। वरमेतत् तीव्रव्रतकष्टं न तु स्वजनदैन्ययाचनमिति संसारग्रन्थिबन्धाभिमानोपन्यासः।

## १८. तत्वौचित्यम्

तत्त्वौचित्यं दर्शयितुमाह-

**काव्यं हृदयसंवादि सत्यप्रत्ययनिश्चयात्।**
**तत्त्वोचिताभिधानेन यात्युपादेयतां कवेः॥३०॥**

तत्त्वोचिताख्यानेन कवेः सूक्तं सत्यप्रत्ययस्थैर्यात् संवादि गृह्यतां याति। यथा मम *बौद्धावदानलतिकायाम्-*

८६. दिवि भुवि फणिलोके शैशवे यौवने वा
जरसि निधनकाले गर्भशय्याश्रये वा।
सहगमनसहिष्णोः सर्वथा देहभाजां
न हि भवति विनाशः कर्मणः प्राक्तनस्य ॥

अत्र प्राक्तनस्य कर्मणः त्रैलोक्ये शैशवयौवनवृद्धत्वावस्थासु देहिनां सहगमने समर्थत्वात् न विनाशोऽस्ति इत्युक्ते निःसंशयसकलजनहृदय-संवादितत्त्वाख्यानमौचित्यं ख्यापयति।

न तु यथा *माघस्य-*

८७. बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते[१]।
न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवार्जय! निष्फलाः कलाः॥

अत्र आर्यार्थार्थितापरत्वेन धनमेवार्जय, क्षुधितैर्व्याकरणं न भुज्यते, न काव्यरसः पिपासितैः पीयते, न च विद्यया कुलं केनचिद् उद्धृतम् इत्युक्ते सर्वमेतद् दारिद्र्यदैन्यविद्रुतधैर्यकातरतया तत्त्वविरहितं विपरीत-मुपन्यस्तमनौचित्यं सुव्यक्तमेव। विद्यानामेव सर्वसम्पत्प्रसविनीनां कुलोद्धरणक्षमत्वं नान्यस्य।

## १९. सत्त्वौचित्यम्

सत्त्वौचित्यं दर्शयितुमाह-

**चमत्कारं करोत्येव वचः सत्वोचितं कवेः।**
**विचाररुचिरोदारचरितं सुमतेरिव ॥३१॥**

१. न पीयते काव्यरसः पिपासितैः

सत्वोचितं कवेर्वचश्चमत्कारं करोति सुमतेरिव विचार्यमाणं रुचिरमुदारचरितम्।

यथा मम *चित्रभारते* नाटके-

८८. नदीवृन्दोद्दामप्रसरसलिलापूरिततनुः
स्फुरत्स्फीतज्वालानिबिडवडवाग्निक्षतजलः।
न दर्पं नो दैन्यं स्पृशति बहुसत्त्वः पतिरपा-
मवस्थानां भेदाद् भवति विकृतिर्नैव महताम्॥

अत्र पयोधिव्यपदेशेन युधिष्ठिरस्य सत्त्वोत्कर्षेऽभिधीयमाने सरित्पूरप्रवर्धिततनुर्वडवाग्निनिष्पीतश्च नोत्सेकं न सङ्कोचम् अब्धिर्विपुलसत्वः स्पृशति। न ह्यवस्थानां भेदाद् महाशयानां विकारो भवति इत्युक्ते गम्भीरधीरा सत्ववृत्तिरौचित्यमातनोति।

न तु यथा *भट्टेन्दुराजस्य*-

८९. आश्चर्यं वडवानलः स भगवानाश्चर्यमम्बोनिधि-
र्यत्कर्मातिशयं विचिन्त्य मनसः कम्पः समुत्पद्यते।
एकस्याशयघस्मरस्य पिबतस्तृप्तिर्न जाता जलै-
रन्यस्यापि महात्मनो न वपुषि स्वल्पोऽपि जातः श्रमः॥

अत्र वडवानलसमुद्रयोः सत्त्वमहत्त्वे वक्ष्यमाणे नातिविपुलाशयत्वाद् एकस्य पिबतः पयोभिः तृप्तिर्न जाता, द्वितीयस्य तदुपजीव्यमानस्य न मनागपि खेदः तदेतदुभयमाश्चर्यमित्युक्ते निःसन्तोषतया सततया च कस्य न वडवाग्नेः लज्जा। न च जलनिधेराश्रितैकार्थिपूरणसामर्थ्यमित्यसत्त्वे सत्त्वस्तुतिः अनौचित्यमावहति।

## २०. अभिप्रायौचित्यम्

अभिप्रायौचित्यं दर्शयितुमाह-

**अकदर्थनया सूक्तमभिप्रायसमर्पकम्।**
**चित्तमावर्जयत्येव सतां स्वस्थमिवार्जवम्॥३२॥**

अक्लेशेन अभिप्रायसमर्पकं काव्यं हृदयमावर्जयति सज्जनानां निर्मलमार्जबम् इव।

यथा *दीपकस्य*-

९०.श्येनाङ्घ्रिग्रहदारितोत्तरकरो ज्याङ्कप्रकोष्ठान्तर-
श्चाताम्राधरपाणिपादनयनप्रान्तः पृथूरःस्थलः।
मन्येऽयं द्विजमध्यगो नृपसुतः कोऽप्यम्ब! निःशम्बलः
पुत्र्येवं यदि कोष्ठमेतु सुकृतैः प्राप्तो विशेषातिथिः॥

अत्र स्वैररमणी रमणीयं दिनावसाने युवानं पथिकमालोक्य अभिप्रायसूचकं जननीमेवं ब्रूते। यदसौ राजपुत्राकृतिः श्येनग्रहनाराच-परिचयोचितः सायंसमये प्राप्तः इत्युक्ते मात्रापि अभिप्रायपूरकमभिहितम्। पुत्रि यद्येवं तत्कोष्ठाङ्कं प्रविशतु सुकृतैर्विशेषोऽतिथिः प्राप्तः पूज्यः इत्येतेन स्फुटाभिप्रायसूचकम् औचित्यमुपचितम् आचकास्ति।

न तु यथा अस्यैव-

९१.अयि विरहविचित्ते! भर्तुरर्थे तथार्ता
सपदि निपतिता त्वं पादयोश्चाण्डिकायाः।
स्वयमुपहितधूपस्थालकच्छत्रशृङ्गो-
द्दलितमपि ललाटं येन नैवाललक्षे॥

अत्र विनयवत्याः सुचिरात् पत्यावागते ललाटनखोल्लेखा-पह्नववचने सख्या समुपदिश्यमाने, हे विरहोन्मत्ते भर्तुरर्थे चण्डिकापादपतने स्वयं स्थापितधूपस्थालकोटिक्षतमपि न लक्षिते[1] भवत्या ललाटमित्युक्तौ स्वैरापह्नवशिक्षामात्रमेव उपलक्ष्यते। न तु तस्याः सख्याः वा कश्चिदभिप्रायविशेषः।

## २१. स्वभावौचित्यम्

स्वभावौचित्यं दर्शयितुमाह-

**स्वभावौचित्यमाभाति सूक्तीनां चारु भूषणम्।**
**अकृत्रिममसामान्यं लावण्यमिव योषिताम्॥३३॥**

स्वभावोचितत्वं कविवाचामाभरणमाभाति। अकृत्रिममनन्यसामान्यं लावण्यमिव ललानानाम्।

यथा मम *मुनिमतमीमांसायाम्*-

९२.कर्णोत्तालितकुन्तलान्तनिपतत्तोयक्षणासङ्गिना
हारेणेव वृतस्तनी पुलकिता शीतेन सीत्कारिणी।
निर्धौताञ्जनशोणकोणनयना स्नानावसानेऽङ्गना
प्रस्यन्दत्कबरीभरा न कुरुते कस्य स्पृहार्द्रं मनः॥

अत्र व्याससूनोः शुकस्य गाढवैराग्यनिःसङ्गस्य गगनगङ्गातीरे स्नानोत्तीर्णाः त्रिदशयोषितो विवसनाः तद्दर्शननिःसङ्कोचाः पश्यतः प्रशमविमलमनसः स्मरव्यतिकरनिर्विकारतायां प्रतिपाद्यमानायां कण-मूलोत्क्षिप्तालकपर्यन्तनिपतत्तोयकणसन्तानेन स्तनयोः कृतमुहूर्तहारविभ्रमा

१.लक्षितम् इति माधवशर्मा

शीतेन, रोमाञ्चसीत्कारिणी, धौताञ्जनारुणनयनान्ता, प्रस्रवन्मुक्तकेश-कलापा स्नानोत्तीर्णा तरुणी कस्य स्पृहार्द्रं न मनः करोति इत्युक्ते स्वयमार्द्र स्वभावः परमप्यार्द्रीकरोति इत्युचितमेतत्।

न तु यथा मम तत्रैव-

९३.भक्तिः कातरतां क्षमा सभयतां पूज्यस्तुतिर्दीनतां
धैर्यं दारुणतां मतिः कुटिलतां विद्याबलं क्षोबताम्।
ध्यानं वञ्चकतां तपः कुहकतां शीलव्रतं षण्ढतां
पैशुन्यव्रतिनां तपः गिरां किमिव वा नायाति दोषार्द्रताम्॥

अत्र पिशुनस्वभावे वर्ण्यमाने भक्त्यादीनां गुणानां वैपरीत्ये प्रतिपादिते पिशुनानां वचसां किं वा दोषार्द्रतां नायाति इत्यभिहिते स्वयमनार्द्रस्वभावस्य परार्द्रीकरणमनुचितमेव।

## २२. सारसङ्ग्रहौचित्यम्

सारसंग्रहौचित्यं दर्शयितुमाह-

**सारसङ्ग्रहवाक्येन काव्यार्थः फलनिश्चितः।**
**अदीर्घसूत्रव्यापार इव कस्य न संमतः॥३४॥**

सारसङ्ग्रहवाक्येन काव्यार्थः सुनिश्चितफलः शीघ्रकारिण इव व्यापारः कस्य नाभिमतः।

यथा मम *मुनिमतमीमांसायाम्*-

९४.विविधगहनगर्भग्रन्थसम्भारभारै-
र्मुनिभिरभिनिविष्टैस्तत्वमुक्तं न किञ्चित्।

कृतरुचिरविचारं सारमेतन् महर्षे-
रहमिति भवभूमिर्नाहमित्येव मोक्षः॥

अत्र भगवद्गीतार्थविचारो सारसङ्ग्रहोऽभिहितः, यत् किल मुनिभिरनेकभेदभिन्नशास्त्रजडैरभिनिविष्टमतिभिस्तत्वमुपादेयं न किञ्चित् कथितम्। भगवतो महर्षेर्व्यासस्य सुमतेर्विमलविचारोत्तीर्णं निश्चितमेतदेव यदहङ्कारः संसारमूलभूमिः, ममतापरित्याग एव मोक्ष इति तत्संक्षेपेण भवक्षयोपदेशः प्रकृतार्थस्य परमौचित्यं पुष्णाति।

न तु यथा *परिव्राजकस्य*-

९५. तपो न तप्तं वयमेव तप्ता भोगा न भुक्ता वयमेव भुक्ताः।
जरा न जीर्णा वयमेव जीर्णास्तृष्णा न याता वयमेव याताः॥

अत्र वयमेव तप्ता भुक्ता जीर्णा याता इत्युक्ते निःसाराचारुत्वाद् अपर्यवसितो वाक्यार्थः फलशून्यतया सारसङ्ग्रहोचितं न किञ्चित् प्रतिपादयति।

## २३. प्रतिभौचित्यम्

प्रतिभौचित्यं दर्शयितुमाह-

**प्रतिभाभरणं काव्यमुचितं शोभते कवेः।**
**निर्मलं सुगुणस्येव कुलं भूतिविभूषितम्॥३५॥**

प्रतिभालङ्कृतकवेः काव्यमुचितं गुणवतः कुलमिव विमलं लक्ष्म्या प्रकाशितं शोभते।

यथा मम *लावण्यवत्याम्*-

९६.अदय! दशसि किं त्वं बिम्बबुद्ध्याधरं मे
भव चपल निराशः पक्वजम्बूफलानाम्।
इति दयितमवेत्य द्वारदेशाप्तमन्या
निगदति शुकमुच्चैः कान्तदन्तक्षतौष्ठी॥

अत्र कयापि द्वारदेशाप्तं प्रियं ज्ञात्वा अन्यकामुकदशनखण्डितौष्ठ्या सम्पति तदागमनानभिज्ञयेव शुकमुद्दिश्य यदुक्तं निर्दय किं त्वं बिम्बफललोभादधरं मम विदारयसि, पक्वानां जम्बूफलानामिदानीं चपल निराशो भव, कुपिता तुभ्यं नो दास्यामि इति, तेनोच्चैः प्रत्यायनापह्नवनवोन्मेषप्रज्ञा चातुर्यचारुवचनमौचित्यचमत्कारं करोति।

यदाह भट्टतौतः - प्रज्ञा नववोन्मेषशालिनी प्रतिभा मता इति।

न तु यथा मम तत्रैव-

९७.निर्याते दयिते गृहे विशयने निर्माल्यमाल्ये हृते
प्राप्ते प्रातरसह्यरागिणि परे वारावहारेऽन्यया।
द्वारालीनविलोचना व्यसनिनी सुप्ताहमेकाकिनी-
त्युक्त्वा नीविविकर्षणः[1] स चरणाघातैरशोकीकृतः॥

अत्र वेश्या व्यालग्नकामुकस्य वारावहारं विधाय, नवकामुकेन सह क्षपायां नीतायां, प्रभाते तस्मिन् निर्याते, शय्याकुसुमादिसम्भोगलक्षणे निवारिते, वारवञ्चनकुपिते गाढानुरागग्रहग्रस्तमतौ पूर्वकामुके प्राप्ते,

---

१.विकर्षणैः इति माधवशर्मा

त्वदालोकनकाङ्क्षिणी व्यसनिनी द्वारन्यस्तनयना अहमेकाकिनी सुप्ता इति प्रत्यायनावचनविलीनमन्युः सरभससरसनीविकर्षणोद्यताकृतिः कृतेर्ष्याकोपया चरणनलिनप्रहारैः अशोकीकृतः, शङ्काशल्योन्मूलनात् निःशोकः सम्पादितः, सन्तत-पुलकाङ्कुरत्वाद् अशोकतरुतुल्यतां नीतः इति वा वाक्यार्थः। केवलासत्यविप्रलम्भप्रागल्भ्यमात्रमेव गणिकाया गाढरागमूलतां च प्रतिपादयति। न तु प्रतिभोद्भूतामौचित्यकणिकां सूचयति।

## २४. अवस्थौचित्यम्

अवस्थौचित्यं दर्शयितुमाह-

**अवस्थोचितमाधत्ते काव्यं जगति पूज्यताम्।**
**विचार्यमाणरुचिरं कर्तव्यमिव धीमताम्॥३६॥**

अवस्थोचिततया काव्यं जगति श्लाघ्यतामायाति मतिमतामिव कृत्यं विचारनिर्घर्षरुचिरम्।

यथा मम *लावण्यवत्याम्*-

९८. मुक्तः कन्दुकविभ्रमस्तरलता त्यक्तैव बाल्योचिता
मौग्ध्यं निर्धुतमाश्रिता गजगतिर्भ्रूलास्यमभ्यस्यते।
यन्नर्मोर्मिषु निर्मितं मृगदृशा वैदग्ध्यदिव्यं वच-
स्तद् विद्मः सुभगाभिमानलटभाभावे निबद्धो भरः॥

अत्र यदुक्तं कन्दुकक्रीडा त्यक्ता, बालचापल्यं परिहृतं मौग्ध्यं निरस्तं, गजगतिरङ्गीकृता, भ्रूलतालास्याभ्यासः क्रियते, नर्मोर्मिषु वचनवैचित्र्यमा-

सूत्रितं तेन जानीमहे शैशवावस्थां समुत्सृजन्त्या यौवनमाश्रयन्त्या प्रौढतामनारूढयापि नवसम्भोगगौरवगर्भेण सुभगाभि मानेन लटभाभावे बालयाभरो निबद्ध इत्यभिहिते स्फुटमृदुसम्बद्धायां[1] वयोवस्थामध्यसन्धि-वर्णनायामौचित्यं स्फुरदिवावभासते।

न तु यथा *राजशेखरस्य*-

९९. ज्यायान् धन्वी नवधृतधनुस्ताम्रहस्तोदरेण
क्षत्रक्षोदव्यतिकरपटुस्ताटकाताडकेन।
कर्णाभ्यर्णस्फुरितपलितः क्षीरकण्ठेन सार्धं
योद्धुं वाञ्छन् न कथममुना लज्जते जामदग्न्यः॥ बा.रा.४-१

अत्र भार्गवः स्थविरावस्थास्थितः स्थिरतरपराक्रमकर्कशप्रौढो धनुर्धरः शिशुना रामेण धनुर्ग्रहणारुणितकोमलकरकमलतलेन क्षत्रियक्षयसंरम्भप्रगल्भः ताटकाताडकेन, स्फुरदाकर्णपलितः सम्भाव्यमानजननीस्तनक्षीरकण्ठेनामुना युयुत्सुः कथं न लज्जते इत्युक्ते पेशलतया राघवावस्थायां जामदग्न्यावस्था-विपरीतायां प्रतिपाद्यमानायां ताटकाताडकेन इति विरुद्धाधिवासोऽर्थः किमप्यनौचित्येन चेतसि सङ्कोचमादधाति।

## २५. विचारौचित्यम्

विचारौचित्यं दर्शयितुमाह-

**उचितेन विचारेण चारुतां यान्ति सूक्तयः।**
**वेद्यतत्वावबोधेन विद्या इव मनीषिणाम्॥३७॥**

---

१. स्फुटद्वयो इति माधवशर्मा

विचारौचित्येन सूक्तयश्चारुतां यान्ति ज्ञेयस्वरूपज्ञानेन विद्या इव विदुषाम्।

यथा मम *मुनिमतमीमांसायाम्*-

१००.अश्वत्थामवधाभिधानसमये सत्यव्रतोत्साहिना
मिथ्या धर्मसुतेन जिह्मवचसा हस्तीति यद् व्याहृतम्।
सा सत्यामृतरश्मिवैरमसमं संसूचयन्त्याः सदा
शङ्के पङ्कजसंश्रयेण मलिनारम्भा विजृम्भा श्रियः॥

अत्र द्रौणनिधनाख्याने सत्यव्रतोत्साहवता धर्मतनयेनापि मिथ्या लघुवचसा कुञ्जर इति यदुक्तं सा सततं सत्यचन्द्रद्वेषं सूचयन्त्याः श्रियः शङ्के पङ्कजसंश्रयेण मलिनव्यापारा विजृम्भा इत्यभिहिते ससंवादलक्ष्मीस्वभावपरिभावनतया तत्त्वावबोधेन मूलविश्रान्त्या फलपर्यवसायी विचारः सहृदयसंवेद्यमौचित्यं व्यनक्ति।

न तु यथा मम तत्रैव-

१०१.प्रम्लाने चिरकालवृत्तदयिताकेशाम्बराकर्षणे
क्रूरं राक्षसवैशसं यदि कृतं भीमेन दुःशासने।
तत्कालक्षमिणा कुशाश्मपरुषारण्यप्रवासे चिरं
किं पीतं तत तापमग्नमहिषस्वेदाम्बुपृक्तं पयः॥

अत्र भीमसेनचरिते विचार्यमाणे त्रयोदशवर्षपर्युषिते कृष्णाकेशाकर्षणपराभवे भीमेन भीमं राक्षसकर्म दुःशासने यदि कृतं तत् सद्यः कृतार्द्रापराधकालक्षमिणा सुचिरं दर्भसूचीविषमाश्मपरुषवनवासे किं ग्रीष्मतापनिमग्न-

महिषस्वेदस्रुतिपृक्तं पयः इत्यनुपपन्नकृत्ये अभिहिते कारणविचाराभावात् निर्मूलोपालम्भमात्रमनौचित्यम् अनुबध्नाति।

### २६. नामौचित्यम्

नामौचित्यं दर्शयितुमाह-

**नाम्ना कर्मानुरूपेण ज्ञायते गुणदोषयोः।**
**काव्यस्य पुरुषस्येव व्यक्तिः संवादपातिनी॥३८॥**

काव्यस्य कर्म औचित्यं, तेन नाम्ना पुरुषस्येव गुणदोषव्यक्तिः संवादिनी ज्ञायते।

यथा *कालिदासस्य*-

१०२.इदमसुलभवस्तुप्रार्थनादुर्निवारः
प्रथममपि मनो मे पञ्चबाणः क्षिणोति।
किमुत मलयवातान्दोलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु॥ वि.उ.२-६

अत्र प्रारम्भ एव ममेदं मनः पञ्चबाणः सुदुर्लभवस्तुप्रार्थनादुर्निवारः शकलीकरोति। किमुत लीलोद्यानसहकारैर्मलयानिलान्दोलित-बालपल्लवैरङ्कुरेषु दर्शितेषु इत्युक्ते मदनस्य पञ्चबणाभिधानमुचितमेव।

यथा वा मम *बौद्धावदानलतायाम्*-

१०३.तारुण्येन निपीतशैशवतया सानङ्गशृङ्गारिणी
तन्वङ्ग्या सकलाङ्गसङ्गमसखी भङ्गिर्नवाङ्गीकृता।
निःसंरम्भपराक्रमः पृथुतरारम्भाभियोगं विना
साम्राज्ये जगतां यया विजयते देवो विलासायुधः॥

अत्र यौवननिपीतशैशवतया तन्वङ्ग्यानङ्गश्रृङ्गारवती सर्वाङ्गसङ्गमसखी सा काप्यभिनवा भङ्गिरङ्गीकृता यया निष्प्रयत्नपराक्रमः प्रभूततरारम्भसम्भारं विहाय, त्रिभुवनसाम्राज्ये जयति देवो विलासायुध इत्युक्ते कामस्य विलासायुध इति नामोपपन्नमेव। तन्वङ्गीभङ्ग्यैव सिद्धत्रैलोक्याधिपत्यविजिगीषायां कामसायकादीनां नैरर्थक्यात्।

न तु यथा *कालिदासस्य*-

१०४.क्रोधं प्रभो! संहर संहरेति यावद् गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥ कु.सं.३-७२

अत्र पश्यतो भगवतः त्रिनेत्रस्य स्मरशरनिपातक्षोभे वर्ण्यमाने तन्निकार-कोपशमाय संहर संहर प्रभो क्रोधमिति यावद् वचः खे देवानां चरति, तावद् भवनेत्रोद्भवः स वह्निः मदनं भस्मराशिशेषमकार्षीद् इत्युक्ते संहारावसरे रुद्रस्य भवाभिधानमनुचितमेव।

## २७. आशीर्वचनौचित्यम्

आशीर्वचनौचित्यं दर्शयितुमाह-

**पूर्णार्थदातुः काव्यस्य सन्तोषितमनीषिणः।**
**उचिताशीर्नृपस्येव भवत्यभ्युदयावहा॥३९॥**

सम्पूर्णार्थसमर्पकस्य सन्तोषितविदुषः काव्यस्य नृपतेरिवोचितम् आशीः पदमभ्युदयावहं भवति।

यथा अस्म*दुपाध्यायगङ्गकस्य*-

१०५.स कोऽपि प्रेमार्द्रः प्रणयपरिपाकप्रचलितो

विलासोऽक्ष्णां देयात् सुखमनुपमं वो मृगदृशाम्।
यदाकूतं दृष्ट्वा पिदधति मुखं तूणविवरे
निरस्तव्यापारा भुवनजयिनः पञ्च विशिखाः॥

अत्र स कोऽप्यसामान्यप्रेमप्रणयविश्रान्तिप्रगल्भकुरङ्गदृशां निरुपमो नयनविलासः सुखं वो देयात् यदभिप्रायमालोक्य भुवनविजयिनः कामस्य पञ्चसायकाः समाप्तव्यापाराः तूणीरविवरे लज्जयेव मुखं पिदधति इत्युक्ते सुखं वो देयाद् इत्याशीःपदम् उचितमेव, प्रियानयनविभ्रमस्य सुखार्पणयोग्यत्वात्।

यथा वा मम *वात्स्यायनसूत्रसारे*-

१०६.कामः कामं कमलवदनानेत्रपर्यन्तवासी
दासीभूतत्रिभुवनजनः प्रीतये जायतां वः।
दग्धस्यापि त्रिपुररिपुणा सर्वलोकस्पृहार्हा
यस्याधिक्यं रुचिरतितरामञ्जनस्येव याता॥

अत्र कामः प्रीतये वो जायतां यस्य दग्धस्याप्यञ्जनस्य इव आधिक्यं रुचिर्याता इत्युक्ते, प्रीतये जायताम् इत्युचितं, कामस्य प्रीत्यात्मकत्वात्।

न तु यथा अमरुकस्य-

१०७.आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां सीकरैः।
तन्वङ्ग्या सुतरां रतान्तसमये वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः। अ.श.३

अत्र तन्व्या रतिव्यत्यये लोलालकं चलत्कुण्डलं स्वेदसलिलेन किञ्चिदुन्मृष्टतिलके यद् मुखं तत् त्वां पातु किं हरिहरस्कन्दादिभिर्दैवतैः इत्युक्ते पातु त्वामित्यनुचितम्, आनन्दयतु त्वामित्युचितं स्यात्। अन्येषु काव्याङ्गेषु अनयैव दिशा स्वयमौचित्यमुत्प्रेक्षणीयम्। तदुदाहरणानि आनन्त्यात् न प्रदर्शितानि इत्यलमतिप्रसङ्गेन।

## उपसंहारः

आसीत् प्रकाशेन्द्र इति प्रकाशः काश्मीरदेशे त्रिदशेश्वरश्रीः।
अभूद् गृहे यस्य पवित्रसत्रमच्छिन्नमग्रासनमग्रजानाम्॥१॥

यः श्रीस्वयम्भूभवने विचित्रे लेप्यप्रतिष्ठापितमातृचक्रः।
गोभूमिकृष्णाजिनवेश्मदाता तत्रैव काले तनुमुत्ससर्ज॥२॥

तस्यात्मजः सर्वमनीषिशिष्यः श्रीव्यासदासापरपुण्यनामा।
क्षेमेन्द्र इत्यक्षयकाव्यकीर्तिश्चक्रे नवौचित्यविचारचर्चाम्॥३॥

श्रीरत्नसिंहो सुहृदि प्रयाते शार्वं पुरं श्रीविजयेशराज्ञि।
तदात्मजस्योदयसिंहनाम्नः कृते कृतस्तेन गिरां विचारः॥४॥

यस्यासिः परिवारकृत् त्रिभुवनप्रख्यातशीलश्रुतेः
सर्वस्यावनतेन येन नितरां प्राप्ता विशेषोन्नतिः।
आशाः शीतलतां नयत्यविरतं यस्य प्रतापानल-
स्तस्य श्रीमदनन्तराजनृपतेः काले किलायं कृतः॥५॥

**इति श्रीप्रकाशेन्द्रात्मजव्यासदासापराख्यश्रीक्षेमेन्द्रकृता**
**औचित्यविचारचर्चा समाप्ता।**

* * * * *

# II. कविकण्ठाभरणम्

## कवित्वप्राप्तिर्नाम प्रथमः सन्धिः

जयति जितसुधाम्भः सम्भवद्वाग्भवश्री-
रथ सरससमुद्यत्कामतत्वानुभावा।
तदनु परमधामध्यानसंलब्धमोक्षा
रविशशिशिखिरूपा त्रैपुरी मन्त्रशक्तिः ।।१ ।।

शिष्याणामुपदेशाय विशेषाय विपश्चिताम्।
अयं सरस्वतीसारः क्षेमेन्द्रेण प्रदर्श्यते ।।२ ।।

तत्राकवेः कवित्वाप्तिः शिक्षा प्राप्तगिरः कवेः।
चमत्कृतिश्च शिक्षाप्तौ गुणदोषोद्गतिस्ततः ।।३ ।।

पश्चात् परिचयप्राप्तिरित्येते पञ्च संधयः।
समुद्दिष्टाः क्रमेणैषां लक्ष्यलक्षणमुच्यते ।।४ ।।

सुविभक्तिसमन्वितं बुधैर्गुणसंयुक्तममुक्तसौष्ठवैः।
रचितं पदकैः सुवर्णवत् कविकण्ठाभरणं विचार्यताम्।।५ ।।

अथेदानीमकवेः कवित्वशक्तिरुपदिश्यते प्रथमं तावद् दिव्यः प्रयत्नः ततः पौरुषः।

ॐ स्वस्त्यङ्कं स्तुमः सिद्धमन्तराद्यमितीप्सितम्।
उद्यदूर्जप्रदं देव्या ऋॠऌॡनिगहनम्[1] ।।६ ।।

---

१.निगूहणम् इति सुरभारतीप्रकाशनम्

एकमैश्वर्यसंयुक्तमोजोवर्धनमौषधम्।
अन्तरान्तःकलाखण्डगलद्धनसुधाङ्कितम्॥७॥

चन्द्रोच्छलज्जलं प्रोज्झदज्ञानं टठसंयुतम्।
डम्बरप्रौढकिरणं तथतां दधदुन्नतम्॥८॥

परं फलप्रदं बद्धमूलोद्धवमयं वपुः।
रम्यं लघुवरं शर्म वर्षत् सर्वसहाक्षरम्॥९॥

एतां नमः सरस्वत्यै यः क्रियामातृकां जपेत्।
क्षेममैन्द्रं स लभते भव्योऽभिनववाग्भवम्॥१०॥

श्वेतां सरस्वतीं मूर्ध्नि चन्द्रमण्डलमध्यगाम्।
अक्षराभरणां ध्यायेद् वाङ्मयामृतवर्षिणीम्॥११॥

त्रिकोणयुगमध्ये तु तडित्तुल्यां प्रमोदिनीम्।
स्वर्गमार्गोद्गतां[1] ध्यायेत् परमामृतवाहिनीम्॥१२॥

निर्विकारां निराकारां शक्तिं ध्यायेत् परात्पराम्।
एषा बीजत्रयी वाच्या त्रयी वाक्काममुक्तिसूः॥१३॥

काव्यक्रियेच्छाङ्कुरमूलभूमिमन्विष्य विश्रान्तिलवेन मोक्षः।
अन्यावधाने मदनस्य मोक्षस्तृतीयबीजे सकलेऽस्ति मोक्षः॥

**अथ पौरुषः।**

तत्र त्रयः शिष्याः काव्यक्रियायामुपदेश्याः। अल्पप्रयत्नसाध्यः, कृच्छ्रसाध्यः, असाध्यश्चेति।

---

१.स्वर्गमार्गोद्यताम् इति सुरभारती प्रकाशनम्

तत्र प्रथमः -

कुर्वीत साहित्यविदः सकाशे श्रुतार्जनं काव्यसमुद्भवाय।
न तार्किकं केवलशाब्दिकं वा कुर्याद् गुरुं सूक्तिविकासविघ्नम्॥१५॥

विज्ञातशब्दागमनामधातुश्छन्दोविधाने विहितश्रमश्च।
काव्येषु माधुर्यमनोरमेषु कुर्यादखिन्नः श्रवणाभियोगम्॥१६॥

गीतेषु गाथास्वथ देशभाषाकाव्येषु दद्यात् सरसेषु कर्णम्।
वाचां चमत्कारविधायिनीनां नवार्थचर्चासु रुचिं विदध्यात्॥१७॥

रसे रसे तन्मयतां गतस्य गुणे गुणे हर्षवशीकृतस्य।
विवेकसेकस्वकपाकभिन्नं मनः प्रसूतेऽङ्कुरवत् कवित्वम्॥१८॥

अथ द्वितीयः-

पठेत् समस्तान् किल कालिदासकृतप्रबन्धानितिहासदर्शी।
कास्याधिवासप्रथमोद्गमस्य रक्षेत् पुरस्तर्किकगन्धमुग्रम्॥१९॥

महाकवेः काव्यनवक्रियायै तदेकचित्तः परिचारकः स्यात्।
पदे च पादे च पदावशेषसंपूरणेच्छां मुहुराददीत॥२०॥

अभ्यासहेतोः पदसंनिवेशैर्वाक्यार्थशून्यैर्विदधीत वृत्तम्।
श्लोकं परावृत्तिपदैः पुराणं यथास्थितार्थं परिपूरयेच् च॥२१॥

तत्र वाक्यार्थशून्यं यथा-

१.आनन्दसन्दोहपदारविन्दकुन्देन्दुकन्दोदितबिन्दुवृन्दम्।
इन्दिन्दिरान्दोलितमन्दमन्दनिष्यन्दनन्दन्मकरन्दवन्द्यम्॥

परावृत्तिपदैर्यथा-

२.वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥ रघु.१-१

३. वाण्यर्थाविव संयुक्तौ वाण्यर्थप्रतिपत्तये।
जगतो जनकौ वन्दे शर्वाणीशशिशेखरौ॥

अथ तृतीयः -

यस्तु प्रकृत्याश्मसमान एव कष्टेन वा व्याकरणेन नष्टः।
तर्केण दग्धोऽनलधूमिना वाप्यविद्धकर्णः सुकविप्रबन्धैः॥२२॥

न तस्य वक्तृत्वसमुद्भवः स्याच् छिक्षाविशेषैरपि सुप्रयुक्तैः।
न गर्दभो गायति शिक्षितोऽपि संदर्शितं पश्यति नार्कमन्धः॥२३॥

इति ततसुकृतानां प्राक्तनानां विपाके
भवति शुभमतीनां मन्त्रसिद्धं कवित्वम्।
तदनु पुरुषयत्नैर्धीमतामभ्युदेति
स्फुरति जडधियां श्रीशारदा साधनेन॥२४॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते *कविकण्ठाभरणे* *कवित्वप्राप्तिः* प्रथमः सन्धिः।**

* * * * *

प्राप्तगिरः कवेः *शिक्षाकथनं* नाम द्वितीयः सन्धिः

**छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी।**
**भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः॥१॥**

छायोपजीवी यथा *भट्टभल्लटस्य*-

४.नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम्॥ भ.श.४

यथा च श्रीमदुत्पलराजदेवस्य-

५.मात्सर्यतीव्रतिमिरावृतदृष्टयो ये
ते कस्य नाम न खला व्यथयन्ति चेतः।
मन्ये विमुच्य गलकन्दलमिन्दुमौले-
र्येषां सदा वचसि वल्गति कालकूटः॥

पदकोपजीवी यथा मुक्ताकणस्य-

६. यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः॥

यथा *चैतद्भ्रातुश्चक्रपालस्य-*

७.सरस्यामेतस्यामुदरबलिवीचीविलुलितं
यथा लावण्याम्भो जघनपुलिनोल्लङ्घनकरम्।
यथा लक्ष्यश्चायं चलनयनमीनव्यतिकर-
स्तथा मन्ये मग्नः प्रकटकुचकुम्भः स्मरगजः॥

पादोपजीवी यथामरकस्य-

८. गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव दिनानि तिष्ठतु भवान् पश्यामि यावन् मुखम्।
संसारे घटिकाप्रणालविगलद्वारा समे जीविते
को जानाति पुनस्त्वया सह मम स्याद् वा न वा सङ्गमः॥

यथा मम-

९. हंहो स्निग्धसखे विवेक बहुभिः प्राप्तोऽसि पुण्यैर्मया
गन्तव्यं कतिचिद् दिनानि भवता नास्मत्सकाशात् क्वचित्।
त्वत्सङ्गेन करोमि जन्ममरणोच्छेदं गृहीतत्वरः
को जानाति पुनस्त्वया सह मम स्याद् वा न वा सङ्गमः॥

सकलोपजीवी यथार्य*भट्टस्य-*

१०. शब्दैर्निसर्गकटुभिर्मलिनस्वभावाः
श्रोत्रं खला निगडवत् परितस्तुदन्ति।
श्रव्यैरलुप्तपदबन्धतयातिमञ्जु-
मञ्जीरवत् तु सजुना जनयन्ति मोदम्॥

यथा च *भट्टबाणस्य*-

११. कटु क्वणन्तो मलदायकाः
खलास्तुदन्त्यलं बन्धनश्रृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे
हरन्ति सन्तो मणिनूपुरा इव॥ कादं.प्र.६.

भुवनोपजीव्यो यथा भगवान् व्यास।

तथा चोक्तम्-

१२. इदं कविवरैः सर्वैराख्यानमुपजीव्यते।
उदयं प्रेप्सुभिर्भुत्यैरभिजात इवेश्वरः॥ म.भा.

प्राप्तगिरः कवेः शिक्षास्तावदाह-

**व्रतं सारस्वतो यागः पूर्वं विघ्नेशपूजनम्।**
**विवेकशक्तिरभ्यासः सन्धानं प्रौढिरश्रमः॥२॥**

**वृत्तपूरणमुद्योगः पाठः परकृतस्य च।**
**काव्याङ्गविद्याधिगमः समस्यापरिपूरणम्॥३॥**

**सहवासः कविवरैर्महाकाव्यार्थचर्वणम्।**
**आर्यत्वं सुजनैर्मैत्री सौमनस्यं सुवेषता॥४॥**

**नाटकाभिनयप्रेक्षा श्रृङ्गारालिङ्गिता मतिः।**
**कवीनां सम्भवे दानं गीतेनात्माधिवासनम्॥५॥**

लोकाचारपरिज्ञानं विविक्ताख्यायिकारसः।
इतिहासानुसरणं चारुचित्रनिरीक्षणम्॥६॥

शिल्पिनां कौशलप्रेक्षा वीरयुद्धावलोकनम्।
शोकप्रलापश्रवणं श्मशानारण्यदर्शनम्॥७॥

व्रतिनां पर्युपासा च नीडायतनसेवनम्।
मधुरस्निग्धमशनं धातुसाम्यमशोकता॥८॥

निशाशेषे प्रबोधश्च प्रतिभा स्मृतिरादरः।
सुखासनं दिवा शय्या शिशिरोष्णप्रतिक्रिया॥९॥

आलोकः पत्रलेख्यादौ गोष्ठीप्रहसनज्ञता।
प्रेक्षा प्राणिस्वभावानां समुद्राद्रिस्थितीक्षणम्॥१०॥

रवीन्दुताराकलनं सर्वर्तुपरिभावनम्।
जनसम्धाभिगमनं देशभाषोपजीवनम्॥११॥

आधानोद्धरणप्रज्ञा कृतसंशोधनं मुहुः।
अपराधीनता यज्ञसभाविद्यागृहस्थितिः॥१२॥

अतृष्णता निजोत्कर्षे परोत्कर्षविमर्शनम्।
आत्मश्लाघा श्रुतौ लज्जा परश्लाघानुभाषणम्॥१३॥

सदा स्वकाव्यव्याख्यानं वैरमत्सरवर्जनम्।
परोन्मेषजिगीषा च व्युत्पत्त्यै सर्वशिष्यता॥१४॥

पाठस्यावसरज्ञत्वं श्रोतृचित्तानुवर्तनम्।
इङ्गिताकारवेदित्वमुपादेयनिबन्धनम्॥१५॥

उपदेशविशेषोक्तिरदीर्घरससङ्गतिः।
स्वसूक्तप्रेषणं दिक्षु परसूक्तपरिग्रहः ॥१६॥

वैदग्ध्यं पटुताभङ्गिर्निःसङ्गैकान्तनिर्वृतिः।
आशापाशपरित्यागः सन्तोषः सत्त्वशीलता॥१७॥

अयाचकत्वमग्राम्यपदालापः कथास्वपि।
काव्यक्रियासु निर्बन्धो विश्रान्तिश्चान्तरान्तरा॥१८॥

नूतनोत्पादने यत्नः साम्यं सर्वसुरस्तुतौ।
पराक्षेपसहिष्णुत्वं गाम्भीर्यं निर्विकारता॥१९॥

अविकत्थनता दैन्यं परेषां नष्टयोजनम्।
पराभिप्रायकथनं परसादृश्यभाषणम्॥२०॥

सप्रसादपदन्यासः ससंवादार्थसंगतिः।
निर्विरोधरसव्यक्तिर्युक्तिर्व्यासिसमासयोः॥२१॥

प्रारब्धकाव्यनिर्वाहः प्रवाहश्चतुरो गिराम्।
शिक्षाणां शतमित्युक्तं युक्तं प्राप्तगिरः कवेः॥२२॥

इति बहुतरशिक्षालक्षणक्षीणदोषे
प्रभवति गतनिद्रे प्रातिभे सुप्रभाते।
कविरविरविलुप्तव्याप्तिभिः सूक्तपादै-
र्नयति नवनवत्वं भावभावस्वभावम्॥२३॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे
प्राप्तगिरः कवेः शिक्षाकथनं नाम द्वितीयं सन्धिः।

* * * * *

## *चमत्कारकथनं* नाम तृतीय सन्धिः

अथ शिक्षितस्य कवेः सूक्तिचमत्कारमाह-

**सुकविरतिशयार्थी वाक्चमत्कारलोभा-**
**दभिसरति मनोज्ञे वस्तुशब्दार्थसार्थे।**
**भ्रमर इव वसन्ते पुष्पकान्ते वनान्ते**
**नवकुसुमविशेषामोदमास्वादलोलः ॥१॥**

न हि चमत्कारविरहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम्।

**एकेन केनचिदनर्घमणिप्रभेण**
**काव्यं चमत्कृतिपदेन विना सुवर्णम्।**
**निर्दोषलेशमपि रोहति कस्य चित्ते**
**लावण्यहीनमिव यौवनमङ्गनानाम्॥२॥**

चमत्कारविरहो यथा *मालवरुद्रस्य*-

१३. वेल्लत्पल्लव संमिलल्लत लसत्पुष्प स्फुटत्कुड्मल
स्फूर्जद्गुच्छभर क्वणन्मधुकरक्रीडाविनोदाकर।
रक्ताशोक सखे दयां कुरु हर प्रारब्धमाडम्बरं
प्राणाः कण्ठमुपागताः प्रिमतमो दूरे त्वमेवं विधः॥

चमत्कारो यथा *यशोवर्मणः*-

१४.रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन् ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः॥

तत्र दशविधश्चमत्कारः - अविचारितरमणीयः, विचार्यमाणरमणीयः, समस्तसूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलङ्कारगतः, रसगतः, प्रख्यातवृत्तिगतश्च।

अविचारितरमणीयो यथा मम *शशिवंशे*-

१५.शूराः सन्ति सहस्रशः सुचरितैः पूर्णं जगत् पण्डितैः
संख्या नास्ति कलावतां बहुतरैः शान्तैर्वनान्ताः श्रिताः।
त्यक्तुं यः किल वित्तमुत्तममतिः शक्नोति जीवाधिकं
सोऽस्मिन् भूमिविभूषणं शुभनिधिर्भव्यो भवे दुर्लभः॥

विचार्यमाणरमणीयो यथा मम *पद्यकादम्बर्याम्*-

१६. अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा
कण्ठे जीवः करकिसलये दीर्घशायी कपोलः।
अंसे वीणा कुचपरिसरे चन्दनं वाचि मौनं
तस्याः सर्वं स्थितमिति न तु त्वां विना क्वापि चेतः॥

समस्तसूक्तव्यापी यथा मम *शशिवंशे*-

१७.माधुर्यानुभवेऽपि ते सुवदने तीक्ष्णाः कटाक्षाः परं
पर्यन्तस्थिततारका अपि नृणां रागानुबन्धोद्यताः।
नैवोज्झन्ति विवेकिनश्चपलतामुत्सेकसंवादिनी-
माश्चर्यं श्रवणौ स्पृशन्ति च पुनर्मारं च कुर्वन्त्यमी॥

सूक्तैकदेशदृश्यो यथा मम *पद्यकादम्बर्याम्*-

१८.नित्यार्चा हृदयस्थितस्य भवतः पद्योत्पलैश्चन्दनै-
स्त्वद्भक्तिस्त्वदनुस्मृतिश्च मनसि त्वन्नाममन्त्रे जपः।

सर्वत्रैव घनानुबन्धकलना त्वद्भावना सुभ्रुव-
स्तस्या जीवविमुक्तिरेव दिवसैर्देव त्वदाराधनात्॥

शब्दगतो यथा मम *चित्रभारते*नाटके-

१९. इतश्चश्चच्चूतच्युतमधुचया वान्ति चतुराः
समीराः सन्तोषं दिशि दिशि दिशन्तो मधुलिहाम्।
निशान्ते कान्तानां स्मरसमरकेलिश्रममुषो
विजृम्भन्ते जृम्भाकलितकमलामोदसुहृदः॥

अर्थगतो यथा मम *लावण्यवत्याम्*-

२०. सदासक्तं शैत्यं विमलजलधारापरिचितं
घनोल्लासः क्ष्माभृत्पृथुकटकपाती वहति यः।
विधत्ते शौर्यश्रीश्रवणनवनीलोत्पलरुचिः
स चित्रं शत्रूणां ज्वलदनलतापं भवदसिः॥

शब्दार्थगतो यथा मम *पद्यकादम्बर्याम्*-

२१. किञ्चित्कुञ्चितकामकार्मुकलतामैत्री विचित्रा भ्रुवो-
र्नर्मोक्तिः स्मितकान्तिभिः कुसुमिता प्रागल्भ्यगर्भा गिरः।
रागोत्सङ्गनिषङ्गिभिः सरसतासंवादिभिर्विभ्रमै-
रायुष्यं परमं तया रतिपतेः प्राप्तं मृगाक्ष्या वयः॥

अलङ्कारगतो यथा मम लावण्यवत्याम्-

२२.स्तनौ स्तब्धौ तीक्ष्णं नयनयुगलं निम्नमुदरं
भ्रुवोर्वक्रा वृत्तिर्विहितमुनिमारोऽधरमणिः।

तथासन्ने दैवादियति विषमे दुर्जनगणे
गुणी मध्ये हारः स्पृशति तव दोलातरलताम्॥

रसगतो यथा मम *कनकजानक्याम्-*

२३.अत्रार्यः खरदूषणत्रिशिरसां नादानुबन्धोद्यमे
रुन्धाने भुवनं त्वया चकितया योद्धा निरुद्धः क्षणम्।
सस्नेहाः सरसाः सहासरभसाः सभ्रूभ्रमाः सस्पृहाः
सोत्साहास्त्वयि तद्बले च निदधे दोलायमाना दृशः॥

प्रख्यातवृत्तिगतो यथा मम *शशिवंशे-*

२४.अग्रं गच्छत यच्छत स्वपृतनां व्यूहक्षितिं रक्षत
क्षोणीं पश्यत नश्यत द्रुततरं मा मा स्थितिं मुञ्चत।
यत्नात् तिष्ठत पृष्ठतस्तनुभिदामुग्रा गतिः पत्रिणा-
मित्यासीज् जनभञ्जने रथपथे पार्थस्य पृथ्वी श्रुतिः॥

**इत्युक्त एष सविशेषचमत्कृतीनां
सारः प्रकारपरभागविभाव्यमानः।
कर्पूरवेध इव वाङ्मधुगन्धयुक्ते-
श्चैत्रासवस्य सहकाररसाधिवासः॥३॥**

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते कविकण्ठाभरणे
चमत्कारकथनं तृतीयः सन्धिः।**

* * * * *

## गुणदोषविभागो नाम चतुर्थः सन्धिः

अथ गुणदोषविभागः-

**काव्यैकपात्रविलसद्गुणदोषदुग्ध-**
**पाथः समूहपृथगुद्धरणे विदग्धाः।**
**जानन्ति कर्तुमभियुक्ततया विभागं**
**चन्द्रावदातमतयः कविराजहंसाः ॥१॥**

तत्र शब्दवैमल्यमर्थवैमल्यं रसवैमल्यमिति त्रयः काव्यगुणाः। शब्दकालुष्यमर्थकालुष्यं रसकालुष्यमिति काव्यदोषाः। सगुणं निर्गुणं सदोषं निर्दोषं सगुणदोषं च काव्यम्।

शब्दवैमल्यं यथा मम *पद्य कादम्बर्याम्-*

२५.तत्कालोपनते वयस्यनिधने हा पुण्डरीकेति तन्
मोहव्यञ्जनमश्मभञ्जनमलं जीवस्य सन्तर्जनम्।
कुञ्जव्यापि कपिञ्जलेन करुणं निस्पन्दमाक्रन्दितं
येनाद्यापि च तैः स्मृतेन हरिणैः शष्पं परित्यज्यते॥

अर्थवैमल्यं यथा मम *शशिवंशे-*

२६.स्निग्धश्यामलशाद्वले फलतरुच्छायानिपीतातपे
चञ्चद्वीचिचयोच्छलत्कल कले निःसङ्गगङ्गातटे ।
अन्योन्याभिमुखोपविष्टहरिणे स्वस्थैर्यदि स्थीयते
तत् का श्रीः किमकाण्डभङ्गुरसुखैर्मोहस्य दत्तोऽञ्जलिः॥

रसवैमल्यं यथा मम *पद्यकादम्बर्याम्*-

२७.अथोद्ययौ बालसुहृत् स्मरस्य श्यामाधवः श्यामललक्ष्मभङ्ग्या।
तारावधूलोचनचुम्बनेन लीलाविलीनाञ्जनबिन्दुरिन्दुः ॥

शब्दकालुष्यं यथा *भट्टश्रीशिवस्वामिनः*-

२८.उत्खातप्रखरा सुखासुखसखी खड्गासिता खेलगा
वैश्रृङ्खल्यखलीकृताखिलखला खेत्खेटकैः ख्यापिता ।
खेटादुत्खनितुं निखर्वमनसां मौर्ख्यं मुखात्खक्खटं
निःसंख्यान्यनिखर्वसर्वमणिभूराख्यातु संख्यानि वः ॥

अर्थकालुष्यं यथा तस्यैव-

२९.पित्रापि त्रायते या न खलु खलधृताज्ञानमात्रापमात्रा
स्योनस्योनस्थितेर्भूरनुनयविरमद्दामपाशाप्यपाशा।
वर्षावर्षाम्बुपातात् त्रुटिततृणवसत्यश्रियातां श्रियातां
सौरी सौरीष्टयाग्रे सरदिह जनतां साश्नुवानांश्नुवानाम् ॥

रसकालुष्यं यथा भट्टनारायणस्य वेणीसंहारे भानुमत्या नकुलप्राणि-स्वप्नदर्शने पाण्डवनकुलस्वैरसङ्गमेष्यसिद्धावश्चक्रवर्तिमहिष्याः सामान्य-नीचवनितावत्।

सगुणं यथा *कालिदासस्य*-

३०.श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।

उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्-
हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति॥ मेघ. १०१

निर्गुणं यथा *चन्द्रकस्य*-

३१. स्तनौ सुपीनौ कठिनौ ठिनौ ठिनौ कटिर्विशाला रभसा भसा भसा।
सुखं च चन्द्रप्रतिमं तिमं तिमं अहो सुरूपा तरुणी रुणी रुणी॥

सदोषं यथा *भट्टश्रीशिवस्वामिनः*-

३२. अद्यत्वावधि शिण्ढि शिण्ढि दृढतागूढानि गूढेतरां
प्रौढिं ढौकय पिण्ढि पिण्ढि च रुजं रूढापरूढां तया।
मूढं मूढममूढयस्व हृदयं लीढ्वाथ[१] मूढ्वा तमः
सोऽव्यूढामिति च प्रभापरिवृढाव्यूढा द्रढिम्नेऽस्तु वः॥

निर्दोषं यथा *श्रीभीमसाहेः* सान्धिविग्रहिकस्येन्द्रभानोः-

३३. स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदफेनच्छटा-
छायाहारिणि वारिणि द्युसरितो दिक्पूरविस्तारिणि।
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः सन्निहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी॥

सगुणदोषं यथा *भट्टमयूरस्य*-

३४. अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशस्थितोऽपि।

---

१. वीड्ढ्वा इति सुरभारती प्रकाशनम्

दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां
यातः शातक्रतव्यां दिशि दिशतु शिवं शोचिषामुद्गमो वः ॥

सूर्यश.१८

इति गदितगुणार्थी त्यक्तनिर्दिष्टदोषः
कविरुचिरपदस्थश्चक्रवर्तित्वसिद्ध्यै ।
किमपि कृतविवेकः साधुमध्याधमानां
नृप इव परिरक्षेत् संकरं वर्णवृत्तेः ॥२॥

इति श्रीव्यासदासापराख्य*क्षेमेन्द्र*कृते *कविकण्ठाभरणे*
गुणदोष विभागश्चतुर्थः सन्धिः ।

* * * * *

## परिचयप्राप्तिर्नाम पञ्चमः सन्धिः

अथ परिचयचारुत्वमाह-

**न हि परिचयहीनः केवले काव्यकष्टे**
**कुकविरभिनिविष्टः स्पष्टशब्दप्रविष्टः।**
**विबुधसदसि पृष्टः क्लिष्टधीर्वेत्ति वक्तुं**
**नव[1] इव नगरान्तर्गह्वरे कोऽप्यधृष्टः॥१॥**

तत्र तर्कव्याकरणभरतचाणक्यवात्स्यायनभारतरामायणमोक्षोपायात्मज्ञानधातुवादरत्नपरीक्षावैद्यकज्यौतिषधनुर्वेदगजतुरगपुरुषलक्षणद्यूतेन्द्रजालप्रकीर्णेषु परिचयः कविसाम्राज्यव्यञ्जनः।

तर्कपरिचयो यथा मम *पद्यकादम्बर्याम्*-

३५.यत् प्राप्यं न मनोरथैर्न वचसा स्वप्नेऽपि दृश्यं न यत्
तत्रापि स्मरविप्रलब्धमनसां लाभाभिमानग्रहः।
मोहोत्प्रेक्षितशुक्तिकारजतवत् प्रायेण यूनां भ्रमं
दत्ते तैमिरिकद्विचन्द्रसदृशं खे नूनमाशा कृषिः॥

व्याकरणपरिचयो यथा *भट्टमुक्तिकलशस्य*-

३६.द्विगुरपि सद्वन्द्वोऽहं गृहे च मे सततमव्ययीभावः।
तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः॥

भरतपरिचयो यथा *भट्टश्रीशिवस्वामिनः*-

३७.आतन्वन् सरसां स्वरूपरचनामानन्दि बिन्दूदयं
भावग्राहि शुभप्रवेशकगुणं गम्भीरगर्भस्थिति।

उच्चैर्वृत्ति सपुष्करव्यतिकरं संसारविष्कम्भकं
भिन्द्याद् वो भरतस्य भाषितमिव ध्वान्तं पयो यामुनम्॥

चाणक्यपरिचयो यथा मम *पद्यकादम्बर्याम्*-

३८.स्वामी प्रमादेन मदेन मन्त्री कोपेन राष्ट्रं व्यसनेन कोषः।
छिद्रेण दुर्गं विषमेण सैन्यं लोभेन मित्रं क्षयमेति राज्ञाम्॥

वात्स्यायनपरिचयो यथा *भट्टदामोदरगुप्तस्य*-

३९.अधरे बिन्दुः कण्ठे मणिमाला कुचयुगे शशप्लुतकम्।
तव सूचयन्ति सुन्दरि कुसुमायुधशास्त्रपण्डितं रमणम्॥ कुट्ट.४०२

भारतपरिचयो यथा मम *देशोपदेशे* (४.५)-

४०.भगदत्तप्रभावाढ्या कर्णशल्योत्कटस्वना।
सेनेव कुरुराजस्य कुट्टनी किं तु निष्कृपा॥

रामायणपरिचयो यथा *भट्टवाचस्पतेः*-

४१. जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।
कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥

४२. निरासङ्गा प्रीतिर्विषयनियमोऽन्तर्न तु बहिः
स्वभावे भावानां क्षयजुषि विमर्शः प्रतिदिनम्।
अयं संक्षेपेण क्षपिततमसामक्षयपदे
तपोदीक्षाक्षेपक्षपणनिरपेक्षः परिकरः॥

आत्मज्ञानपरिचितिर्यथा मम *चित्रभारतनाम्नि नाटके-*

४३.पृथुशास्त्रकथाकन्थारोमन्थेन[1] वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम्॥

धातुवादपरिचयो यथा *राजशेखरस्य-*

४४.नखदलितहरिद्राग्रन्थिगौरे शरीरे
स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः।
बलवति सति यस्मिन् सार्धमावर्त्य हेम्ना
रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि॥

रत्नपरीक्षापरिचयो *भट्टभल्लटस्य-*

४५. द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः।
बहुविधाभ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः॥
भ.श.५

वैद्यकपरिचयो यथा मम *पद्यकादम्बर्याम्-*

४६.अङ्गं चन्दनपङ्कपङ्कजबिसच्छेदावलीनं मुहु-
स्तापः शाप इवैष शोषणपटुः कम्पः सखीकम्पनः।
श्वासाः संवृततारहाररुचयः सम्भिन्नचीनांशुका
जातः प्रागतिदाहवेदनमहारम्भः स तस्या ज्वरः॥

ज्योतिः शास्त्रपरिचयो यथा *विद्यानन्दस्य-*

४७. द्यामालोकयतां कलाः कलयतां छायाः समाचिन्वतां
क्लेशः केवलमङ्गुलीर्गणयतां मौहूर्तिकानामयम्।

१.पृथुशास्त्रकथारम्भरोमन्थेन इति सुरभारती प्रकाशनम्

धन्या सा रजनी तदेव सदिनं पुण्यः स एव क्षणो
यत्राज्ञातचरः प्रियानयनयोः सीमानमेति प्रियः ॥

धनुर्वेदपरिचयो यथा मम *कनकजानक्याम्*-

४८. आर्यस्यास्त्रघनौघलाघववती सन्धानसम्बन्धिनी
स्थाणुस्थानकसौष्ठवप्रणयिनी चित्रक्रियालङ्कृतिः ।
निष्पन्देन मयातिविस्मयमयी सत्यस्थितप्रत्यया
संहारे खरदूषणत्रिशिरसामेषैव दृष्टा स्थितिः ॥

गजलक्षणपरिचयो यथा मम *कनकजानक्याम्*-

४९. कर्णाभ्यर्णविकीर्णचामरमरुद्विस्तीर्णनिःश्वासवाञ्-
छङ्कच्छत्रविराजिराज्यविभवद्वेषी विलीनेक्षणः ।
स्मृत्वा राघवकुञ्जरः प्रियतमामेकाकिनीं कानने
सन्त्यक्तां चिरमुक्तभोगकवलः क्लेशोष्मणा शुष्यति ॥

तुरगलक्षणपरिचयो यथा *ममामृततरङ्गनाम्नि* काव्ये -

५०.आवर्तशोभी पृथुसत्त्वराशिः फेनावदातः पवनोरुवेगः
गम्भीरघोषोऽद्रिविमर्दखेदादश्वाकृतिं कर्तुमिवोद्यतोऽब्धिः ॥
उच्चैः श्रवाः शक्रमुपाजगाम स विश्वसाम्राज्यजयप्रदोऽश्वः ।
जग्राह हेलाघनशङ्खशब्दनिवेदिताशेषशुभं तमिन्द्रः ॥ (युग्मम्)

पुरुषलक्षणपरिचयो यथा *कालिदासस्य*-

५२.व्यूढोरस्को वृषस्कन्धः सालप्रांशुर्महाभुजः ।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ रघु.१-१३

द्यूतपरिचयो यथा *चन्द्रकस्य*-

५३. यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते।
इत्थं नेयौ रजनिदिवसौ तोलयन् द्वाविवाक्षौ
कालः काल्या सह बहुकलः क्रीडति प्राणिसारैः॥

इन्द्रजालपरिचयो यथा *श्रीहर्षस्य*-

५४. एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः।
एषोऽप्यैरावणस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्त्यो व्योम्नि चैताश्चलचरणनूपुरा दिव्यनार्यः॥

रत्ना.४-११

प्रकीर्णे चित्रपरिचयो यथा भगवतो *व्यासस्य*-

५५. अतथ्यान्यपि तथ्यानि दर्शयन्ति विचक्षणः।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः॥

देशपरिचयो यथा मम *शशिवंशे*-

५६. भोजैर्भञ्जनभीरुभिर्विलुलितं व्यामीलितं मालवै-
र्मद्रैर्विद्रुतमेव यातमसकृन् मार्गादधो मागधैः।
वङ्गानामभिमन्युकङ्कणरवैर्व्राते पुरः सूचिते
मौनैः सङ्कुचितं परस्परधृतैर्नीरन्ध्रमन्ध्रैः स्थितम्॥

वृक्षपरिचयो यथा मम *कनकजानक्याम्*-

५७. जम्बूबिम्बकदम्बनिम्बबकुलप्लक्षाक्षभल्लातक-
द्राक्षाकिंशुककर्णिकारकदलीजम्बीरकोदुम्बरैः।
सा सन्तानकबिल्वतिल्वतिलकश्लेष्मातकारग्वध-
न्यग्रोधार्जुनशातनासननवनश्यामान् ददर्शाश्रमान्॥

वनेचरपरिचयो यथा मम तत्रैव -

५८. वामस्कन्धनिषण्णशार्ङ्गकुटिलप्रान्तार्पिताधोमुख-
स्यन्दच्छोणितलम्बमानशशकान् पाणिस्खलच्चामरान्।
ज्यान्तप्रोतकपोतपोतनिपतद्रक्ताक्ततूणीरकान्
सापश्यत् करिकुम्भभेदजनिताक्रन्दान् पुलिन्दान् पुरः॥

औदार्यपरिचयो यथा मम *चतुर्वर्गसङ्ग्रहे (१.२६)*-

५९. मान्यः कुलीनः कुलजात् कलावान्
विद्वान् कलाज्ञाद् विदुषः सुशीलः।
धनी सुशीलाद् धनिनोऽपि दाता
दातुर्जिता कीर्तिरयाचकेन॥

अचेतनचेतनाध्यारोपपरिचयो यथा मच्छिष्यमहाश्रीभट्टोदयसिंहस्य ललिताभिधाने महाकाव्ये-

६०. इह विकसदशोकास्तोकपुष्पोपकारै-
रयमतिशयरक्तः सक्तसुस्निग्धभावः।
त्रिभुवनजयसज्जः प्राज्यसाम्राज्यभाजः
प्रथयति पृथुमैत्रीं पुष्पचापस्य चैत्रः॥

भक्तिपरिचयो यथास्यैव *भक्तिभवनाम्नि* महाकाव्ये-

६१. बाल्यादेव निरर्गलप्रणयिनी भक्तिर्भवानीपतौ
जन्माभ्यासविकासवासितमनः संवाससन्दायिनी।
प्रायः प्राक्तनकर्मनिर्मितमहामोहप्ररोहापहा
भव्यानां भवभीतिभञ्जनसखी सञ्जायते सन्मतिः॥

विवेकपरिचयो यथा *मच्छिष्यराजपुत्रलक्ष्मणादित्यस्य*-

६२. आशापाशविमुक्तियुक्तममलं सन्तोषमान्यं मनः
सेवायासविवर्जितं विहरणं मायाविहीनं वचः।
चण्डीशार्चनमात्मशुद्धिजननी गङ्गेव सत्सङ्गतिः
सोऽयं सन्तरणे परः परिकरः संसारवारान्निधेः॥

प्रशमपरिचयो यथा मम *चतुर्वर्गसंग्रहे* (४.२३)-

६३. चित्तं वातविकासिपांसुसचिवं रूपं दिनान्तातपं
भोगं दुर्गतगेहबन्धचपलं पुष्पस्मितं यौवनम्।
स्वप्नं बन्धुसमागमं तनुमपि प्रस्थानपुण्यप्रपां
नित्यं चिन्तयतां भवन्ति न सतां भूयो भवग्रन्थयः॥

**इत्युक्ता रुचिरोचिता परिचयप्राप्तिर्विभागैर्गिरां**
**दिङ्मात्रेण विचित्रवस्तुरचना मैत्री पवित्रीकृता।**
**यद्यस्त्यत्र नवोपदेशविषये लेशेऽप्युपादेयता**
**तत् सद्भिर्गुणकौतुकादवसरः श्रोतुं समाधीयताम्॥२॥**

कृत्वा निश्चलदैवपौरुषमयोपायं प्रसूत्यै गिरां
क्षेमेन्द्रेण यदर्जितं शुभफलं तेनास्तु काव्यार्थिनाम्।
निर्विघ्नप्रतिभाप्रभावसुभगा वाणी प्रमाणीकृता
सद्भिर्वाग्भवमन्त्रपूतविततश्रोत्रामृतस्यन्दिनी ॥३॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृते *कविकण्ठाभरणे*
*परिचयप्राप्तिः* पञ्चमः सन्धिः ।

काश्मीरेषु पृथुप्रतापसवितुः कीर्त्यंशुतारापतेः
प्रौढारातिवनानलस्य धनदस्येन्द्रस्य भूमण्डले।
विश्वाकारवतः पुनः कलियुगे विष्णोरिवोत्साहिनो
राज्ये श्रीमदनन्तराजनृपतेः काव्योदयोऽयं कृतः॥

इति कविकण्ठाभरणं समाप्तम् ।

* * * * *

# III. सुवृत्ततिलकम्

## प्रथमो विन्यासः - वृत्तावचयः

गणपतिगुरोर्वक्रश्चूडाशशाङ्ककलाङ्कुरः
स्फुटफणिफणारत्नच्छायाछटाछुरणारुणः।
गिरिपतिसुतासंसक्तेर्ष्याविलासकचग्रह-
च्युतनखशिखालेखाकान्तस्तनोतु सुखानि वः॥१॥

स्वच्छन्दलघुरूपाय त्रिजगद्गुरवे नमः।
स्पष्टवामनवृत्ताय मायावक्राय चक्रिणे॥२॥

नमश्छन्दोनिधानाय सुवृत्ताचारवेधसे ।
तपःसत्यनिवासाय व्यासायामिततेजसे॥३॥

क्षेमेन्द्रेण सुशिष्याणां सरस्वत्याः प्रसाधनम्।
सुवृत्ततिलकं वर्णरुचिरं क्रियते मुखे॥४॥

दृष्ट्वा छन्दांसि सौन्दर्यं विचार्यार्यिप्रियः कृतः।
प्रसिद्धकाव्यकर्मण्यवृत्तानामेष सङ्ग्रहः॥५॥

दीर्घे संयोगपूर्वे च गुरुसंज्ञा प्रकीर्तिता।
असंयोगग्रहं ह्रस्वं लघुसंज्ञं प्रकीर्तितम्॥६॥

त्रिगुरुः प्राग्गुरुर्मध्यगुरुरन्तगुरुस्तथा।
त्रिलघुः प्राग्लघुर्मध्यलघुरन्तलघुस्तथा॥७॥

मभजाः सनया रेफतकारौ चेति संज्ञिताः।
ज्ञेयो लघुर्लकारोऽत्र गकारश्च गुरुर्मतः॥८॥(युग्मम्)

**क्वचिद् विक्षिप्तसंस्थानैः क्वचिदेकपदस्थितैः।**
**संयोगस्थैः क्वचिद् दत्तमुदाहरणमक्षरैः॥९॥**

**पूर्वाक्षरद्वयासक्तविरामेण षडक्षरा।**
**तकारेण यकारेण तनुमध्याभिधीयते॥१०॥**

यथा मम-

१. तेन प्रविभक्ता कामं वयसा सा।
येन प्रविलासं धत्ते तनुमध्या॥ (तनुमध्या)

**सप्ताक्षरसमायुक्तं जसाभ्यां गुरुणा तथा।**
**अविरामं विदुर्वृत्तं कुमारललिताभिधम्॥११॥**

यथा मम-

२. जनं स्मृतिदशाप्तं गतानुगतिकः किम्।
न शोचति जनोऽयं कुमारललितं तत्॥

**मकारयुगपर्यन्ते यत् संयुक्तगुरुद्वयम्।**
**विद्युन्मालाभिधं तद्धि वृत्तमष्टाक्षरं विदुः॥१२॥**

यथा मम-

३. मौनं ध्यानं भूमौ शय्या गुर्वी तस्याः कामावस्था।
मेघोत्सङ्गे नृत्तासक्ता यस्मिन् काले विद्युन्माला॥

**लघोर्गुरोश्च विच्छित्या यत्रानन्तर्यसङ्गतिः।**
**वृत्तप्रमाणनिपुणैः सा प्रमाणीति कीर्तिता॥१३॥**

यथा मम-

४. लघु श्रुतं मदोद्धतं गुरुश्रमाय केवलम्।
न यत् परोपकारकृद् वृथैव तत् प्रमाण्यपि॥

**पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः।**
**गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम्॥१४॥**

**असंख्यो भेदसंसर्गादनुष्टुप्छन्दसां गणः।**
**तत्र लक्ष्यानुसारेण श्रव्यतायाः प्रधानता॥१५॥**

यथा भगवतो *व्यासस्य*-

५. ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता॥ म.भा.द्रो.१८४-४६

**नवाक्षरापि ननमैरक्षरैरुपलक्षिता।**
**भुजगाग्रा शिशुभृता कथिता वृत्तकोविदैः॥१६॥**

यथा मम-

६. न नमति चरणौ भक्त्या किमिति जडमतिर्लोकः।
भवभयशमनौ शम्भोर्भुजगशिशुभृतावग्रे॥

**संयुक्तं भमसैरन्तै गुरुणा च दशाक्षरम्।**
**वृत्तं रुक्मवती नाम कथितं वृत्तशालिभिः॥१७॥**

यथा मम-

७. भग्नमसत्यैः कायसहस्रैर्मोहमयी गुर्वी भवमाया।
स्वप्नविलासा योगवियोगा रुक्मवती हा कस्य कृते श्रीः॥

**तकाराभ्यां जकारेण युक्तं गुरुयुगेण च।**
**इन्द्रवज्राभिधं प्राहुर्वृत्तमेकादशाक्षरम्॥१८॥**

यथा मम-

८. तौ जन्मगूढौ चरणेन यस्य कष्टौ निविष्टौ हृदि कामकोपौ।
तं दुःसहास्ता ज्वलदिन्द्रवज्रपातोपमाः क्लेशदशा विशन्ति[१]॥

**जतजैर्गुरुयुग्मेन संसक्तैरुपलक्षितम्।**
**वदन्त्युपेन्द्रवज्राख्यं वृत्तमेकादशाक्षरम्॥१९॥**

यथा मम-

९. जितो जगत्येष भवभ्रमस्तैर्गुरूदितं ये गिरिशं स्मरन्ति।
उपास्यमानं कमलासनाद्यै रुपेन्द्रवज्रायुधवारिनाथैः॥

**पदानन्तरविन्यासयोगैर्बहुभिरेतयोः।**
**वैचित्र्यजातिरुचिरा भवन्त्येवोपजातयः॥२०॥**

**भकारत्रयसंयुक्तमन्ते गुरुयुगान्वितम्।**
**कथितं दोधकं नाम वृत्तमेकादशाक्षरम्॥२१॥**

यथा मम-

१०. भो भवविभ्रमभङ्गुरभोगा गच्छत नास्त्यधुना मम मोहः।
तिष्ठति चेतसि चन्द्रकलाभृद् भक्तजनाभयदोऽथ कपाली॥

**पूर्वाक्षरचतुष्कान्तविरतिर्मततान्विता।**
**गुरुद्वितययुक्ता च शालिन्येकादशाक्षरा॥२२॥**

---

१.दहन्ति इति सुरभारती प्रकाशनम्

यथा मम-

११. मत्ता गोष्ठीगर्भमूढ[1]प्रलापा प्रौढा गाढालिङ्गिता यौवनेन।
मध्वाताम्रस्वेदमीलत्कपोला लोला लीलाशालिनी कस्य नेष्टा॥

**रनरैरन्वितं युक्तं लघुना गुरुणा तथा।**
**ख्यातं रथोद्धता नाम वृत्तमेकादशाक्षरम्॥२३॥**

यथा मम-

१२. रम्यनर्मकलभोगतर्जनी भ्रूलतेव तरलारियोषिताम्।
वैजयन्त्यभिमुखी रणे रणे भाति ते नरपते रथोद्धता॥

**गुरुद्वययुतैरन्ते रनभैरुपलक्षितम्।**
**गदितं स्वागता नाम वृत्तमेकादशाक्षरम्॥२४॥**

यथा मम-

१३. रत्नभङ्गविमलैर्गुणतुङ्गै रर्थिनामभिमतार्पणसक्तैः।
स्वागताभिमुखनम्रशिरस्कै र्जीव्यते जगति साधुभिरेव॥

**सकारैरन्वितं वृत्तं चतुर्भिर्युगपत्स्थितैः।**
**उदितं तोटकं नाम वृत्तज्ञैर्द्वादशाक्षरम्॥२५॥**

यथा मम-

१४. सरसः स्मरसारतरो वयसः समयः स्मृतिशेषदशापतितः।
गलिताखिलरागरुचिर्विजने परितोऽट कपालकरः सुमते॥

---

१.गूढ इति सुरभारती प्रकाशनम्

**संलक्षितं जतजरैर्द्वादशाक्षरमक्षरैः।**
**छन्दोविचक्षणा वृत्तं वंशस्थाख्यं प्रचक्षते॥२६॥**

यथा मम-

१५. जनस्य तीव्रातपजार्तिवारणा जयन्ति सन्तः सततं समुन्नताः।
सितातपत्रप्रतिमा विभान्ति ये विशालवंशस्थतया गुणोचिताः॥

**अभिव्यक्तं नभभरैरक्षरैर्द्वादशाक्षरम्।**
**वदन्ति वृत्तजातिज्ञा वृत्तं द्रुतविलम्बितम्॥२७॥**

यथा मम-

१६.नभसि भर्गगलच्छविभिर्घनै र्द्रुतविलम्बितगैः परिवारितः।
सितकरः कलहंस इवाभित स्तरति संवलितो यमुनोर्मिभिः॥

**समन्वितं मनजरैश्छिन्नं पूर्वाक्षरैस्त्रिभिः।**
**त्रयोदशाक्षरं नाम्ना कीर्तयन्ति प्रहर्षिणीम्॥२८॥**

यथा मम-

१७. मानौजः सुरभिगुणैर्यशः सितानां
र्निर्व्याजा निजभुजविक्रमक्रमाप्ता।
सर्वाशाप्रणयिजनोपजीव्यमाना
भव्यानां भवति परप्रहर्षिणी श्रीः॥

**अभिज्ञातं तभजजैरन्तासक्तगुरुद्वयम्।**
**चतुर्दशाक्षरं वृत्तं वसन्ततिलकं विदुः॥२९॥**

यथा मम-

१८. तद्राजि जन्मसचिवे भगवत्यनङ्गे
प्राप्ते लसत्कुसुममण्डलपाण्डुरेण।
भृङ्गावलीकुटिलकुन्तलसन्निवेशा
कान्ता वसन्ततिलकेन विभूषिता भूः॥

**अष्टाक्षरविरामेण युक्तं ननमयैः सयैः।**
**वदन्ति मालिनीनाम वृत्तं पञ्चदशाक्षरम्॥३०॥**

यथा मम-

१९. नननननमयवाणी मेखलाकृष्टिकाले
प्रविचलदिव शीलं नोत्सृजन्ती दुकूलम्।
तृणलवचलनेऽपि स्वैरिणी शङ्कमाना
दिशि दिशि कृतदृष्टिर्मालिनी कस्य नेष्टा॥

**नजभैर्जजलैरन्तगुरुभिर्नर्कुटाभिधम्।**
**वृत्तं चानष्टविच्छेदं विदुः सप्तदशाक्षरम्॥३१॥**

यथा मम-

२०. निजभुजजैर्विशालगुणविक्रमकीर्तिभरैः
प्रविदधता सुधांशुधवलं भवता भुवनम्।
कथय कथं कृतेयमतिरागवतीं जनता
चरितमपूर्वमेव तव कस्य न नर्कुटकृत्॥

**जसजैः सयलैर्गेन युताष्टनवसंहृतिः।**
**दशसप्ताक्षरा पृथ्वी कथिता वृत्तवेदिभिः॥३२॥**

यथा मम-

२१. जवात् स रजसा युतः श्रमविसंस्थुलाङ्गः पथा
व्रजन् सततसेवकः पिशुनधाम वेश्म प्रभोः।
कदाचिदवलोकनैः फलविवर्जितैर्मन्यते
जडः करसमर्पितामिव मदेन पृथ्वीमिमाम्॥

**नसमै रसलैर्गेन युक्ता सप्तदशाक्षरा।**
**विच्छिन्ना हरिणी षड्भिश्चतुर्भिः सप्तभिस्तथा॥३३॥**

यथा मम-

२२. न समरसनाः काले भोगाश्चलं धनयौवनं
कुरुत सुकृतं यावन्नेयं तनुः प्रविशीर्यते।
किमपि कलना कालस्येयं प्रधावति सत्वरा
तरुणहरिणी सन्त्रस्तेव प्लवप्रविसारिणी॥

**यमनैः सभलैर्गेन युक्ता सप्तदशाक्षरा।**
**षडैकादशविच्छेदवती शिखरिणी मता॥३४॥**

यथा मम-

२३.यथा मन्युर्लीनः स च विभवभग्नः स्मरपद[१]
स्तथा जाने जाता शमसमयरम्या परिणतिः।
इदानीं संसारव्यतिकरहरा तीव्रतपसे
विविक्ता युक्ता मे गिरिवरमही सा शिखरिणी॥

---

१.स्मरमद इति New Bharatiya Book Corporation, Delhi

**चतुःषट्सप्तविरति वृत्तं सप्तदशाक्षरम्।**
**मन्दाक्रान्ता मभनतैस्तगैश्चाभिधीयते॥३५॥**

यथा मम-

२४. मध्ये भङ्गीवलनविततापाङ्गसंसङ्गभाजः
स्मर्यन्ते ते यदि धृतिमुषः पक्ष्मलाक्षीकटाक्षाः।
तत् किं मिथ्या नियमनिभृतैः कानने धीयते धी-
र्मन्दाक्रान्ता दशति निशिता पन्नगी पाणिसक्ता॥

**मसर्जः सततैर्गेन युक्तमेकोनविंशवत्।**
**शार्दूलक्रीडितं प्राहुश्छिन्नं द्वादशसप्तभिः॥३६॥**

यथा मम-

२५. माद्यत्सज्जसमाततोग्रसुभटोद्भिन्नेभकुम्भस्थल
श्लिष्यन्मौक्तिकदन्तुरः सरभसोद्वेल्लद्यशः केश(स)रः।
जृम्भारम्भभयङ्करव्यतिकरत्रस्तैः समुद्वीक्षितः
शत्रूणां त्वदसिः करोति समरे शार्दूलविक्रीडितम्॥

**युक्तं मरभनैर्यैश्च त्रिभिः सप्ताक्षरैस्त्रिभिः।**
**छेदैश्च स्रग्धरावृत्तमेकविंशाक्षरं विदुः॥३७॥**

यथा मम-

२६. सारारम्भानुभावप्रियपरिचयया स्वर्गरङ्गाङ्गनानां
लीलाकर्णावतंसश्रियमतनुगुणश्लेषया संश्रयन्त्या।
आभाति व्यक्तमुक्ताविचकिलवलीवृंन्दकुन्देन्दुकान्त्या
त्वत्कीर्त्या भूषितेयं भुवनपरिवृढ स्रग्धरेव त्रिलोकी॥

इति सरलतरत्वात् सर्वकाव्योचितत्वात्
सुकविपरिचितत्वात् कीर्णकर्णामृतत्वात्।
परुषविषममात्रादुर्विरामोज्झितेयं
प्रचुररुचिरवृत्तव्यक्तिरुक्ता हिताय॥३८॥

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्रविरचिते
सुवृत्ततिलके वृत्तावचयो नाम
प्रथमो विन्यासः।

* * * * *

द्वितीयो विन्यासः - गुणदोषदर्शनम्

कृते प्रसिद्धवृत्तानां लक्ष्यलक्षणसङ्ग्रहे।
अधुना क्रियते तेषां गुणदोषप्रदर्शनम्॥१॥

न षट्सप्ताक्षरे वृत्ते विश्राम्यति सरस्वती।
भृङ्गीव मल्लिकाबालकलिकाकोटिसङ्कटे॥२॥

समासैर्लघुवृत्तानामसमासैर्महीयसाम्।
शोभा भवति भव्यानामुपयोगवशेन वा॥३॥

अनुष्टुप्छन्दसां भेदे कैश्चित् सामान्यलक्षणम्।
यदुक्तं पञ्चमं कुर्याल् लघु षष्ठं तथा गुरु॥४॥

तत्राप्यनियमो दुष्टः प्रबन्धे महतामपि।
तस्मादव्यभिचारेण श्रव्यतैव गरीयसी॥५॥

यथा कालिदासस्य-

२७. तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव॥ रघु.१-१२

उपजातिविकल्पानां सिद्धो यद्यपि सङ्करः।
तथापि प्रथमं कुर्याद् पूर्वपादाक्षरं लघु॥६॥

यथा श्रीमदुत्पलराजस्य-

२८. हृताञ्जनश्यामरुचस्तवैते स्थूलाः किमित्यश्रुकणाः पतन्ति।
भृङ्गा इव व्यायतपङ्क्तयो ये तनीयसीं रोमलतां श्रयन्ति॥

**सूत्रस्येवात्र तीक्ष्णाग्रं श्लोकस्य लघुना मुखम्।**
**कर्णं विशति निर्विघ्नं सरलत्वं च नोज्झति॥७॥**

**गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाग्रतः।**
**करोति प्रथमं स्थूलं किञ्चित् कर्णकदर्थनाम्॥८॥**

यथा कालिदासस्य-

२९. अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः॥कु.१.१

**त्र्यक्षरस्त्र्यक्षरैरेव च्छेदैराभाति दोधकम्।**
**अतोऽल्पैरधिकैर्वापि यतिं तालमिवोज्झति॥९॥**

यथा मम-

३०. सज्जनपूजनशीलनशोभामर्जय वर्जय दुर्जनसङ्गम्।
दुस्तरसंसृतिसागरवेगे मज्जनकारणवारणमेतत्॥

अतोऽल्पाधिकैर्यथा *तुञ्जीरस्य-*

३१. त्वन्मुखचन्द्रनिरीक्षणवर्त्या यः सुतरामिह निर्मलनेत्रः।
सर्वजनस्य पुरः स्थितमेतत् सोऽन्तकवर्त्म न पश्यति चित्रम्॥

**शालिनी श्लथबन्धैव स्वभावेन विभाव्यते।**
**उत्तेजयेत् तां यत्नेन मन्ददीपशिखामिव॥१०॥**

श्लथा यथा मम-

३२. प्लोषक्लेशं प्रोषितानां दिशन्ती मानम्लानिं मानिनीनां दधाना।
गाढं सक्ता सद्गुणग्लानिदाने चन्द्रस्य श्रीर्दुर्जनस्येव जाता॥

**शत्रन्ताक्षरसंयोगैः किञ्चित्कार्कश्यकारिभिः।**
**अन्ते विसर्जनीयैश्च शालिनी याति दीप्तताम्॥११॥**

यथा मम-

३३.लज्जामज्जल्लोलतारान्तकान्तास्तिर्यङ्क्निर्यत्केतकीपत्रतीक्ष्णाः।
मग्नाश्चित्ते कस्य निर्यान्ति भूयः प्रेमोन्मीलत्पक्ष्मलाक्षीकटाक्षा॥

**श्लथस्वभावान्माधुर्यं शालिन्याः परिवर्ज्यते।**
**रुचिः प्रयाति मन्दाग्नेः क्षीरेणात्यन्तमन्दताम्॥१२॥**

**विसर्गयुक्तैः पादान्तैर्विराजति रथोद्धता।**
**कलापरिचयैर्याता लटभेव प्रगल्भताम्॥१३॥**

यथा मम-

३४.अत्र चैत्रसमये निरन्तराः प्रोषिताहृदयकीर्णपावकाः।
वान्ति कामुकमनोविमोहना व्याललोलमलयाचलानिलाः॥

**अविसर्गैस्तु पादान्तैर्निष्प्रभैव रथोद्धता।**
**अप्रार्थनाप्रणयिनी म्लानभानेव मानिनी॥१४॥**

यथा कलशकस्य-

३५. अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरशारितम्।
आत्तमात्तमपि कान्तमुक्षितुं कातरा शफरशङ्किनी जहौ॥

**साकाराद्यैर्विसर्गान्तैः सर्वपादैः सविभ्रमा।**
**स्वागता स्वागता भाति कविकर्मविलासिनी॥१५॥**

यथा मम-

३६. व्यावलन्ति तरला जलधाराः पान्थसङ्गमधृतेः परिहाराः।
प्रान्तरत्ननिभविद्युदुदाराः प्रावृषः पृथुपयोधरहाराः॥

न तु यथा ममैव-

३७. अम्बरेऽम्बुभरलम्बिपयोदे मत्तबर्हिरुचिरेऽद्रिनितम्बे।
पुष्पधामनि कदम्बकदम्बे का गतिः पथिक कालविलम्बे॥

**द्रुततालयैरेव व्यक्तं रूक्षाक्षरैः पदैः।**
**प्रनर्तयति यच्चित्तं तत्तोटकमभीप्सितम्॥१६॥**

यथा मम-

३८. मदघूर्णितलोचनषट्चरणं घनरागमनङ्गकराभरणम्।
कमलद्युतिं मुग्धवधूवदनं सुकृती पिबतीह सुधासदनम्॥

**असमस्तपदैः पादसन्धिविच्छेदसुन्दरम्।**
**सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम्॥१७॥**

यथा भट्टबाणस्य-

३९. जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः।
सुरासुराधीशशिखान्तशायिनस्तमश्छिदस्त्र्यम्बकपादपांसवः॥
कार्द.प्र.२

विपरीतं यथास्यैव-

४०. नमामि [1]भर्वोश्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम्।
समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि॥
कार्द.प्र.४

१. भोर्वः इति भाव्यम्

**प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम्।**
**विच्छित्त्या सर्वपादानां भाति द्रुतविलम्बितम्॥१८॥**

यथा मम-

४१. कमलपल्लववारिकणोपमं किमिव पासि सदा निधनं धनम्।
कलभकर्णचलाञ्चलचञ्चलं स्थिरतराणि यशांसि न जीवितम्॥

द्रुतहीनं विलम्बितं यथा मम-

४२. निपततां भ्रमतां विनिमज्जतां प्रविशतां परिवारशतैरधः।
तनुभृतां भव एव भवार्णवे भयमये भगवानवलम्बनम्॥

**आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः।**
**शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी॥१९॥**

यथा *श्रीहर्षदेवस्य*-

४३. दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम्।
तद् भूयः शिशुशुकसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति॥ रत्ना. २.८

विपरीतं यथा मम-

४४. सङ्कोचव्यतिकरबद्धभीतिलोलै-
र्निर्याद्भिर्भ्रमरभरैः सरोरुहेभ्यः।
आरब्धः क्षणमिव सन्ध्यया जगत्या-
मुत्पत्त्यै घनतिमिरस्य बीजवापः॥

**वसन्ततिलकस्याग्रे साकारे प्रथमाक्षरे।**
**ओजसा जायते कान्तिः सविकासविलासिनी॥२०॥**

यथा विद्याधिपत्यपरनाम्ना *रत्नाकरस्य-*

४५. कण्ठश्रियं कुवलयस्तवकाभिराम-
दामानुकारिविकटच्छविकालकूटम्।
बिभ्रत् सुखानि दिशतादुपहारपीत-
धूपोत्थधूममलिनामिव धूर्जटिर्वः॥

**आकारेऽपि कृते पूर्वं बन्धेऽल्पपदपेशले।**
**वसन्ततिलकं धत्ते निर्गन्धि रमणीयताम्॥२१॥**

यथा परिमलस्य-

४६. अच्छासु हंस इव बालमृणालिकासु
भृङ्गो नवास्विव मधुद्रुममञ्जरीषु।
कोऽवन्तिभर्तुरपरो रसनिर्भरासु
पृथ्वीपतिः सुकविसूक्तिषु बद्धभावः॥

**विसर्गहीनपर्यन्ता मालिनी न विराजते।**
**चमरी छिन्नपुच्छेव वल्लीवालूनपल्लवा॥२२॥**

यथा भट्टवल्लटस्य-

४७. वरमिह रवितापैः किं न शीर्णासि गुल्मे
किमु दवदहनैर्वा सर्वदाहं न दग्धा।
यदहृदयजनौघैर्वृन्तपर्णानभिज्ञै-
रितरकुसुममध्ये मालति प्रोम्भितासि॥

सम्पूर्णा सा यथा *कालिदासस्य-*

४८. अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पकेतुः॥ कु.सं. २-६४

**द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनो वरा।**
**प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता॥२३॥**

द्वितीयार्धे समस्तपादा यथा गन्दिनकस्य-

४९. करतरलितबन्धं कञ्चुकं कुर्वतीनां
प्रतिफलितमिदानीं दैपमाताम्रमर्चिः।
स्तनतटपरिणाहे भामिनीनां भविष्य-
न्नखपदलिपिलीलासूत्रपातं करोति॥

प्रथमार्धे समस्तपादा यथा *राजशेखरस्य-*

५०.इह हि नववसन्ते मञ्जरीपुञ्जरेणु-
च्छुरणधवलदेहा बद्धहेलं सरन्ति।[१]
तरलमलिसमूहा हारिहुङ्कारकण्ठा
बहुलपरिमलालीसुन्दरं सिन्दुवारम्॥ वि.शा.१-३०

**अज्ञोऽप्यलक्ष्यं मालिन्यां वीणायामिव विस्वरम्।**
**श्रुत्वैवोद्वेगमायाति वाचा वक्तुं न वेत्ति तम्॥२४॥**

---

१.स्मरन्ति इति सुरभारती प्रकाशनम्

यथा *भट्टेन्दुराजस्य*-

५१. रहसि हृतदुकूला शीलिता तैलदीपे
त्वदुपगतसमृद्धेः प्रेयसी श्रोत्रियस्य।
विकिरति पटवासैर्हन्ति कर्णावतंसैः
शमयति मणिदीपं पाणिफूत्कानिलेन॥

**गुरुलघ्वादिनियमादविभ्रष्टेऽपि लक्षणात्।**
**दोषस्त्वदुपगेत्यत्र श्रोत्रग्राह्योऽस्ति विस्वरः॥२५॥**

**प्रथमं द्व्यक्षरैश्छेदेस्ततस्त्रिचतुराक्षरैः।**
**पञ्चाक्षरैश्च पर्यन्ते नर्कुटं याति चारुताम्॥२६॥**

यथा वीरदेवस्य-

५२. तव शतपत्रपत्रमृदुताम्रतलश्चरण-
श्चलकलहंसनूपुरवरध्वनिना मुखरः।
महिषमहासुरस्य शिरसि प्रसभं निहितः
सकलमहीधरेन्द्रगुरुतां कथमम्ब गतः॥

विपरीतं *यथास्यैव*-

५३. सशिखिशिखेव धूमनिचिताञ्जनशैलगुहा
सकपिशपन्नगेव यमुनोन्नतनीलशिला।
महिषमहासुरोपहितभासुरशूलकरा
बहुलनिशेव भासि सतडिद्गुणमेघयुता॥

**असमासैः पदैर्भाति पृथ्वी पृथ्वी पृथक्स्थितैः।**
**समासग्रन्थिभिः सैव याति सङ्कोचखर्वताम्॥२७॥**

पृथक्पदा यथा *साहिलस्य*-

५४. कचग्रहमनुग्रहं दशनखण्डनं मण्डनं
दृगञ्जनमवञ्चनं मुखरसार्पणं तर्पणम्।
नखार्दनमतर्दनं दृढमपीडनं पीडनं
करोति रतिसङ्गरे मकरकेतनः कामिनाम्॥

समासवती यथा मम-

५६. कचग्रहसमुल्लसत्कमलकोषपीडाजड-
द्विरेफकलकूजितानुकृतसीत्कृतालङ्कृताः।
जयन्ति सुरतोत्सवव्यतिकरे कुरङ्गीदृशां
प्रमोदमदनिर्भरप्रणयचुम्बिनो विभ्रमाः॥

**पृथ्वी साकारगम्भीरैरोजः सर्जिभिरक्षरैः।**
**समासग्रन्थियुक्तापि याति प्रत्युत दीर्घताम्॥२८॥**

यथा *भट्टनारायणस्य*-

५७. महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः श्रुतः॥ वे.सं.३.४

**त्वरातरलविच्छेदैर्विभाति हरिणी पदैः।**
**मन्थरैर्ग्रन्थिबद्धेव याति निःस्पन्दसङ्गताम्॥२९॥**

तरलपदा यथा *दीपकस्य-*

५८. तनुधनहरक्रूरस्तेनोत्कटां विकटाटवीं
तरति तरसा शौर्योत्सेकात् स्वसार्थवशाज् जनः।
पुरवरवधूलीलावल्गत्कटाक्षबलाकुले
नगरनिकटे पन्थाः पान्थ स्फुटं दुरतिक्रमः॥

मन्थरेर्यथा *भट्टेन्दुराजस्य-*

५९. गुणपरिचयस्तीर्थे वासस्थिरोभयपक्षता
वपुरतिदृढं वृत्तं सम्यक् सखे तव किं पुनः।
सरति सुमते यस्त्वां पातुं दृशा विनिमेषया
बडिश विषमं तस्याक्षेपं करोषि सहासुभिः॥

**त्रिषु पादेषु विश्रान्तविलासैर्ललिता पदैः।**
**अन्ते तरङ्गितगतिर्हरिणी हारिणीतराम्॥३०॥**

यथास्यैव-

६०. उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद् भवद्भिरवेक्ष्यताम्।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः॥

**शिखरिण्याः समारोहात् सहजैवौजसः स्थितिः।**
**सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम्॥३१॥**

यथा *मुक्ताकणस्य-*

६१. यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः।

यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिक तरुखण्डे स्मरदवः॥

विपरीता यथा *भट्टश्यामलस्य-*

६२. धृतो गण्डाभोगे मधुप इव बद्धोऽब्जविवरे
विलासिन्या मुक्तो बकुलतरुमापुष्पयति यः।
विलासो नेत्राणां तरुणसहकारप्रियसखः
स गण्डूषः सीधोः कथमिव शिरः प्राप्स्यति मधोः॥

**शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते।**
**मुक्तालताया निःसूत्रमुक्तैर्मुक्ताफलैरिव॥३२॥**

यथा *भट्टभवभूतेः-*

६३.असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम्।
अदर्पं कंदर्पं जननयननिर्माणमफलं
जगज् जीर्णारण्यं कथमसि विधातुं व्यवसितः॥ मा.मा.५.५०

**श्लोकेऽस्मिन् सचमत्कारसरसास्वादशालिनि।**
**केवलं शिखरिण्यैव स्वरूपमहारितम्॥३३॥**

**मन्थराक्रान्तविस्त्रब्धैश्चतुर्भिः प्रथमाक्षरैः।**
**मध्यषट्केऽतिचतुरे मन्दाक्रान्ता विराजते॥३४॥**

यथा *कालिदासस्य-*

६४. ब्रह्मावर्तं जनपदमधश्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः।

राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारासारैस्त्वमिव कमलान्यभ्यषिञ्चन् मुखानि ॥ मेघ. १.५१

आदिमध्ये तुल्या यथास्यैव-

६५. कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ मेघ.१

**साकाराद्यक्षरैः पादपर्यन्तैः सविसर्गकैः।**
**शार्दूलक्रीडितं धत्ते तेजोजीवितमूर्जितम् ॥३५॥**

यथा भट्टश्यामलस्य-

६६. आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
सङ्ग्रामामृतसागरप्रमथनक्रीडाकृतौ मन्दरो
राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः[१] ॥

विपरीतं यथा *लाटडिण्डीरस्य-*

६७. चित्रं तावदिदं सुरेन्द्रभवनान्मन्दाकिनीपाथसा
केनाप्युत्तमतेजसा नृपतिना क्ष्मामण्डलं मण्डितम्।
नातश्चित्रतरं निशाकरकलालावण्यदुग्धोदधे
भूमेर्यद् भवता विरिञ्चिनगरी कीर्तिप्लवैः प्लाव्यते ॥

१. करः इति सुरभारती प्रकाशनम्

**विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव।**
**शार्दूलक्रीडितं याति पाठे सायासतामिव॥३६॥**

यथा *मुक्ताकणस्य*-

६८. लीलाचामरडम्बरो रतिपतेर्बालाम्बुदश्रेणयो
रागोद्दण्डशिखण्डिनो मुखविधूद्भूतास्तमोविभ्रमाः।
सौगन्ध्योद्धतधावदाकुलवलन्मत्तालिमालाकुलो
धम्मिल्लो हरिणीदृशो विजयते स्रस्तो रतिव्यत्यये॥

**विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत्।**
**शार्दूलक्रीडितं भाति विपरीतमतोऽधमम्॥३७॥**

पूर्वार्धे यथा भट्टभवभूतेः-

६९. अज्ञानाद् यदि वाधिपत्यरभसादस्मत्परोक्षं हृता
सीतेयं प्रविमुच्यतां शठ मरुत्पुत्रस्य हस्तेऽधुना।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि॥

विपरीतं यथा *रिस्सोः*-

७०. स्नातुं वाञ्छसि(ति) किं मुधैव धवलक्षीरोदफेनच्छटा-
छायाहारिणि वारिणि द्युसरितो डिण्डीरविस्तारिणि।
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी॥

**आद्यन्तयोर्गुणोत्कर्षकान्त्या सर्वातिशायिनोः।**
**शार्दूलक्रीडितं धत्ते मध्ये तद्गौरवोन्नतिम्॥३८॥**

यथा *कालिदासस्य*-

७१.गाहन्तां महिषा निपानसलिलं श्रृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ।। शा. २-६

**आद्यन्ताकारविरहात् पर्यन्ते चाविसर्गतः।**
**शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ।।३९ ।।**

यथा *श्रीयशोवर्मणः*-

७२.यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ।।

**सुकुमाररसस्यात्र रक्षायै वृत्तमुद्धतम्।**
**वाक्पाकेनैव गलितं कविना नीतमल्पताम् ।।४० ।।**

**आकारगुरुयुक्तादिपर्यन्तान्तविसर्गिणी।**
**असंस्यूतविरामा च स्त्रग्धरा राजतेतराम् ।।४१ ।।**

यथा *राजशेखरस्य*-

७३.ताम्बूलीनद्धमुग्धक्रमुकतरुलताप्रस्तरे सानुगाभिः
पायं पायं कलायीकृतकदलिदलं नारिकेलीफलाम्भः।
सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि-
र्दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ।। बा.रा.१-६३

विपरीतं यथा *चक्रस्य*-

७४. सत्यं पातालकुक्षिंभरि चिरविलसद्दिक्करिप्रीणिताभ्रं
श्रीगर्भश्वभ्रमभ्रंलिहलहरि हरिस्थानमप्येव किंचित्।
कल्पान्ते व्याप्तविश्वं परिरटति सरिन्नाथ पाथस्त्वदीयं
किं त्वेतत् कुम्भयोनेः करकुहरदरीपूरमाचामतोऽभूत्॥

**आद्यन्ताकारविरहाद् बन्धदोषः स्फुटोऽपि यः।**
**अविलुप्तैर्विसर्गान्तैः स्रग्धरायां समीहते॥४२॥**

यथा मम-

७५. शौर्यश्रीकेशपाशः करिदलनमिलन्मौक्तिकव्यक्तपुष्पः
क्षोणीरक्षाभुजङ्गः कुलशिखरिलुठत्कीर्तिनिर्मोकपट्टः।
शत्रुव्रातप्रतापप्रलयजलधरस्फारधाराकरालः
प्रीत्यै लक्ष्मीकटाक्षः कुवलयविजयी यस्य पाणौ कृपाणः॥

**एवमुद्देशलेशेन वृत्तानां दर्शितः क्रमः।**
**अनयैव दिशा सर्वं ज्ञेयं तज्ज्ञैर्यथोचितम्॥४३॥**

**मन्दाक्रान्ता भवेन् मध्ये शालिनी पूरिताक्षरा।**
**उपेन्द्रवज्रं वंशस्थं पर्यन्तैकाक्षराधिकम्॥४४॥**

**इत्यादि दर्शितं नेह स्वतः सिद्धो ह्ययं क्रमः।**
**न वेत्ति तदवृत्तज्ञस्तज्ज्ञस्य क्वोपयुज्यते॥ ४५॥**

**इति परिचितनानारूपवाणीगुणानां**
**विदितविविधदोषोद्देशलेशान्तराणाम्।**

इदमतिशयसूक्ष्मैर्वृत्तचर्चाविचारै-
रभिहितमभिगम्यं योगितुल्याशयानाम् ।।४६ ।।

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्रविरचिते
सुवृत्ततिलके गुणदोषदर्शनं नाम
द्वितीयो विन्यासः ।

* * * * *

## तृतीयो विन्यासः वृत्तविनियोगः

प्रबन्धः सुतरां भाति यथास्थानं विवेचकः (निवेशितैः)।
निर्दोषैर्गुणसंयुक्तैः सुवृत्तैर्मौक्तिकैरिव ॥१॥

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः।
चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः ॥२॥

शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम्।
काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति ॥३॥

शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत्।
भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते ॥४॥

तत्र केवलशास्त्रेऽपि केचित् काव्यं प्रयुञ्जते।
तिक्तौषधरसोद्वेगे गुडलेशमिवोपरि ॥५॥

यथा वैद्यके वाग्भटस्य-

७६. मधु मुखमिव सोत्पलं प्रियायाः कलरसना परिवादिनी प्रियेव।
कुसुमचयमनोहरा च शय्या किसलयिनी लतिकेव पुष्पिताग्रा ॥

शास्त्रं कुर्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा।
येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥६॥

काव्ये रसानुसारेण वर्णनानुगुणेन च।
कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥७॥

शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम्।
काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित् ॥८॥

पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु।
उपदेशप्रधानेषु कुर्यात् सर्वेष्वनुष्टुभम्।।९।।

नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात्।
यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम्।।१०।।

उग्रगोग्रहसङ्ग्रामे तत्कालसदृशोपमाः।
दृष्टास्त एव वैराटेस्त एवाश्वाः किरीटिनः।।११।।

तथाप्यवस्थासदृशैः साधुशब्दपदस्थिताः।
सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव।।१२।।

वृत्तरत्नावली कामादस्थाने विनिवेशिता।
कथयत्यज्ञतामेव मेखलेव गले कृता।।१३।।

नहि नाम नवोन्मेषिकुचायाश्चारुचक्षुषः।
चिरत्यक्तस्मराचारे जराजीर्णकचे रुचिः।।१४।।

तस्मादत्र यथास्थाने विनियोगाय सङ्गतिः।
उदाहरणदिङ्मात्रैर्दर्शिताभिमता सताम्।।१५।।

आरम्भे सर्गबन्धस्य कथाविस्तरसङ्ग्रहे।
शमोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम्।।१६।।

आरम्भे यथा *भर्तृमेण्ठस्य*-

७७. आसीद्दैत्यो हयग्रीव सुहृद्वेश्मसु यस्य ताः।
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः।।

कथाप्रसङ्गे *यथाभिनन्दस्य-*

७८. तस्यां निजभुजोद्योगविजितारातिमण्डलः।
आखण्डल इव श्रीमान् राजा शूद्रक इत्यभूत्॥

शमोपदेशे मथा मम-

७९. पृथुशास्त्रकथाकन्थारोमन्थेन वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम्॥

शृङ्गारालम्बनोदारनायिकारूपवर्णनम्।
वसन्तादि तदङ्गं च सच्छायामुपजातिभिः॥१७॥

रूपवर्णनं यथा *कालिदासस्य-*

८०. मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला।
आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम्॥

कु.सं.१-३९

वसन्तवर्णनं यथास्यैव-

८१. बालेन्दुवक्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥

कु.सं.३.२९

**रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु।**
**षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते॥१८॥**

चन्द्रोदये यथास्यैव-

८२. अङ्गुलीभिरिव केशसञ्चयं सन्नियम्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥

नीतिर्यथा *भारवेः*-

८३. श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः॥

कि.१.१

**वसन्ततिलकं भाति सङ्करे वीररौद्रयोः।**
**कुर्यात् सर्गस्य पर्यन्ते मालिनीं द्रुततालवत्॥१९॥**

वीररौद्रयोर्यथा *रत्नाकरस्य*-

८४. जृम्भाविकासितमुखं नखदर्पणान्त-
राविष्कृतप्रतिमुखं गुरुरोषगर्भम्।
रूपं पुनातु जनितारिचमूविमर्श-
मुद्वृत्तदैत्यवधनिर्वहणं हरेर्वः॥

सर्गान्ते यथा *कलिदासस्य*-

८५. अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः॥ कु.स.१-६०

**उपपन्नपरिच्छेदकाले शिखरिणी मता।**
**औदार्यरुचिरौचित्यविचारे हरिणी वरा (यथा)॥२०॥**

उपपन्नपरिच्छेदे यथा भर्तृहरेः-

८६. भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो
विचित्रालापानां वयमपि कवीनामनुचराः।
तथाप्येवं ब्रूमो न हि परहितात् पुण्यमपरं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम्॥ सु.सं.२८७

औदार्येऽप्यस्यैव-

८७. विपुलहृदयैरन्यैः कैश्चिज् जगज् जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः॥ सु. सं. १६२

**साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा।**
**प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते॥२१॥**

साक्षेपे यथा *यशोवर्मणः*-

८८. स यस्य दशकन्धरं कृत[१]वतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सांध्यो विधिः।
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः॥

प्रावृट्प्रवासे यथा *कालिदासस्य*-

८९. तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः।

१.धृत इति सुरभारती प्रकाशनम्

आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श॥ मेघ.२

**शौर्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम्।**
**सावेगपवनादीनां वर्णने स्रग्धरा मता ॥२२॥**

शौर्यस्तवे यथा श्रीचक्रस्य-

९०. नेतुं नौभिरिभा न यान्ति दृतिभिस्तार्याः कियन्तो हया-
स्तज्जानुद्वयसेन देव पयसा सैन्यं समुत्तार्यताम्।
नो चेद् भङ्गभयद्रुतारिवनितानेत्रप्रणालीलुठद्-
बाष्पाम्भः प्लवपूरितोभयतटी द्राग् वत्स्यतीरावती॥

सावेगपवने यथा मम *पवनपञ्चाशिकायाम्-*

९१. प्रेङ्खच्छङ्खाभिघातस्फुटदखिलचलच्छुक्तिनिर्मुक्तमुक्ता-
मुक्तव्यक्ताट्टहासाः स्मरनृपसकलद्वीपसञ्चारचाराः।
सर्पत्कर्पूरपूरप्रवणकरचिता दिग्वधूकर्णपूरा
धावन्त्याध्मातविश्वा रतविधुतवधूबन्धवो गन्धवाहाः॥

**दोधकतोटकनर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम्।**
**निर्विषयस्तु रसादिषु तेषां निर्नियमश्च सदा विनियोगः॥२३॥**

**शेषाणामप्यनुक्तानां वृत्तानां विषयं विना।**
**वैचित्र्यमात्रपात्राणां विनियोगो न दर्शितः॥२४॥**

**इत्येष वश्यवचसां सर्ववृत्तप्रसङ्गिनाम्।**
**उक्तो विभागः सद्वृत्तविनिवेशे विशेषवान्॥२५॥**

एकस्मिन्नेव यैर्वृत्ते कृतो द्वित्रेषु वा श्रमः।
न नाम विनियोगार्हास्ते दरिद्रा इवोत्सवे॥२६॥

वृत्ते यस्य भवेद् यस्मिन्नभ्यासेन प्रगल्भता।
स तेनैव विशेषेण स्वसन्दर्भं प्रदर्शयेत्॥२७॥

एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते।
तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात्॥२८॥

अनुष्टुप् सततासक्ता साभिनन्दस्य नन्दिनी।
विद्याधरस्य वदने गुलिकेव प्रभावभूः॥२९॥

स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः।
चमत्कारैकसाराभिरुद्यानस्येव जातिभिः॥३०॥

वृत्तच्छत्रस्य सा कापि वंशस्थस्य विचित्रता।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता॥३१॥

वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी।
रत्नाकरस्योत्कलिका चकास्त्याननकानने॥३२॥

भवभूतेः शिखरिणी निरर्गलतरङ्गिणी।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति॥३३॥

सुवशा कालिदासस्य मन्दाक्रन्ता प्रवल्गति।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना॥३४॥

शार्दूलक्रीडितैरेव प्रख्यातो राजशेखरः।
शिखरीव परं वक्रैः सोल्लेखैरुच्चशेखरः॥३५॥

इत्येवं पूर्वकवयः सर्ववृत्तकरा अपि।
अस्मिन् हार इवैकस्मिन् प्रायेणाभ्यधिकादराः ॥३६॥

सुवर्णार्हप्रबन्धेषु यथास्थाननिवेशिनाम्।
रत्नानामिव वृत्तानां भवत्यभ्यधिका रुचिः ॥३७॥

तस्माद् यथायं विनियोगमार्गः
प्रदर्शिनो वृत्तनिवेशनेषु ।
तथैव कार्यः कविभिः कृतज्ञै-
रवश्यवाचां नियमस्तु नायम् ॥३८॥

इत्यारुरुक्षोः प्रथमोपयुक्तं प्रवृत्तवाचश्च विवेककारि।
महाकवेरप्यतिसूक्ष्मतत्त्वविचारहर्षप्रदमेतदुक्तम् ॥३९॥

इत्यौचित्यप्रचुररचनाविश्रुतश्रव्यवृत्त-
व्यक्तिः शक्तिप्रसृतवचसां दर्शिता सङ्ग्रहेण।
क्षेमेन्द्रेण प्रणयिविपदां हर्तुराश्चर्यकर्तु-
र्भूभृद्भर्तुर्भुवनजयिनोऽनन्तराजस्य राज्ये ॥४०॥

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनाम *श्रीक्षेमेन्द्रविरचिते सुवृत्ततिलके वृत्तविनियोगो* नाम तृतीयो विन्यासः।

॥ इति सुवृत्ततिलकम् ॥

* * * * *

# ३. नीतिकाव्यानि

## चतुर्वर्गसंग्रहः

### प्रथमः परिच्छेदः - धर्मप्रशंसा

सत्यस्कन्धस्तरुणकरुणापूतपीयूषसिक्तः
क्षान्तिच्छायः शुभमतिलतालङ्कृतः शीलमूलः।
भूयात् सत्त्वप्रसवविलसत्पल्लवः पुण्यभाजां
धर्मः प्रोद्यत्कुशलकुसुमः श्रीफलो मङ्गलाय॥१॥

उपदेशाय शिष्याणां सन्तोषाय मनीषिणाम्।
क्षेमेन्द्रेण निजश्लोकैः क्रियते वर्गसङ्ग्रहः॥२॥

धर्मः शर्म परत्र चेह च नृणां धर्मोऽन्धकारे रविः
सर्वापत्प्रशमक्षमः सुमनसां धर्माभिधानो निधिः।
धर्मो बन्धुरबान्धवे पृथुपथे धर्मः सुहृन् निश्चलः
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात् परः॥३॥

कर्णे धर्मकथा मुखे परिचितं धर्माभिरामं वच-
श्चित्ते धर्ममनोरथः प्रणयिनी सर्वत्र धर्मस्थितिः।
काये धर्ममयी क्रिया परिकरः कोऽयं शुभप्राप्तये
कल्पापायपदेऽप्युपप्लवलवैरस्पृष्टवेलाफलः॥४॥

निन्द्यं जन्म प्रमोहस्थिरतरतमसां यन् मनुष्यत्वहीनं
बुद्ध्या हीनो मनुष्यः शुभफलविकलस्तुल्यचेष्टः पशूनाम्।
बुद्धिः पाण्डित्यहीना भ्रमति सदसतोस्तत्त्वचर्चाविचारे
पाण्डित्यं धर्महीनं शुकसदृशगिरां निष्फलक्लेशमेव ॥५॥

पाण्डित्यं यन्मदान्धानां परोत्कर्षविनाशनम्।
मात्सर्यपांसुपूरेण मातङ्गस्नानमेव तत्॥ ६॥

तत् प्राज्ञत्वं हरति विमलं येन शीलं न काम-
तद् धीरत्वं प्रशमवशतां यान्ति येनेन्द्रियाणि।
तद् वैदग्ध्यं भुवनजयिनी वञ्च्यते येन माया
तत् पाण्डित्यं भवपरिभवः शान्तिमायाति येन॥७॥

अन्धः स एव श्रुतवर्जितो यः शठः स एवार्थिनिरर्थको यः।
मृतः स एवास्ति यशो न यस्य धर्मे न धीर्यस्य स एव शोच्यः॥८॥

हितं न किञ्चिद् विहितं परस्य दत्तं न वित्तं न च सत्यमुक्तम्।
यस्मिन् दिने निष्फलतां प्रयातमायुः स कालः परिदेवनस्य॥९॥

न दानतुल्यं धनमन्यदस्ति न सत्यतुल्यं व्रतमन्यदस्ति।
न शीलतुल्यं शुभमन्यदस्ति न क्षान्तितुल्यं हितमन्यदस्ति॥१०॥

सत्यं वाचि दृशि प्रसादमयता सर्वाशयाश्वासिनी
पाणौ दानविमुक्तिरात्मजननक्लेशान्तचिन्ता मतौ।
संसक्ता हृदये दयैव दयिता काये परार्थोद्यमो
यस्यैकः पुरुषः स जीवति भवे भ्राम्यन्त्यजीवाः परे॥११॥

परप्राणत्राणप्रणिहितधियां धर्मजननी
दयैवैका लोके सकलजनताजीवितसुधा।
असामान्यं पुण्यं मुनिभिरुदितं ज्ञाननयनै-
रहिंसा संसारे स्वपरकुशलश्लाघ्यसरणिः ॥१२॥

प्राणानां परिरक्षणाय सततं सर्वाः क्रियाः प्राणिनां
प्राणेभ्योऽप्यधिकं समस्तजगतां नास्त्येव किञ्चित् प्रियम्।
पुण्यं तस्य न शक्यते गणयितुं यः पूर्णकारुण्यवान्
प्राणानामभयं ददाति सुकृती तेषामहिंसाव्रतः ॥१३॥

स एव सत्त्वाभरणप्रभावभूर्भुवः प्रकामाभरणं नरोत्तमः।
मुखाम्बुजे यस्य वसत्यनत्यया सदैव सत्याभरणा सरस्वती ॥१४॥

क्लिन्नं कोषनिषण्णमर्थिविफलं शल्यायते यत्परं
वित्तं क्लेशनिमित्तमेव मलिनं यातु स्वयं तत् क्षयम्।
यत् कारुण्यपरोपकारविकलं भूभारभूतं वपुः
स्वार्थासक्तमनर्थसार्थसदनं मा मास्तु तत् कस्यचित् ॥१५॥

वन्द्यः स पुंसां त्रिदशाभिवन्द्यः कारुण्यपुण्योपचयक्रियाभिः।
संसारसारत्वमुपैति यस्य परोपकाराभरणं शरीरम् ॥१६॥

परद्रविणनिःस्पृहः परकलत्रनिष्कौतुकः
परप्रणयवत्सलः परनिकारबद्धक्षमः।
परस्तुतिविशारदः परगुणापवादोज्झितः
परार्तिहरणोद्यतो भवति भूरिपुण्यैर्नरः ॥१७॥

पद्मानामिव सा सतां सगुणता या संश्रयार्हा श्रियः
सा श्रीर्भद्रगजेन्द्रमूर्तिरिव या दानेन विभ्राजते।
तद् दानं नवचन्द्रवद् यदनिशं मानेन सम्पूर्यते
मानोऽसौ तृणवन् न यः परिचयम्लानः शनैः शुष्यति ॥१८॥

लक्ष्मीर्दानफला श्रुतं शमफलं पाणिः सुरार्चाफल-
श्चेष्टा धर्मफला परार्तिहरणक्रीडाफलं जीवितम्।
वाणी सत्यफला जगत्सुखफलस्फीता प्रभावोन्नति-
र्भव्यानां भवशान्तिचिन्तनफला भूत्यै भवत्येव धीः ॥१९॥

शीलं शीलयतां कुलं कलयतां सद्भावमभ्यस्यतां
व्याजं वर्जयतां गुणं गणयतां धर्मे धियं बध्नताम्।
क्षान्तिं चिन्तयतां तमः शमयतां तत्त्वश्रुतिं शृण्वतां
संसारे न परोपकारसदृशं पश्यामि पुण्यं सताम् ॥२०॥

तीर्थानि दीर्घाध्वपरिश्रमाणि बहुव्ययानि क्रतुडम्बराणि।
तपांसि मुक्त्वा तनुशोषणानि हिंसाविरामे रमतां मतिर्वः ॥२१॥

यज्वा विप्रः शुचिरनुचरः संयतात्मा तपस्वी
मन्त्री विद्वानवनिवनिताभूषणं भूमिपालः।
धर्मोद्याने सुकृतसलिलासारसंसिच्यमाने
पूर्णः सोऽयं कृतयुगतरोर्भाविनो बीजवापः ॥२२॥

दम्भेन शीलव्रतमस्पृहत्वं विरक्तता श्रोत्रियता मृदुत्वम्।
एतानि मूलानि निगूढगूढकौटिल्यलीनानि कलिद्रुमस्य ॥२३॥

यावन्ति दानानि वदन्ति सन्तस्तपांसि तीर्थानि च यानि सन्ति।
तत् पुण्यमेकत्र विभाति सर्वं महार्हमेकत्र च निःस्पृहत्वम्॥२४॥

सतामदैन्यं वदनस्य शोभा निर्लोभतान्तर्वचसामयाच्ञा।
कायस्य सत्सेव्यमसेवकत्वं पाणेरनुत्तानतलत्वमेव॥२५॥

मान्यः कुलीनः कुलजात् कलावान् विद्वान्कलाज्ञाद् विदुषः सुशीलः।
धनी सुशीलाद् धनिनोऽपि दाता दातुर्जिता कीर्तिरयाचकेन॥२६॥

तप्तैस्तीव्रव्रतैः किं विकसति करुणास्यन्दिनी यद्यहिंसा
किं दूरैस्तीर्थसारैर्यदि शमविमलं मानसं सत्यपूतम्।
यत्नादन्योपकारे प्रसरति यदि धीर्दानपुण्यैः किमन्यैः
किं मोक्षोपाययोगैर्यदि शुचिमनसामच्युते भक्तिरस्ति॥२७॥

**इति धर्मप्रशंसा नाम प्रथमः परिच्छेदः।**

* * * * *

## द्वितीय परिच्छेदः - अर्थप्रशंसा

प्रधानधाम्नां निधये धनाय नमोऽस्तु तस्मै गुणिनोऽपि यत्नात्।
यदाशया निर्गुणभूपतीनामग्रे गुणान् पण्यदशां नयन्ति ॥१॥

दानादिधर्मः क्रियते धनेन धनेन धन्या धनमाप्नुवन्ति।
धनैर्विना कामकथापि नास्ति त्रिवर्गमूलं धनमेव नान्यत् ॥२॥

यत् क्लीबैर्भटकुक्कुटोत्कटरणक्रीडा समादिश्यते
यन् मूर्खैः सुखलीलया कविशुकालापश्चिरं चर्व्यते।
नीचैरुच्चतरश्च सेवकहयः स्वाम्येन यद् वाह्यते
तद् वित्तस्य विलासनृत्तवसतेरुद्वृत्तवृत्तायितम् ॥३॥

पूजा धनेनैव न सत्कुलेन कीर्तिर्धनेनैव न विक्रमेण।
रूपं धनेनैव न यौवनेन क्रिया धनेनैव न जीवितेन ॥४॥

वृद्धाः प्रसिद्धा विबुधा विदग्धाः शूराः श्रुतिज्ञाः कवयः कुलीनाः।
विलोकयन्तः सधनस्य वक्त्रं जयेति जीवेति सदा वदन्ति ॥५॥

ऋद्ध्या युतं निश्चलपक्ष्मनेत्रं
मौनान्वितं देवमिवाकुलीनम्।
दीनः कुलीनः प्रणमन् कुलीनः
कृताञ्जलिः स्तौति धनाभिकामः ॥६॥

तस्मादलब्धद्रविणस्य लाभे लब्धस्य रक्षानियमे यतेत।
संरक्षमाणस्य सदा विवृद्धौ वृद्धस्य च स्थानविभागसर्गे ॥७॥ (युग्मम्)

धर्माधानोऽशशिशुचि(नि)यमः(?) प्रेयसीमित्रबन्धु-
स्थानोत्साहोपचयविजयप्राणविद्याकलाप्तौ।

श्लाघ्ये देहप्रशमसमये निर्विवादे विभागे
वित्तत्यागे न भवति सतां ग्रन्थिबन्धानुबन्धः ॥८॥

गोष्ठी विटैश्चारणचक्रचर्या वेश्यारतिः साधुविशेषगन्धः।
स्पर्धा सुवेषैर्निजवृत्तिलज्जा प्रधानमेतम् निधनं धनानाम्॥९॥

जाया शीलविवर्जिता व्ययवती मायानिकायः सुहृद्
दुष्पूरो गुरुरर्थभोगनिचयैर्बन्धुर्दरिद्रः शठः।
दासश्चौर्यपरोऽलसश्च कुपदे पुत्रः खलैः पातितः
सोऽयं क्लेशशताप्तसञ्चयनिधेः प्रत्यक्षलक्ष्यः क्षयः ॥१०॥

दाक्ष्यं वित्तस्य मूलं सुनयपरिचयः सम्पदुद्यानसेकः
प्रागल्भ्यं रत्नवर्षि व्यसनवनसमुन्मूलनं संयतत्वम्।
श्रीरक्षा मन्त्रगुप्तिर्विपदुपशमनं वर्जनं दुर्जनाना-
मालस्यं मानवानां धनवननलिनासह्यभारस्तुषारः ॥११॥

हिमासहत्वं रवितापभीतिः कथामतिर्मार्गजनप्रतीक्षा।
लज्जाभिमानः क्षणसंमुखत्वं नक्षत्रचर्चा च धनस्य विघ्नाः ॥१२॥

वेषः परिक्लेशविशेषचिन्ता परोपरोधः स्ववशावलेपः।
नदीफलानामिव शीघ्रगानां हानिर्धनानां ग्रहणे विलम्बः ॥१३॥

गुरुगणकैरबुधानां क्षयचतुरैश्चौरमूषकैर्वणिजाम्।
कायस्थगायनगणैर्भूमिभुजां भुज्यते लक्ष्मीः ॥१४॥

दारिद्र्येण कुलं मदेन कुशलं द्वेषेण विद्याफलं
शीलं दुर्जनसङ्गमेन मलिनाचारेण शुक्लं यशः।

आलस्येन धनं प्रयाति निधनं लौल्येन मानोन्नति-
र्याच्ञादैन्यपरिग्रहेण च गुणग्रामः समग्रो नृणाम्॥१५॥

मौग्ध्यान् मृगार्थी रघुनन्दनोऽपि बाणः प्रमादाद् बलिरार्जवेन।
नलः कुसङ्गेन ययातिजश्च क्लेशासहत्वाद् व्यसनान्यवापुः॥१६॥

मौग्ध्यं प्रमादोऽविश्वासः कुसङ्गः क्लेशभीरुता।
पञ्च सङ्कोचदा दोषाः पद्मिन्या इव सम्पदः॥१७॥

कुभूपकूपान्तरलम्बनाप्तवित्तानि रन्ध्रैर्घटसन्निभानाम्।
असंवृतैरिन्द्रियनामधेयैः पुंसां पयांसीव परिस्रवन्ति॥१८॥

सास्वादे नवसौरभे मधुलिहां पद्मोदरे बन्धनं
दीपे रूपरताः प्रयान्ति सततापातात् पतङ्गाः क्षयम्।
गीतेनैव मृगाः पतन्ति करिणीस्पर्शेन नीता गजा-
स्तस्मादिन्द्रियसक्तिरेव सहसा पुंसां विपद्दूतिका॥१९॥

कुलं कुवृत्या कलुषीकृतं तैः कृतो गुणौघस्तृणतुल्यमूल्यः।
मानस्य मूले निहितः कुठारः प्राप्तं न वित्तं परिरक्षितं यैः॥२०॥

जातः सत्कुलजः स नीचविनयी सेवादमानैरध-
स्तस्योग्रं पतितः स्वमानयशसोर्द्रोहेण शापानलः।
तेनास्वस्तिमता स्वहस्तनिहितं याच्ञाविषं भक्षितं
वित्तं येन न रक्षितं रिपुमुखं तेन स्थितं वीक्षितुम्॥२१॥

धावन् सेवितुमेति साधुरधमं वन्ध्यस्ततो यात्यसौ
नीता मूल्यतुलां गुणाश्च गुणिभिः कश्चिन् न गृह्णाति तान्।

याच्ञा मानमहाशनिर्धनकृता प्राप्तं न किञ्चित् तया
किं किं वा न विधीयते धनधिया धन्यः स यस्यास्ति तत्॥२२॥

विद्याकलापरिचयः क्षितिपालसेवा
दिग्द्वीपमार्गगिरिसम्भ्रमणप्रयासः।
युद्धक्रियाश्च भुवि भोजनलाभलोभात्
तद्वित्तलभ्यमिति वित्तवतां प्रवादः॥२३॥

तावद्धर्मकथा मनोभवरुचिर्मोक्षस्पृहा जायते
यावत् तृप्तिसुखोदयेन न जनः क्षुत्क्षामकुक्षिः क्षणम्।
प्राप्ते भोजनचिन्तनस्य समये वित्तं निमित्तं विना
धर्मे कस्य धियः स्मरं स्मरति कः केनेक्ष्यते मोक्षभूः॥२४॥

अर्थाकृष्टिं विधातुं कटुरटनपटुर्दाम्भिकः श्रीजडानां
जानात्यन्यासहिष्णुर्वितथनिजगुणस्तोत्रपाठेष्वलज्जः।
आर्यः कुर्यान् न सेवां कुलविनयगुणैस्तेन मूकोऽर्थनायां
तीक्ष्णानां मार्गणानां भवति हि पुरतः क्ष्मातपेर्लक्षलाभः॥२५॥

**इत्यर्थप्रशंसा नाम द्वितीयः परिच्छेदः।**

* * * * *

## तृतीयः परिच्छेदः - कामप्रशंसा

ललितललनालीलोदञ्चद्विलोलविलोचनो-
त्पलवनरुचां चञ्चन्तीनां चयैरिव चर्चिता।
सुरभिसुहृदः पक्षच्छायावृतेव च षट्पदैः
कुसुमधनुषः श्यामा मूर्तिस्तनोतु सुखानि वः ॥१॥

भ्रमद्भ्रमरकेतकीविकासदेकपत्रप्रभाः
सनीलमणिनायका इव विमुक्तमुक्तालताः।
दृशः शशिकला इव प्रचितपक्ष्मलेशाङ्किताः
जयन्ति हरिणीदृशाममृतकालकूटच्छटाः ॥२॥

ऋतुं धनानां फलमप्यमाहुः फलं क्रतूनामविवादि पुण्यम्।
पुण्यस्य पूर्णं फलमिन्द्रलोको द्विरष्टवर्षाः स्त्रिय एव नाकः ॥३॥

एताः सन्ति वधूविलासकुटिका भ्रूकार्मुकश्रेणयः
कर्णान्तायतपातिनश्च तरुणीनेत्रत्रिभागेषवः।
निर्दग्धोऽन्धकवैरिणा नवमनः क्षोभाभियोगोद्भवात्
संरम्भादविचार्य केवलमसौ मिथ्या तपस्वी स्मरः ॥४॥

लज्जावक्रो मनसिजधनुर्भ्रूविलासेन तन्व्या-
श्चिन्तापाण्डुः स्पृशति कृशतां वक्त्रकान्त्या शशाङ्कः।
यात्येवाधः प्रहसितरुचिर्दोर्लताभ्यां मृणाली
क्लीबं धत्ते कुवलयकुलं कालिमानं कटाक्षैः ॥५॥

अयोमयानां हृदयेषु तेषां कोऽप्यस्ति नूनं कुलिशोपदेशः।
सोढानि यैः प्रौढविलासिनीनां कर्णान्तमुक्तानि विलोचनानि ॥६॥

कुवलयमयी लोलापाङ्गे तरङ्गमयी भ्रुवोः
शशिशतमयी वक्त्रे गात्रे मृणाललतामयी।
मलयजमयी स्पर्शे तन्वी तुषारमयी स्मिते
दिशति विषमं स्मृत्या तापं किमग्निमयीव सा ॥७॥

स्मरशरनिशिताक्ष्याः कम्पयन्ते न केषां
कुरव इव कटाक्षाः प्रौढशल्या मनांसि।
भुवनजनजिगीषोत्साहयोगाय येषा-
मधिचपलतराणां निश्चला कर्णमैत्री ॥८॥

स्तनस्थले हारिणि सुन्दरीणां नितम्बबिम्बे रशनासनाथे।
धत्ते विशेषाभरणाभिमानलीला नवोल्लेखलिपिः प्रपञ्चम् ॥९॥

कान्ताया विलसद्विलासहसितस्वच्छांशवश्चामरं
संसक्तावभिषेकहेमकलशौ यच् चन्दनाङ्कौ स्तनौ।
यत्कार्तस्वरकान्ति चारु जघनं सिंहासनं भूभुजां
साम्राज्यं तदिदं जयाजयमयः शेषस्तु चिन्तामयः ॥१०॥

नासादितानि वनवासदृढव्रतेन
चित्राणि नेत्रचरितानि मृगैर्मृगाक्ष्याः।
तत्कान्तिरुज्ज्वलरुचिव्यसनादहो नु
हेम्ना हुताशपतनैरपि नैव लब्धा ॥११॥

अभिनवपयोधरोद्गतिविषमस्थितिहारहंसमुखपतिता।
शैवलवलीव चास्यास्त्रिककलिता भाति रोमलता ॥१२॥

नेयं तरुणास्त्रिवलीतरङ्गकुसङ्गिनी राजति रोमराजिः।
स्नात्वा गतोऽस्यां स्मरकेलिवाप्यां कलङ्कलेखामपहाय चन्द्रः ॥१३॥

कर्णे कोकिलकामिनीकलरवः सन्तप्तसूचीचयः
फुल्लाशोकपलाशचम्पकवनाद्युद्दामदावानलः।
तन्वङ्ग्या विरहे वसन्तसमयः कालः किमन्यन् नृणां
देहोच्चाटनमेव षट्पदघटाक्वाणोऽतिथिर्मन्मथः ॥१४॥

आपाण्डुता मदनकीर्तिसखी मुखेन्दौ
प्रौढिं बिभर्ति विरहे हरिणायताक्ष्याः।
अच्छिन्नबाष्पविसरारुणनेत्रकोण-
लीनप्रतापमिव मन्मथमुद्वहन्त्याः ॥१५॥

वियोगे तन्वङ्ग्या हृदयदमने दैन्यसदने
घने भर्तृस्नेहाद् मदनदहने धैर्यचलने।
समासन्ने चिन्ताव्यसनशमने प्राणगमने
तनुस्तापम्लाने वलति नलिनीपत्रशयने ॥१६॥

दाक्षिण्यप्रणयेन पादपतिते कान्ते मया नेक्षिते
प्राणानां ज्वलितः प्रवासपिशुनः शापानलः पश्यसि।
एतैः सम्भ्रमकातरे किमधुना मिथ्यासमाश्वासनैः
सन्तापाय सखि त्वयैव ननु मे मानोपदेशः कृतः ॥१७॥

समायाते पत्यौ बहुतरदिनप्राप्यपदवीं
समुल्लङ्घ्याविघ्नागमनचतुरं चारुनयना।
स्वयं हर्षोद्बाष्पा हरति तुरगस्यादरवती
रजः स्कन्धालीनं निजवसनकोणावहननैः ॥१८॥

वासः कम्पविश्रृङ्खलं वितिलकं स्वेदोद्गमादाननं
संदष्टोऽधपरल्लवः कलयति श्वासोष्मणा म्लानताम्।
दूति त्वद्वचने शठस्य कठिनस्याग्रे गते कुण्ठतां
मत्स्नेहाद् विहितस्त्वया कुपितया क्लेशप्रवेशः कियान्॥१९॥

व्याप्तास्वशोकज्वलनेन दिक्षु निरन्तरापातशिलीमुखासु।
रुद्धासु जालैर्वनमञ्जरीणां नष्टा गतिः पान्थकुरङ्गकस्य॥२०॥

विकसति सहकारे दुःसहे कर्णिकारे
मधुकरपरिहारे सस्मिते सिन्धुवारे।
अहह विरहभीत्या कामिनीं कण्ठलग्नां
त्यजति नववसन्ते हन्त कापालिकः कः॥२१॥

तन्वङ्ग्या नवसङ्गमे व्यवसिते कान्ते बलान् मेखलां
मोक्तुं श्वासविकासकम्पविकलाः कण्ठे लुठन्त्यः सुधाम्।
मीलत्पद्मनिपीडितालिरणिताः क्षीबाः (?) किरन्ति क्षणं
धन्यानां नननेति निःसहतया हुङ्कारगर्भा गिरः॥२२॥

गाढालिङ्गननिश्चलाङ्गलतिका कान्तेन रुद्धा बला-
दालम्ब्यालकवल्लरीं विदधता वक्त्राम्बुजे चुम्बनम्।
कम्प्रप्रस्फुरितारुणाधरदला बाला निमील्याक्षिणी
मन्ये मानसजन्मजीवजननं जप्यं समभ्यस्यति॥२३॥

केनैते विशिखाः स्फुरच्छिखिशिखाशाखासखा मानिनी-
मौनोन्माथपृथुप्रथा विरहिणीनिःश्वासपक्षानिलाः।

सह्यन्ते रतिवल्लभस्य लटभानेत्रान्ततीक्ष्णाननाः
संदष्टाधरपल्लवाग्रतरुणीसीत्कारशूत्कारिणः ॥२४॥

आयुर्दीर्घतरं तनोतु नयनद्वन्द्वं कुरङ्गीदृशां
कीर्तिं ते स्मितसन्ततिः स्तनतटश्रोणी विशालश्रियम्।
देवस्य त्रिजगज्जयाय पटहे दत्ते मृगाक्षीगुरो-
रित्युत्साहसहे हिताय विहिता जाने जनन्याशिषः ॥२५॥

**इति कामप्रशंसा नाम तृतीयः परिच्छेदः**

* * * * *

## चतुर्थः परिच्छेदः - मोक्षप्रशंसा

भोगाभोगविलोपकोपकलहैरस्तोकशोकाकुलं
कामं काममकामधामसमयं योगं वियोगानुगम्।
रोगोद्गारविकारपाकविषमं निर्मूल्य नेत्रव्यथाः
सेकं मोक्षफलस्य संशयतरोरेकं विवेकं नुमः ॥१॥

उद्याने मधुचन्द्रिका शशिमुखीगीतं सुहृत्सत्कथा
कस्येदं न सुखाधिकं सुखसखीं प्रीतिं परां वर्षति।
किं त्वेतत् खलसङ्गसर्परसनामातङ्गकर्णाञ्चल-
प्रौढापाङ्गपतङ्गपक्षगणिकारागेन्द्रजालोपमम्॥२॥

बाल्यं दुःसहमोहसंहतिहतं रागोल्बणं यौवनं
वृद्धत्वं सकलोपभोगकलनावैकल्यशल्याकुलम्।
वैराग्येण विना विनष्टविमलालोकं सशोकं सदा
संसारे सरतां पुनः पुनरहो यातं वृथा जीवितम्॥३॥

दृष्टा बालकचेष्टा यौवनदर्पोऽथ वृद्धवैराग्यम्।
सापि गता सोऽपि गतस्तदपि गतं स्वप्नमायेयम्॥४॥

पुनः पुनर्जन्मसहस्त्रहेतुर्मलीमसः स्नेहसमोऽस्ति नान्यः।
पुंसः प्रदीपस्य च यः करोति सेवोन्मुखत्वं गृहसंविभागे॥५॥

आक्रान्तं पिशुनैर्नरेन्द्रभवनं विद्यागृहं मत्सरै-
रायासैर्द्रविणं कुलं कुतनयैर्नानावियोगैः सुखम्।
साधुत्वं खलवञ्चनापरिभवैश्चिन्तासहस्त्रैर्मन
स्तन् नास्त्येव च यत् सदोषकलुषं निर्दोष एकः शमः॥६॥

भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं
दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयम्।
माने म्लानिभयं जये रिपुभयं काये कृतान्ताद् भयं
सर्वं नाम भवे भवेद् भयमहो वैराग्यमेवाभयम्॥७॥

कृतं शमजलेन यैर्विरततीव्रतृष्णं मनः
परं भवपराभवोद्धरणधीरधुर्यैर्न ते।
भजन्ति जननीजनप्रसृतदुग्धधाराघन-
स्तनप्रणयि तत्पुनर्दशनशून्यमास्यं नराः॥८॥

उत्सृज्य सन्तोषसुखामृतानि प्रीत्यै पराराधनसाधनानि (?)।
अहो नु मानानि (?) धनानि पुंसां धनानि निद्रासुखसाधनानि॥९॥

विवेकस्वाधीने विजनगमने जन्मशमने
विचारे (?) संसारे व्यसनपरिहारेऽपि सुकरे।
परं लज्जा साधोः प्रसवसमये शोणितमये
पुनः पाणिं मूर्ध्नि क्षिपति यदि धात्रीति पतितः (?)॥१०॥

आयासप्रसवे विचारविरसे लज्जाजुगुप्सास्पदे
रागान्धा विरमन्ति नैव कुपदे स्त्रीभोगानाम्नि च्युताः।
चित्तं नास्ति सचेतसामपि निजाकर्षे विमर्षः क्षणं
रत्यन्तेषु (?) पराङ्मुखत्वमनिशं प्राप्नोति नायं जनः॥११॥

केशाकुले रक्तकषायपङ्ककपालभाजि प्रकटास्थिदन्ते।
कायश्मशाने रमतेऽङ्गनानां कामाकुलः कामुककाकलोकः॥१२॥

अहो तृष्णा वेश्या सकलजनतामोहनकरी
विदग्धा मुग्धानां हरति विवशानां शमधनम्।
विपद्दीक्षादक्षासह (?) तरलतारैः प्रणयिनी-
कटाक्षैः कूटाक्षैः कपटकुटिलैः कामकितवः॥१३॥

बाल्यं कुलीरजननीजनकप्रमोहं
तद् यौवनं कुलटभासुभगोपयोगम्।
वृद्धत्वमप्युपचितं कुकलत्रपुत्रैः
सत्यं न किञ्चिदिदमत्र खचित्रमित्रम्॥१४॥

न कस्य कुर्वन्ति शमोपदेशं स्वप्नोपमानि प्रियसंगतानि।
जरानिपीतानि च यौवनानि कृतान्तदष्टानि च जीवितानि॥१५॥

चिन्त्यन्ते यदि नाम रामनहुषश्वेतादिराजर्षयः
किं तैर्याति विशालकालकलनामीलत्कथाकौतुकैः।
गण्यन्तां स्वदृशैव भूरिविभवा दृष्टाश्च नष्टाश्च ये
तस्मात् सर्वमनित्यताकवलितं ज्ञात्वा शमः स्मर्यताम्॥१६॥

यदा लोला लक्ष्मीः क्षितिपतिरणारण्यहरिणी
यदा स्वप्नोन्मेषा तनुधनतडिद् यौवनरुचिः।
यदा कालः कामं जनजलजकिञ्जल्कमधुप-
स्तदा संसारेऽस्मिन्नविबुधमनो नोपरमते॥१७॥

सन्तोषाम्भः पिबति निभृतस्वच्छमिच्छामयूरी
भ्रान्त्वा चान्तःकरणहरिणी याति विश्रान्तिमन्तः।

लीनश्चायं शमतरुतले शीतले तापतान्तिं
मीलत्कामस्त्यजति नियतं मत्तचित्तद्विपेन्द्रः ॥१८॥

याते भोगे स्मरणपदवीं सक्तनानावियोगे
शोकः स्तोकं स्पृशति न मनः सर्वथा निर्व्यथानाम्।
काले काले किल कलयतामन्तवत् सर्वमन्तः
प्रायः कायक्षयपरिचये निश्चयो निर्भरं नः ॥१९॥

यातु व्यक्तिं कुसुमसमयः सञ्चयः सौरभाणां
खे खेलन्तो मलयनिलयाः सन्ततं वान्तु वाताः।
कामः कामं क्षपयतु धृतिं पक्ष्मलाक्षीकटाक्षैः
शान्तिश्चित्ते स्थिरसुखसखी निर्विकारे ममास्तु ॥२०॥

जरानिगीर्णे सुभगाभिमाने म्लाने शनैर्भूतिलताप्रताने।
धनावदाने शिथिलाभिमाने धृतिर्निधाने प्रशमाभिधाने ॥२१॥

रागेण सार्धं वयसि प्रयाते गतेषु भोगेषु सह स्पृहाभिः।
देहे च मोहेन समं प्रलीने निरर्गलोऽसावपवर्गमार्गः ॥२२॥

चित्तं बातविकासिपांसुसचिवं रूपं दिनान्तातपं
भोगं दुर्गतगेहबन्धचपलं पुष्पस्मितं यौवनम्।
स्वप्नं बन्धुसमागमं तनुमपि प्रस्थानपुष्यप्रपां
नित्यं चिन्तयतां भवन्ति न सतां भूयो भवग्रन्थयः ॥२३॥

अभिन्नार्थानर्थः सुहृदरिपरिच्छेदरहितः
समावज्ञामानः सदृशसुखदुःखव्यतिकरः।

न मौनी नामौनी वनजलसमानासनमना:
न दैन्यं नादैन्यं स्पृशति गुणनैर्गुण्यविरतः ॥२४॥

सा दूरे हरिचन्दनस्य नु परं हारेण किं हारिता
नो कान्ताकुचमण्डलस्य सुलभा चन्द्रे दरिद्रे कुतः।
गीते संगतिरेव नास्ति समता तस्यां न सिद्धा मधो-
नैराश्ये सहसैव चेतसि कृते या प्रीतिरुज्जृम्भते ॥२५॥

लब्धावधिः सत्यसुखामृतत्य नवप्रमोदाद्भुतपूर्णकामः।
भारावताराादिव निर्वृतोऽहं त्यागेन सर्वाग्रहसङ्ग्रहणाम् ॥२६॥

धनार्जनविचिन्तनं हृदयरोपिताशावनं
वृथा चरणशातनं खलकदर्यसंसेवनम्।
सदा व्यसनशोचनं प्रियवियोगदीनाननं
विहाय गृहमज्जनं व्रजति पुण्यवान् निर्जनम् ॥२७॥

नास्ति स्वस्तिकरः परः परिभवो धर्मात्मनां प्राणिना
मापत्तापशमक्षमं धनसमं नान्यत् क्रियाजीवितम्।
संसारे परमस्ति नोऽत्र सुखदं रम्यं न रामाननात्
सर्वक्लेशविनाशनिर्वृतिरसः को नाम मोक्षात् परः ॥२८॥

चतुर्वर्गोपदेशेन क्षेमेन्द्रेण यदर्जितम्।
पुण्यं तेनास्तु लोकोऽयं चतुर्वर्गस्य भाजनम् ॥२९॥

**इति मोक्षप्रशंसा नाम चतुर्थः परिच्छेदः**

**॥ समाप्तोऽयं चतुर्वर्गसंग्रहः ॥**

* * * * *

## (२) चारुचर्या

श्रीलाभसुभगः सत्यसक्तः स्वर्गापवर्गदः।
जयतात् त्रिजगत्पूज्यः सदाचार इवाच्युतः ॥१॥

ब्राह्मे मुहूर्ते पुरुषस्त्यजेत् निद्रामतन्द्रितः।
प्रातः प्रबुद्धं कमलमाश्रयेच्छ्रीर्गुणाश्रया ॥२॥

पुण्यपूतशरीरः स्यात् सततं स्याननिर्मलः।
तत्याज वृत्रहा स्नानात् पापं वृत्रवधार्जितम् ॥३॥

न कुर्वीत क्रियां काञ्चिदनभ्यर्च्य महेश्वरम्।
ईशार्चनरतं श्वेतं नाभून्नेतुं यमः क्षमः ॥४॥

श्राद्धं श्रद्धान्वितं कुर्याच्छास्त्रोक्तेनैव वर्त्मना।
भुवि पिण्डं ददौ विद्वान् भीष्मः पाणौ च शन्तनोः ॥५॥

नोत्तरस्यां प्रतीच्यां वा कुर्वीत शयने शिरः।
शय्याविपर्ययाद् गर्भो दितेः शक्रेण पातितः ॥६॥

अर्थिभुक्तावशिष्टं यत् तदश्नीयान् महाशयः।
श्वेतोऽर्थिरहितं भुक्त्वा निजमांसाशनोऽभवत् ॥७॥

जपहोमार्चनं कुर्यात् सुधौतचरणः शुचिः।
पादशौचविहीनं हि प्रविवेश नलं कलिः ॥८॥

न सञ्चरणशीलः स्यान्निशि निःशङ्कमानसः।
माण्डव्यः शूललीनोऽभूदचौरश्चौरशङ्कया ॥९॥

न कुर्यात् परदारेच्छां विश्वासं स्त्रीषु वर्जयेत्।
हतो दशास्यः सीतार्थे हतः पत्न्या विदूरथः॥१०॥

न मद्यव्यसनी क्षीबः कुर्याद् वेतालचेष्टितम्।
वृष्णयो हि ययुः क्षीबास्तृणप्रहरणाः क्षयम्॥११॥

ईर्ष्या कलहमूलं स्यात् क्षमा मूलं हि संपदाम्।
ईर्ष्यादोषाद् विप्रशापमवाप जनमेजयः॥१२॥

न त्यजेद् धर्ममर्यादामपि क्लेशदशां श्रितः।
हरिश्चन्द्रो हि धर्मार्थी सेहे चण्डालदासताम्॥१३॥

न सत्यव्रतभङ्गेन कार्यं धीमान् प्रसाधयेत्।
ददर्श नरकक्लेशं सत्यनाशाद् युधिष्ठिरः॥१४॥

कुर्वीत सङ्गतं सद्भिर्नासद्भिर्गुणवर्जितैः।
प्राप राघवसङ्गत्या प्राज्यं राज्यं विभीषणः॥१५॥

मातरं पितरं भक्त्या तोषयेन् न प्रकोपयेत्।
मातृशापेन नागानां सर्पसत्रेऽभवत् क्षयः॥१६॥

जराग्रहणतुष्टेन निजयौवनदः सुतः।
कृतः कनीयान् प्रणतश्चक्रवर्ती ययातिना॥१७॥ (युग्मम्)

दानं सत्त्वमितं दद्यान् न पश्चात्तापदूषितम्।
बलिनात्मार्पितो बन्धे दानशेषस्य शुद्धये॥१८॥

त्यागे सत्त्वनिधिः कुर्यान्न प्रत्युपकृतिस्पृहाम्।
कर्णः कुण्डलदानेऽभूत् कलुषः शक्तियाच्ञया॥१९॥

ब्राह्मणान् नावमन्येत ब्रह्मशापो हि दुःसहः।
तक्षकाग्नौ ब्रह्मशापात् परीक्षिदगमत् क्षयम्॥२०॥

दम्भारम्भोद्धतं धर्मं नाचरेदन्तनिष्फलम्।
ब्राह्मण्यदम्भलब्धास्त्रविद्या कर्णस्य निष्फला॥२१॥

नासेव्यसेवया दद्याद् दैवाधीने धने धियम्।
भीष्मद्रोणादयो याताः क्षयं दुर्योधनाश्रयात्॥२२॥

परप्राणपरित्राणपरः कारुण्यवान् भवेत्।
मांसं कपोतरक्षायै स्वं श्येनाय ददौ शिबिः॥२३॥

अद्वेषपेशलं कुर्यान् मनः कुसुमकोमलम्।
बभूव द्वेषदोषेण देवदानवसंक्षयः॥२४॥

अविस्मृतोपकारः स्यान् न कुर्वीत कृतघ्नताम्।
हत्वोपकारिणं विप्रो नाडीजङ्घमधश्च्युतः॥२५॥

स्त्रीजितो न भवेद् धीमान् गाढरागवशीकृतः।
पुत्रशोकाद् दशरथो जीवं जायाजितोऽत्यजत्॥२६॥

न स्वयं संस्तुतिपदैर्ग्लानिं गुणगणं नयेत्।
स्वगुणस्तुतिवादेन ययातिरपतद् दिवः॥२७॥

त्यजेन् मृगव्यव्यसनं हिंसयातिमलीमसम्।
मृगयारसिकः पाण्डुः शापेन तनुमत्यजत्॥२८॥

क्षिपेद् वाक्यशरांस्तीक्ष्णान् न पारुष्यव्युपप्लुतान्।
वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम्॥२९॥

परेषां क्लेशदं कुर्यान् न पैशुन्यं प्रभोः प्रियम्।
पैशुन्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम्॥३०॥

कुर्यान् नीचजनाभ्यस्तां न याच्ञां मानहारिणीम्।
बलियाच्ञापरः प्राप लाघवं पुरुषोत्तमः॥३१॥

न जातूल्लङ्घनं कुर्यात् सतां मर्मविदारणम्।
चिच्छेद वदन शम्भुर्ब्रह्मणो वेदवादिनः॥३२॥

न बन्धुसम्बन्धिजनं दूषयेन् नापि वर्जयेत्।
दक्षयज्ञक्षयायाभूत् त्रिनेत्रस्य विमानना॥३३॥

न विवादमदान्धः स्यान् न परेषाममर्षणः।
वाक्पारुष्याच् छिरश्छिन्नं शिशुपालस्य शौरिणा॥३४॥

गुणस्तवेन कुर्वीत महतां मानवर्धनम्।
हनूमानभवत् स्तुत्या रामकार्यभरक्षमः॥३५॥

गुणेष्वेवादरं कुर्यान् न जातौ जातु तत्त्ववित्।
द्रौणिद्विजोऽभवच् छूद्रः शूद्रश्च विदुरः क्षमी॥३६॥

नात्यर्थमर्थार्थनया धीमानुद्वेजयेज् जनम्।
अब्धिर्दत्ताश्वरत्नश्रीर्मथ्यमानोऽसृजद् विषम्॥३७॥

वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात् प्रीतिसङ्गतिम्।
वसिष्ठस्याहरद् धेनुं विश्वामित्रो निमन्त्रितः॥३८॥

तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत्।
विश्वामित्रोऽपि सोत्कण्ठः कण्ठे जग्राह मेनकाम्॥३९॥

कुर्याद् वियोगदुः खेषु धैर्यमुत्सृज्य दीनताम्।
अश्वत्थामवधं श्रुत्वा द्रोणो गतधृतिर्हतः ॥४०॥

न क्रोधयातुधानस्य धीमान् गच्छेदधीनताम्।
पपौ राक्षसवद् भीमः क्षतजं रिपुवक्षसः ॥४१॥

प्रभुप्रसादे नो दद्यात् स्वविनाशास्पदे मतिम्।
स्वक्षयायोद्धतं युद्धं बाणस्त्र्यक्षमयाचत ॥४२॥

विद्योद्योगी गतोद्वेगः सेवया तोषयेद् गुरुम्।
गुरुसेवापरः सेहे कायक्लेशदशां कचः ॥४३॥

भक्तं सक्तं हितं रक्तं निर्दोषं न परित्यजेत्।
रामस्त्यक्त्वा सतीं सीतां शोकशल्यातुरोऽभवत् ॥४४॥

रक्षेत् ख्यातिं पुनः स्मृत्या यशः कायस्य जीवनीम्।
च्युतः स्मृतो जनैः स्वर्गमिन्द्रद्युम्नः पुनर्गतः ॥४५॥

न कदर्यतया रक्षेल् लक्ष्मीं क्षिप्रपलायिनीम्।
युक्त्या व्याडीन्द्रदत्ताभ्यां हृता श्रीर्नन्दभूभृतः ॥४६॥

शक्तिक्षये क्षमां कुर्यान् नाशक्तः शक्तमाक्षिपेत्।
कार्तवीर्यः ससंरम्भं बबन्ध दशकन्धरम् ॥४७॥

वेश्यावचसि विश्वासी न भवेन् नित्यकैतवे।
ऋक्ष्यशृङ्गोऽपि निःसङ्गः शृङ्गारी वेश्यया कृतः ॥४८॥

अल्पमप्यवमन्येत न शत्रुं बलदर्पितः।
रामेण रामः शिशुना ब्राह्मण्यदययोज्झितः ॥४९॥

....... ....... ....... ...... ...... ......
जगद्वैरी जरासन्धः पाण्डवेन द्विधा कृतः ॥५०॥

औचित्यप्रच्युताचारो युक्त्या स्वार्थं न साधयेत्।
व्याजवालिवधेनैव रामकीर्तिः कलङ्किता ॥५१॥

वर्जयेदिन्द्रियजयी विजने जननीमपि।
पुत्रीकृतोऽपि प्रद्युम्नः कामितः शम्बरस्त्रिया ॥५२॥

न तीव्रतपसां कुर्याद् धैर्यविप्लवचापलम्।
नेत्राग्निशलभीभावं भवोऽनैषीन् मनोभवम् ॥५३॥

न नित्यकलहाक्रान्ते सक्तिं कुर्वीत कैतवे।
रुक्मी फलकदुर्धातैर्द्यूते हलभृता हतः ॥५४॥

प्रभुप्रसादे सत्याशां न कुर्यात् स्वप्नसन्निभे।
नन्देन मन्त्री निहितः शकटालो हि बन्धने ॥५५॥

न लोकायतवादेन नास्तिकत्वेऽर्पयेद् धियम्।
हरिर्हिरण्यकशिपुं जघान स्तम्भनिर्गतः ॥५६॥

अत्युन्नतपदारूढः पूज्यान् नैवावमानयेत्।
नहुषः शक्रतामेत्य च्युतोऽगस्त्यावमाननात् ॥५७॥

सन्धिं विधाय रिपुणा न निःशङ्कः सुखी भवेत्।
सन्धिं कृत्वावधीदिन्द्रो वृत्रं निःशङ्कमानसम् ॥५८॥

हितोपदेशं श्रुत्वा तु कुर्वीत च यथोचितम्।
विदुरोक्तमकृत्वा तु शोच्योऽभूत् कौरवेश्वरः ॥५९॥

बह्वन्नाशनलोभेन रोगी मन्दरुचिर्भवेत्।
प्रभूताज्यभुजो जाड्यं दहनस्याप्यजायत ॥६०॥

यत्नेन शोषयेद् दोषान् न तु तीव्रव्रतैस्तनुम्।
तपसा कुम्भकर्णोऽभून् नित्यनिद्राविचेतनः ॥६१॥

स्थिरताशां न बध्नीयाद् भुवि भावेषु भाविषु।
रामो रघुः शिबिः पाण्डुः क्व गतास्ते नराधिपाः ॥६२॥

विडम्बयेन् न वृद्धानां वाक्यकर्मवपुः क्रियाः।
श्रीसुतः प्राप वैरूप्यं विडम्बिततनुर्मुनेः ॥६३॥

नोपदेशेऽप्यभव्यानां मिथ्या कुर्यात् प्रवादिताम्।
शुक्रषाड्गुण्यगुप्तापि प्रक्षीणा दैत्यसन्ततिः ॥६४॥

न तीव्रदीर्घवैराणां मन्युं मनसि रोपयेत्।
कोपेनापातयन् नन्दं चाणक्यः सप्तभिर्दिनैः ॥६५॥

न सतीनां तपोदीप्तं कोपयेत् क्रोधपावकम्।
वधाय दशकण्ठस्य वेदवत्यत्यजत् तनुम् ॥६६॥

गुरुमाराधयेद् भक्त्या विद्याविनयसाधनम्।
रामाय प्रददौ तुष्टो विश्वामित्रोऽस्त्रमण्डलम् ॥६७॥

वसु देयं स्वयं दद्याद् बलाद् यद् दापयेत् परः।
द्रुपदोऽपन्हवी राज्यं द्रोणेनाक्रम्य दापितः ॥६८॥

साधयेद् धर्मकामार्थान् परस्परमबाधकान्।
त्रिवर्गसाधना भूपा बभूवुः सगरादयः ॥६९॥

स्वकुलान् न्यूनतां नेच्छेत् तुल्यः स्यादथवाधिकः।
सोत्कर्षेऽपि रघोर्वंशे रामोऽभूत् स्वकुलाधिकः॥७०॥

कुर्यात् तीर्थाम्बुभिः पूतमात्मानं सततोज्ज्वलम्।
लोमशादिष्टतीर्थेभ्यः प्रापुः पार्थाः कृतार्थताम्॥७१॥

आपत्कालोपयुक्तासु कलासु स्यात् कृतश्रमः।
नृत्तवृत्तिर्विराटस्य किरीटी भवनेऽभवत्॥७२॥

अरागभोगसुभगः स्यात् प्रसक्तविरक्तधीः।
राज्ये जनकराजोऽभून् निर्लेपोऽम्भसि पद्मवत्॥७३॥

अशिष्यसेवया लाभलोभेन स्याद् गुरुर्लघुः।
संवर्तयज्ञयाच्ञाभिर्लज्जां लेभे बृहस्पतिः॥७४॥

नष्टशीलां त्यजेन् नारीं रागवृद्धिविधायिनीम्।
चन्द्रोच्छिष्टाधिकप्रीत्यै पत्नी निन्द्याप्यभूद् गुरोः॥७५॥

न गीतवाद्याभिरतिर्विलासव्यसनी भवेत्।
वीणाविनोदव्यसनी वत्सेशः शत्रुणा हृतः॥७६॥

उद्वेजयेन् न तैक्ष्ण्यैन रामाः कुसुमकोमलाः।
सूर्यो भार्याभयोच्छित्यै तेजो निजमशातयत्॥७७॥

पद्मवन् न नयेत् कोषं धूर्तभ्रमरभोज्यताम्।
सुरैः क्रमेण नीतार्थः श्रीहीनोऽभूत् पुराम्बुधिः॥७८॥

नोपदेशामृतं प्राप्तं भग्नकुम्भनिभस्त्यजेत्।
पार्थो विस्मृतगीतार्थः सासूयः कलहेऽभवत्॥७९॥

न पुत्रायत्तमैश्वर्यं कार्यमार्यैः कदाचन।
पुत्रार्पितप्रभुत्वोऽभूद् धृतराष्ट्रस्तृणोपमः ॥८०॥

न शत्रुशेषदूष्याणां स्कन्धे कार्यं समर्पयेत्।
निष्प्रतापोऽभवत् कर्णः शल्यतेजोवधार्दितः ॥८१॥

न लब्धे प्रभुसंमाने फलक्लेशं समाश्रयेत्।
ईश्वरेण धृतो मूर्ध्नि क्षीण एव क्षपापतिः ॥८२॥

श्रुतिस्मृत्युक्तमाचारं न त्यजेत् साधुसेवितम्।
दैत्यानां श्रीवियोगोऽभूत् सत्यधर्मच्युतात्मनाम् ॥८३॥

श्रियः कुर्यात् पलायिन्या बन्धाय गुणसंग्रहम्।
दैत्यांस्त्यक्त्वा श्रिता देवा निर्गुणान् सगुणाः श्रिया ॥८४॥

पदाग्निं गां गुरुं देवं न चोच्छिष्टः स्पृशेद् घृतम्।
दानवानां विनष्टा श्रीरुच्छिष्टस्पृष्टसर्पिषाम् ॥८५॥

प्रतिलोमविवाहेषु न कुर्यादुन्नतिस्पृहाम्।
ययातिः शुक्रकन्यायां सस्पृहो म्लेच्छतां गतः ॥८६॥

रूपार्थकुलविद्यादिहीनं नोपहसेन् नरम्।
हसन्तमशपन् नन्दी रावणं वानराननः ॥८७॥

बन्धूनां वारयेद् वैरं नैकपक्षाश्रयो भवेत्।
कुरुपाण्डवसङ्ग्रामे युयुधे न हलायुधः ॥८८॥

परोपकारं संसारसारं कुर्वीत सत्त्ववान्।
निदधे भगवान् बुद्धः सर्वसत्त्वोद्धृतौ धियम् ॥८९॥

बिभृयाद् बन्धुमधनं मित्रं त्रायेत दुर्गतम्।
बन्धुमित्रोपजीव्योऽभूदर्थिकल्पद्रुमो बलिः ॥९०॥

न कुर्यादभिचारोग्रवध्यादिकुहकाः क्रियाः॥
लक्ष्मणेनेन्द्रजित् कृत्याद्यभिचारमयो हतः ॥९१॥

ब्रह्मचारी गृहस्थः स्याद् वानप्रस्थो यतिः क्रमात्।
आश्रमादाश्रमं याता ययातिप्रमुखा नृपाः ॥९२॥

कुर्याद् व्ययं स्वहस्तेन प्रभूतधनसम्पदाम्।
अगस्त्यभुक्ते वातापौ कोषस्यान्यैः कृतो व्ययः ॥९३॥

जन्मावधि न तत् कुर्यादन्ते सन्तापकारि यत्।
सस्मारैकशिरः शेषः सीताक्लेशं दशाननः ॥९४॥

जराशुभ्रेषु केशेषु तपोवनरुचिर्भवेत्।
अन्ते वनं ययुर्धीराः कुरुपूर्वा महीभुजाः ॥९५॥

पुनर्जन्मजराच्छेदकोविदः स्याद् वयः क्षये।
विदुरेण पुनर्जन्मबीजं ज्ञानानले हुतम्॥९६॥

परमात्मानमन्तेऽन्तर्ज्योतिः पश्येत् सनातनम्।
तत्प्राप्त्या योगिनो जाताः शुकशान्तनवादयः ॥९७॥

प्राप्तावधिरजीवेऽपि जीवेत् सुकृतसन्ततिः।
जीवन्त्यद्यापि मान्धातृमुखाः कायैर्यशोमयैः ॥९८॥

अन्ते सन्तोषदं विष्णुं स्मरेद्धन्तारमापदाम्।
शरतल्पगतो भीष्मः सस्मार गरुडध्वजम्॥९९॥

श्रव्या श्रीव्यासदासेन समासेन सतां मता।
क्षेमेन्द्रेण विचार्येयं चारुचर्या प्रकाशिता॥१००॥

॥ इति श्रीप्रकाशेन्द्रात्मजव्यासदासापराख्य-
महाकविश्रीक्षेमेन्द्रकृता चारुचर्या समाप्ता ॥

* * * * *

# (३) दर्पदलनम्।

## प्रथमः कुलविचारः

प्रशान्ताशेषविघ्नाय दर्पसर्पापसर्पणात्।
सत्यामृतनिधानाय स्वप्रकाशविकासिने॥१॥

संसारव्यतिरेकाय हृतोत्सेकाय चेतसः।
प्रशमामृतसेकाय विवेकाय नमो नमः॥२॥(युग्मम्)

क्षेमेन्द्रः सुहृदां प्रीत्या दर्पदोषचिकित्सकः।
स्वास्थ्याय कुरुते यत्नं मधुरैः सूक्तिभेषजैः॥३॥

कुलं वित्तं श्रुतं रूपं शौर्यं दानं तपस्तथा।
प्राधान्येन मनुष्याणां सप्तैते मदहेतवः॥४॥

अहङ्काराभिभूतानां भूतानामिव देहिनाम्।
हिताय दर्पदलनं क्रियते मोहशान्तये॥५॥

कुलं कुलं कलयतां मोहान् मिथ्याभिमानिनाम्।
लग्नः कोऽयं न जानीमः स्तब्धग्रीवाग्रहग्रहः॥६॥

कुलस्य कमलस्येव मूलमन्विष्यते यदि।
दोषपङ्कप्रसक्तान्तस्तदावश्यं प्रकाशते॥७॥

यथा जात्यतुरङ्गस्य न शक्यज् (तोकं) जात्यमुच्यते।
तथा गुणवतः सूनुर्निर्गुणस्तत्कुलोद्भवः॥८॥

एकश्चेत् पूर्वपुरुषः कुले यज्वा बहुश्रुतः।
अपरः पापकृन् मूर्खःकुलं कस्यानुवर्तताम्॥९॥

लोके कुलं कुलं तावद् यावत् पूर्वसमन्वयः।
गुणप्रभावे विच्छिन्ने समाप्तं सकलं कुलम्॥१०॥

कुलाभिमानः कस्तेषां जघन्यस्थानजन्मनाम्।
कुलकूलङ्कषा येषां जनन्यो निम्नगाः स्त्रियः॥११॥

कुलीनस्य कुलीनस्य नवदारिद्र्यलज्जया।
किं कुलेनाकुलीनाग्रे याच्ञादैन्यप्रलापिनः॥१२॥

गुणवत्कुलजातोऽपि निर्गुणः केन पूज्यते।
दोग्ध्रीकुलोद्भवा धेनुर्वन्ध्या कस्योपयुज्यते॥१३॥

स्वयं कुलकृतस्तस्माद् विचार्य त्यज्यतां मदः।
गुणाधीनं कुलं ज्ञात्वा गुणेष्वाधीयतां मतिः॥१४॥

मूलान्वेषणचिन्त्यमानमनिशं नास्त्येव पुंसा कुलं
स्त्रीणां यत्र परम्परैव तनुते सन्तानतन्तुक्रमम्।
एतासां कृतकप्रपञ्चरचनालज्जावतीनां पुरः
संसक्तस्मररूढगूढचरितं तत्त्वेन जानाति कः॥१५॥

कुलाभिमानाभरणस्य माता पितामही वा प्रतितामही वा।
योषित् स्वभावेन यदि प्रदुष्टा तदेष दोषः कुलमूलघातः॥१६॥

सूर्यवंशे त्रिशङ्कुर्यश्चण्डालोऽभून्महीपतिः।
दिलीपरघुरामाद्याः क्षितिपास्तत्कुलोद्भवाः॥१७॥

भूभुजां सोमवंश्यानां यः पूर्वपुरुषो बुधः।
गुरुतल्पे स चन्द्रस्य जातो जगति विश्रुतः॥१८॥

कन्यायास्तनयः कर्णः क्षेत्रजाः पाण्डुनन्दनाः।
सामान्यकुलचर्चाभिः किमन्याभिः प्रयोजनम्॥१९॥

मथुरायामभूत् पूर्वं ब्राह्मणः श्रीमतां वरः।
यज्वा श्रुतनिधिर्नाम श्रुतिमान् विश्रुतश्रुतः॥२०॥

तस्य मुक्तालता नाम प्रांशुवंशसमुद्भवा।
बभूव वल्लभा पत्नी लावण्यललिताकृतिः॥२१॥

तस्यां तस्याभवत् कान्तः सुवृत्तः सगुणाग्रणीः।
पुत्रस्तेजोनिधिर्नाम विद्याविमलदर्पणः॥२२॥

स धीमान् वेदविद् वादी कविः सर्वकलालयः।
सभासु विदुषां चक्रे लज्जयावनतं शिरः॥२३॥

तं दर्पदोषज्वरितं ग्रीवास्तम्भयुतं रहः।
प्रशमाय पिता स्नेहात् पथ्यं वक्तुं प्रचक्रमे॥२४॥

पुत्र मिथ्याभिमानेन किं प्रयातोऽसि मूढताम्।
यन्मदद्विरदारूढः पूज्यपूजासु लज्जसे॥२५॥

नास्त्युपायः स संसारे दर्पश्वभ्रनिपातिनाम्।
मूढानां क्रियते येन क्षणं हस्तावलम्बनम्॥२६॥

कष्टं केनोपदिष्टस्ते विनष्टविनयस्मृतेः।
मदः साधुजनानिष्टः कुलविद्याधनोद्भवः॥२७॥

अस्थिरः कुलसम्बन्धः सदा विद्या विवादिनी।
मदो मोहाय मिथ्यैव मुहूर्तनिधनं धनम्॥२८॥

एतदेव कुलीनत्वमेतदेव गुणार्जनम्।
यत् सदैव सतां सत्सु विनयावनतं शिरः॥२९॥

दयैव विदिता विद्या सत्यमेवाक्षयं धनम्।
अकलङ्कविवेकानां शीलमेवामलं कुलम्॥३०॥

अभोगसुभगा भूतिरदैन्यधवलं कुलम्।
अदर्पविशदा विद्या भवत्युन्नतचेतसाम्॥३१॥

द्वेषः कस्य न दोषाय प्रीतिः कस्य न भूतये।
दर्पः कस्य न पाताय नोन्नत्यै कस्य नम्रता॥३२॥

त्यागिना किं दरिद्रेण किं कुलीनेन पापिना।
तुष्टेन किं कदर्येण दर्पान्धेन बुधेन किम्॥३३॥

वैरायते सुहृद्भावः प्रदानं हरणायते।
दर्पभूताभिभूतस्य विद्या मौर्ख्यशतायते॥३४॥

गुणिनां मत्सरः शत्रुर्लुब्धानामतियाचकः।
सर्व एव सदर्पाणां न कश्चित् प्रियवादिनाम्॥३५॥

तस्मात् कार्यस्त्वया पुत्र नाहङ्कारः कदाचन।
दर्पोद्ग्रीवः किलोग्रेण मोहग्राहेण गृह्यते॥३६॥

वंशेनोन्नतिशालिता गुणगणेनान्तश्चमत्कारिणा
रूपेणातिमनोहरेण महता वित्तेन वृत्तेन वा।
रोहन्मोहमहातरुर्मदमयः सञ्जायते यः सदा
तस्यादौ दृढरूढमूलदलने कार्योऽभियोगस्त्वया॥३७॥

गुणेष्ववनादरं पुत्र प्राप्तश्रीरपि मा कृथाः।
सम्पूर्णोऽपि घटः कूपाद् गुणच्छिन्नः पतत्यधः॥३८॥

कुलाभिमानं त्यज संवृताग्रं धनाभिमानं त्यज दृष्टनष्टम्।
विद्याभिमानं त्यज पण्यरूपं रूपाभिमानं त्यज काललेह्यम्॥३९॥

पुत्र प्रयत्नेन विबोधितोऽसि न मुञ्चसि त्वं यदि दर्पमोहम्।
तदेष ते यास्यति शल्यभावं तीव्राभितापप्रसवोऽभिमानः॥४०॥

विभूतिनलिनीगजः सुजनमानभङ्गाशनि-
र्निपातपथदैशिकः सुकृतचित्रधूमोद्गमः।
पराशयनवज्वरश्चरितचन्द्रबिम्बाम्बुदः
सदा समदचेतसां गुणविनाशहेतुर्मदः॥४१॥

अनित्यतेयं यदि नित्यता स्यात्
सर्वं न पाके विरसं यदि स्यात्।
कुलार्थविद्यादिकृतोऽभिमान-
स्तदेष ते स्यान् न विडम्बनीयः॥४२॥

अहं वादी विद्यापरिचयगुरुः सर्वविदुषा
महं मानी वाणीप्रसरपरिपाकेन सुकविः।
अहं लीलाहंसः कुवलयदृशां मानसचरः
करोत्यन्तः पुंसामिति मदपिशाचः परिचयम्॥४३॥

लक्ष्मीः क्षणक्षयवती परिरक्षितापि
कायोऽप्यपायनिचयस्य निकाय एव।

सम्भोगयोगसुखसङ्गतिरप्यतथ्या
मिथ्याभिमानकलनाघन एष शापः ॥४४॥

इत्युक्तोऽप्यसकृत् पित्रा लीलामीलितलोचनः।
स ययौ मत्तहस्तीव वेगादगणिताङ्कुशः ॥४५॥

पादेन क्षितिमालिखन्ति समदाः कोपोष्णनिःश्वासिन-
स्तिर्यग् जिह्मनिरीक्षणैर्विदवति भ्रूभङ्गभीमं मुखम्।
सस्वेदाङ्गुलिकन्दलीनिकषणैस्ताम्यल्ललाटत्वचः
कम्पन्ते हितमन्त्रवादसमये भूताभिभूता इव ॥४६॥

स कदाचिद् वराश्वेषु स्थितेषु जवकौतुकात्।
प्रतस्थे खरमारुह्य वयस्यगृहमुत्सवे ॥४७॥

तेन तीक्ष्णप्रतोदेन चोद्यमानः पुनः पुनः।
खरस्तीव्रव्यथार्तोऽभूत् प्रक्षरत्क्षतजोक्षितः ॥४८॥

स्नुताश्रुः कथितक्लेशः स्वस्वनोचितसंज्ञया।
सोऽवदत् सम्मुखायातां गर्दभीं जननीं निजाम्॥४९॥

मातर्ब्राह्मणपुत्रोऽयं पश्य मामधमाशयः।
विदारयन् प्रतोदेन वहन्तं हन्तुमुद्यतः ॥५०॥

किं करोमि यमेनाहं लब्धोऽनेन दुरात्मना।
अवटे पातयाम्येनं तनुं श्वभ्रे क्षिपामि वा ॥५१॥

इत्यार्तराविणं पुत्रं साश्रुनेत्राथ गर्दभी।
तमुवाच ससन्तापं स्नेहसङ्क्रान्ततद्व्यथा ॥५२॥

उक्त्वेति शम्भुर्वृषभात् सलीलं गिरेरिवाग्रादवतीर्य भूमिम्।
क्षणादभूदद्भुतरूपराशिर्नग्नव्रतः कान्तिसुधावदातः ॥२९॥

तस्यामराधीशकिरीटरत्नशोणप्रभार्द्राविव पादपद्मौ।
प्रचक्रतुर्विद्रुमबालवल्लीनवप्ररोहादद्भुतगर्वमुर्व्याम् ॥३०॥

सुस्पष्टजानु प्रचितोरुशोभि नाभिह दावर्तविमुक्तमध्यम्।
तत् तस्य रूपं प्रविलम्बिबाहोः पीनांसमासीन् मुखपूर्णचन्द्रम् ॥३१॥

अनन्यलावण्यसुधाब्धिमध्यस्नातैरिवाङ्गैः स्फटिकावदातैः।
चक्रे दशाशाः स पृथुप्रकाशा दिगम्बरत्वादिव जातहासाः ॥३२॥

पाणिस्थितश्याममयूरपिच्छच्छायाच्छटाविच्छुरितोऽस्य कण्ठः।
रराज लीनान्तरकालकूटामिषाग्निनेवार्पितधूमलेखः ॥३३॥

स लोचनाभ्यां पृथुपक्ष्मलाभ्यामारक्तपर्यन्तमनोहराभ्याम्।
व्यधादिवानङ्गनवाङ्गसङ्गे दिगङ्गनानामनुरागदीक्षाम् ॥३४॥

दृष्ट्वा त्रिलोकीकलिताभिलाषं वपुः स्मरारेर्जनितस्मरं तत्।
पूर्वापकारस्मृतिजातलज्जं चक्षुः क्षणं क्वापि ययौ तृतीयम् ॥३५॥

बभौ स कान्तः कुटिलासितेन स्कन्धस्पृशा कुन्तलसञ्चयेन।
अन्वेष्टुमिष्टां मुकटेन्दुलेखां निशागणेनेव समागतेन ॥३६॥

लतावधूपल्लवपाणिमुक्तैः स्मितावदातैर्विबभौ स पुष्पैः।
रूपान्तरे निह्नुतजह्नुकन्याफेनावशेषैरिव कीर्णकेशः ॥३७॥

तेनान्यरूपेण कृता नवैव कान्तिश्चकाशे निजरूपगुप्त्यै।
जूटादिवेन्दुर्मृदितः वनदेवतानां सर्वाङ्गमभ्यङ्गपदे नियुक्तः ॥३८॥

रूपं विरूपीकृतमन्मथस्य तत् तस्य कान्त्या कमनीयमासीत्।
लज्जापहाराद् वनदेवतानां सविस्मयो येन नवाभिलाषः॥३९॥

विवाससस्तस्य ससङ्गमङ्गे लज्जावतीनां स्पृहयैव पेतुः।
नेत्राणि विद्याधरसुन्दरीणां लीलारविन्दार्धतिरस्कृतानि॥४०॥

नभः स्थितानां त्रिदशाङ्गनानां तद्गात्रसौन्दर्यवशीकृतानाम्।
प्रकम्पशिञ्जानविभूषणानां नेत्रोत्सवोऽभूद् गतिविघ्नभूतः॥४१॥

सुसिद्धकन्याञ्जलिपल्लवाग्रविमुक्तनीलोत्पलपुष्पकुञ्जम्।
अङ्गे जगल्लोचनवर्गमस्य सौन्दर्यसंसक्तमिवाबभासे॥४२॥

तद्दर्शने कौतुकनिश्चलानां कर्णावतंसीकृतलोचनानाम्।
मृगाङ्गनानामपि सस्पृहाभून् नितान्तमन्तः करणप्रवृत्तिः॥४३॥

तस्य प्रवेशे वदनाधिवासलोभ भ्रमद्भृङ्गगणाश्चितानाम्।
अभूत् सजृम्भश्वसनाकुलानां मुहुर्लतानां कुसुमेषु कम्पः॥४४॥

शनैः शनैराश्रमसन्निकर्षं तं यौवनं मूर्तमिवापतन्तम्।
विलोक्य कान्तं मुनिकामिनानां मनः प्रहर्षोच्छलितं बभूव॥४५॥

तासां तदालोकननिर्निमेषा दृष्टिः परं कर्णपथप्रविष्टा।
उत्सृष्टलज्जाविपुलाभिलाषादसूचयन् मुग्धमृगीविलासम्॥४६॥

तासां तदर्चारभसोत्थितानां स्रस्तांशुकोत्कम्पिघनस्तनीनाम्।
नवेन कामेन खलीकृतानां जृम्भाभवोऽभूद् भुजयोर्विलासः॥४७॥

तासां बभौ रोमलता मुखेन्दुभीता तमश्रीः स्तनरक्षितेव।
रागाग्निधूमप्रसराग्रलेखा तनीयसी नाभिविनिर्गतेव॥४८॥

तस्याधरे चुम्बनलालसेव कण्ठे हठालिङ्गनसस्पृहेव।
हृदि स्तनन्याससमुत्सुकेव पपात दृष्टिः सहसैव तासाम्॥४९॥

भृङ्गस्वनैराहितहुङ्कृताभिः पुष्यत्प्रसूनैः प्रसृतस्मिताभिः।
वाताश्रितैः पल्लवपाणिभिस्ता निवार्यमाणा इव मञ्जरीभिः॥५०॥

सन्तर्ज्यमाना इव होमधूमलेखावलीभ्रूभ्रमणेन दिग्भिः।
तस्यान्तिके शीलदुकूलमुक्तिसज्जा विलज्जाः प्रसभं बभूवुः॥५१॥

निःश्वासिनीनां स्मरबाणपुङ्ख पक्षान्तवातैरिव कम्पितानाम्।
तासां विलोक्यैव मनोविकारं भ्रूभङ्गभीमा मुनिपर्षदासीत्॥५२॥

कोपोत्कटव्याघ्रविदीर्यमाणक्षमामृगीरक्तचितेव तेषाम्।
आसन्नदोषागमवासरान्तसन्ध्यानिभाभूत् सहसैव दृष्टिः॥५३॥

दष्टाधराः कम्पविघूर्णमानाः स्वेदार्द्रदेहा विषमं श्वसन्तः।
ते भेजिरे रागसमुद्गतेर्ष्याः कोपाकुलाः कामुकवृत्तमेव॥५४॥

अन्तर्ज्वलत्कोपकृशानुधूमसङ्काशकृष्णाजिनबद्धकक्षः।
त्रिदण्डमुद्यम्य जवेन कश्चिदभ्याद्रवन् नग्नतनुं वृषाङ्कम्॥५५॥

वृसीं समुत्क्षिप्य सकम्पबाहुश्चिक्षेप कश्चित् क्षमया विहीनः।
येनासनात् क्षमाविरहादिवाशु मोहे निरालम्बतनुः पपात॥५६॥

कमण्डलुं कश्चिदकाण्डचण्डसंरम्भपिण्डीकृतकोपतुल्यम्।
आदाय मोहेन पिनाकपाणेः पुरः प्रहाराभिमुखो बभूव॥५७॥

तेषाममर्षाद् भृशमक्षमाणां सोढुं निकारं क्षणमक्षमाणाम्।
प्रापुः प्रयाताः क्षितिमक्षमाला भ्रूभङ्गतां तस्य तपोवनस्य॥५८॥

तत्सम्भ्रमादाश्रममञ्जरीणां कम्पाकुलानां कुसुमान्तरोत्थैः।
आसीत् प्रमोहप्रतिमोऽन्धकारः शापाक्षराभैर्भ्रमरैर्भ्रमद्भिः ॥५९॥

ते प्रापुरीर्ष्यापदमन्धकारि वक्त्रं शशाङ्कोपममीक्षमाणाः।
कण्ठस्थलालोकनकालकूटसम्पूरिताक्षा इव मोहमूर्च्छाम् ॥६०॥

ते तं स्मितप्रस्फुरिताधराग्रमुदग्रलावण्यविशेषतर्षाः।
पत्नीविकारोग्रनिकारमूचुः कण्ठान्तरश्वासविकीर्णवर्णाः ॥६१॥

कोऽयं विजातिर्विगुणः कलावान् नग्नो वृषाङ्कः प्रविशत्यलज्जः।
प्रदूषिता येन महर्षिजुष्टा गङ्गेव शुद्धा ललनावलीयम् ॥६२॥

अनेन संसूचयता निगूढरूपेण दर्पादकुलीनभावम्।
नीतापवित्रत्वमियं मुनीनां कापालिकेनेव वनान्तभूमिः ॥६३॥

अहो बतास्य प्रतिभा प्रसह्य सतीसमालिङ्गनसस्पृहस्य।
केनापि कामात् कुहकक्रमेण कान्तं कृतं रूपमनेन नूनम् ॥६४॥

उक्त्वेति तस्मै ससृजुः सकोपास्ते दण्डपाषाणबृसीशतानि।
द्वेषावृताक्ष्णामविवेकजन्मा मोहः प्रमादे गुरुतामुपैति ॥६५॥

दूरे भवत्यथ शनैः शिशिरांशुमौलौ
तेषां प्रकोपविपुलानलतापितानाम्।
तद्दर्शनानुसरणप्रसृतस्य यत्नः
पत्नीजनस्य सुतरां विनिवर्तनेऽभूत् ॥६६॥

अथ स भगवान् भर्गः स्वर्गापगापृथुनिर्झर-
प्रसृतहसितस्तस्माद् देशात् क्रमेण तिरोहितः।

प्रशमविमलं व्योम व्याप्य प्रियामवदत् स्मय-
स्मितसितमुखीं दृष्टं देवि त्वया मुनिचेष्टितम् ॥६७॥

भस्मस्मेरशरीरता पृथुजटाबन्धः शिरोमुण्डनं
कुण्डीदण्डकमण्डलुप्रणयिता चर्माक्षसूत्रग्रहः।
काषायव्यसनं निरम्बररुचिः कङ्कालमालाधृतिः
कामक्रोधवशाद् विशेषरुचिरं सर्वं वृथैव व्रतम् ॥६८॥

दर्पात् कोपात् परिणतजटासूत्रबन्धाच्च मोहा-
दन्तः सीदत्सरसविषयास्वादसंवादसङ्गात्।
आशापाशव्यसननिचयाद् वासनालीनदोषान्
नैषां मुक्तिर्भवति तपसा कायसंशोषणेन ॥६९॥

इत्युक्तं त्रिपुरारिणा गिरिसुता श्रुत्वा यथार्थं वचो
निश्चित्य व्रतमप्रशान्तमनसां मिथ्यैव कायक्षयम्।
संसारोपरमाय मोहरजसः शान्त्यै मुनीनां परं
रागद्वेषविमुक्तये च दयया चक्रे हरस्यार्थनाम् ॥७०॥

देव्यार्थितोऽथ भगवान् कृपया स्मरारि-
स्तेषामनुग्रहमयेन विलोकनेन।
चक्रे स्मितस्नपितदिग्वदनो मुनीनां
लीनस्य मोहरजसः सहसैव शान्तिम् ॥७१॥

तपोविशेषैर्निशितप्रयत्नैस्तस्मान्न कार्यः पृथुमोहदर्पः।
द्वेषेण रागेण महोदयेन तपः क्षयं याति सह स्मयेन ॥७२॥

प्रशान्तोऽन्तस्तृष्णाविषमपरितापः शमजलै-
रशेषः सन्तोषामृतरविसरपानेन वपुषः।
असङ्गः सम्भोगकमलदलकीलालतुलया
भवारण्ये पुंसां परहितमुदारं खलु तपः ॥७३॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविहिते दर्पदलने
तपोविचारः सप्तमः ॥

॥ समाप्तोऽयं ग्रन्थः ॥

* * * * *

## (४) सेव्यसेवकोपदेशः

विभूषणाय महते तृष्णातिमिरहारिणे।
नमः सन्तोषरत्नाय सेवाविषविनाशिने॥१॥

उत्सृज्य निजकार्याणि सद्भिर्बाष्पाकुलेक्षणम्।
सेव्यसेवकसेवानां क्रियतामनुशासनम्॥२॥

दर्पादेकः परो लोभाद् द्वावन्धौ सेव्यसेवकौ।
धनोष्मदैन्यविकृती मुखे कः कस्य पश्यति॥३॥

दुर्वारमोहलोभान्धो यदि न स्यादयं जनः।
कः क्रूरक्रोधविधुरं सहेत धनिनां मुखम्॥४॥

यः पृथ्वीमपि दर्पान्धो न पश्यति पुरः स्थिताम्।
स दैन्यलघुतां यातं कथं सेवकमीक्षते॥५॥

अगतिं वाहयत्येको बधिरं स्तौति चापरः।
अहो जगति हास्याय निर्लज्जौ सेव्यसेवकौ॥६॥

दूरं हुङ्कारमात्रेण विसृष्टो मार्गणः सदा।
गुणभ्रष्टः क्रियाहीनो नोद्वेगं याति सेवकः॥७॥

मन्ये सुकृतिना तेन भागीरथ्यां कृतं तपः।
वैराग्यभागी रथ्यां यः सेवासु न विगाहते॥८॥

कथितक्लेशवापेन शापेनेव विपाकिना।
सेवातापेन पच्यन्ते नह्यदुष्कृतिनो नराः॥९॥

अदैन्यपुण्यमनसां यशस्तेषां विराजते।
सेवापङ्ककलङ्कानां यैर्न पात्रीकृतं शिरः ॥१०॥

प्रभुप्रणामे जठरं दैन्यमूलं विलोकयन्।
प्रवेष्टुं सेवकः शङ्के विलक्षः क्षितिमीक्षते ॥११॥

सेवाध्वजोऽञ्जलिर्मूर्ध्नि हृदि दैन्यं मुखे स्तुतिः।
आशाग्रहगृहीतानां कियतीयं विडम्बना ॥१२॥

अकालागमनक्रोधविधुरेश्वरचक्षुषा।
क्षिप्रं स्मर इवायाति सेवको दग्धभूतिताम् ॥१३॥

पुनः सेवावमानानां तेन दत्तं तिलोदकम्।
प्रविश्य वाहिनी येन खड्गपात्रीकृतं वपुः ॥१४॥

कणवृत्तिपरिक्लिष्टः कष्टं सेवकचातकः।
घनाशानिरतो नित्यमुद्ग्रीवः परिशुष्यति ॥१५॥

निःसन्तोषः परित्यज्य भ्रमरः पुष्पितं वनम्।
सेवते दानलोभेन मातङ्गमपि सेवकः ॥१६॥

जडसेवापरिक्लिष्टस्तीव्रदम्भबकव्रतः।
कृच्छ्रेण क्षणिकां प्रीतिमासादयति सेवकः ॥१७॥

नित्यमुन्नतिकामोऽपि मानभङ्गादधोमुखः।
यत् सत्यमुभयभ्रष्टस्त्रिशङ्कुरिव सेवकः ॥१८॥

स्वमांसविक्रयासक्तः प्रभुवेतालधट्टितः।
निः सत्त्वः प्रलयं याति रात्रिसेवासु सेवकः ॥१९॥

भूमिशायी निराहारः शीतवातातपक्षतः।
मुनिव्रतोऽपि नरकक्लेशमश्नाति सेवकः ॥२०॥

करोति सेवकः सेवां तावदाशामिवायताम्।
यावद् भोगरसज्ञेन यौवनेन वियुज्यते ॥२१॥

चक्षुर्द्वार्यञ्जलौ पाणिः स्तुतौ जिह्वा नतौ शिरः।
अहो नु सेवकैः कायः परोपकरणीकृतः ॥२२॥

हन्त याच्ञावमानेन सेवको लघुतां गतः।
सेवापङ्कपदे मग्नो यदन्विष्टो न लभ्यते ॥२३॥

अविश्रान्त्या विरक्तस्य दीर्घोच्छ्वासेन शुष्यतः।
जरेव दुःसहा जन्तोः सेवा सङ्कोचकारिणी ॥२४॥

त्रुट्यति क्लिन्नतन्त्रीव मालेव म्लायति क्षणात्।
सेवा नारचयत्येव(?) दिनच्छेदेन नश्यति ॥२५॥

सेवासङ्कपिताङ्गानां राजरथ्यासु शुष्यताम्।
तीव्रतृष्णाविषार्तानां शरणं शमवारिदः ॥२६॥

लोभस्य मोहाध्वनि वृद्धभावे जाता दुराशाशयितस्य सेवा (?)।
अधोमुखी सा सततं सलज्जा जरत्कुमारीव न कस्य शोच्या ॥२७॥

आशेव शून्येव विवर्तमाना तृष्णेव सन्तोषपराङ्मुखीयम्।
दिवानिशं कर्षणदीर्घरज्जुः सेवा सुराणामपि दैन्यभूमिः ॥२८॥

निसर्गवन्ध्यासु फलाशया ये
कुर्वन्ति सेवासु सदा प्रयत्नम्।

कृषिप्रवृत्ताः शशशृङ्गकोट्या
खनन्ति मूर्खाः खलुः खस्थली ते ॥२९॥

अन्तः स्थितेऽप्यात्मनि यैः क्रियन्ते सेवाप्रवृत्तैः पुरुषैः प्रणामाः।
दुग्धाब्धिकल्लोलिनि कूलकच्छे तृष्णातुरास्ते जलमर्थयन्ते ॥३०॥

भागीरथीतीरवनान्तरेषु फलावनम्रेषु महाद्रुमेषु।
क्षुत्तापतृष्णाशमनेषु सत्सु किं दैन्यसेवाव्यसनावमानैः ॥३१॥

नित्यप्रसक्त्या न सृजत्यवज्ञां न लौल्यगर्हागणनां करोति।
अत्यन्तयाच्ञासु न याति खेदं भिक्षाभुजां पात्रमतो नु सेव्यम् ॥३२॥

जयन्ति ते स्वस्ति नमोऽस्तु तेभ्यः प्रभुप्रणामच्युतमानरत्नम्।
सेवाप्रयासव्यासनेषु मिथ्या रथ्यारजोभागि शिरो न येषाम् ॥३३॥

किं राजभिर्दुर्जनजन्मजाल व्याप्तैरवाप्तैरपि कष्टदृष्टैः।
सन्त्येव सेव्या भुवि भूभृतस्ते तटेषु येषां मुनयो निविष्टाः ॥३४॥

तृष्णातुराणां रजसावृतानां सेवाकुकूलानलतापितानाम्।
शान्त्यै हितं चन्द्रकिरीटजूटमैत्रीपवित्रं त्रिदशापगाम्भः ॥३५॥

उत्सृज्य तीव्रं विषयाभिलाषं सन्तोषपोषं कुशलो भजस्व।
इत्यर्थ्यमानः सुखसेवयायमात्मैव सर्वं सुधियां ददाति ॥३६॥

एकस्य जाने सुखभोगभाजः श्लाघ्यस्य सेवाव्यसनं निवृत्तम्।
सदैव शिश्नोदरवर्जितत्वादयाच्ययाच्ञारहितस्य राहोः ॥३७॥

सेवाव्रते प्राय इवोपविष्टः सर्वात्मना निश्चितजीवनाशः।
द्वाःस्थैः प्रयत्नेन निवारितोऽपि न दुर्ग्रहं मुञ्चति नष्टसंज्ञः ॥३८॥

तमोऽध्वतापेन च चिन्तया च शीतेन दैन्येन च पिण्डिताङ्गः।
सुखाशया दुःखसहस्रभागी सेवाव्रतं मुग्धमतिर्बिभर्ति॥३९॥

गच्छामि गच्छामि दिनं गतं मे दिने गतोऽहं न नृपोऽद्य दृष्टः।
इति ब्रुवाणस्य सदा जनस्य जीर्णातरां तस्य तनुर्न तृष्णा॥४०॥

विच्छेदकारी सहसा कथानामनीप्सितो दीप इव प्रविष्टः।
संसक्तवस्त्रान्तरमक्षिकेव न सेवकः कस्य करोति दुःखम्॥४१॥

धूमायमानोऽक्षिविपक्षभूतश्चाटुक्रमोत्पादितकर्णशूलः।
कुसेवकः पादतलेऽवलग्नः पदे पदे कण्टकतामुपैति॥४२॥

एकः खमेव क्षितिमीक्षतेऽन्यः
स निर्जनार्थी स च गाढलग्नः।
स्वस्वार्थिता तस्य भृशं स चार्थी
कथं स सेव्यः सच सेवकोऽस्तु॥४३॥

छायाग्रहो मूर्त इवानुयायी स्थितश्चिरं वृश्चिकनिश्चलश्च।
अकालपाती सुखकेलिलीलायन्त्रोपलः सेवकदुर्विदग्धः॥४४॥

विसृज्यमानोऽप्यनिशं न याति तीव्रोपरोधप्रणयेन मूर्खः।
भर्तुः प्रसादे विहितप्रयत्नो जातः परं प्रत्युत कोपहेतुः॥४५॥

शूत्कारिदीर्घश्वसितानुबन्धैर्निवेदितोद्वेगगतिप्रयासः।
अतिप्रवेशात् खरमार्गणोऽसौ निरस्यमानो विफलत्वमेति॥४६॥

श्रीरत्नचन्द्रवरवाजिगजोर्जितेऽस्मिन्-
गम्भीरराजकुलनाम्नि महासमुद्रे।

अश्नाति मूढमतिरीश्वरतामवाप्तु-
माशावशात् क्षितिपतेर्बहु कालकूटम्॥४७॥

विरमा विरम नेयं पान्थ नम्राम्रमाला
बधिर खदिरपाली निष्फलैषा प्रयाहि।
इति बहुविधमुक्तः सेवकोऽन्यापदेशै-
स्त्यजति न विपुलाशापाशबद्धः कुसेवाम्॥४८॥

प्रम्लाना सरसत्वमेति न पुनर्मालेन लग्नातपा
भग्ना काचमयीव सन्धिघटना योगेन न श्लिष्यति।
सेवा दीपशिखेन दुर्गतगृहे सन्धार्यमाणा परं
निःस्नेहा क्षयमेति खेदजनितैरुच्छ्वासमालानिलैः॥४९॥

कस्त्वं गत्वर सेवकस्त्वरितता कस्मात् प्रभुर्दृश्यते
लाभः कस्तव तत्र वेत्रिविपुलाघातैः शिरस्ताडनम्।
किं मृद्नासि मुदा विशालचरणैर्मिथ्यैव रथ्यामिमां
बन्धो वन्धयनरेन्द्रभव्यभवनभ्रान्त्या विडम्ब्यामहे॥५०॥

सुप्ताकर्षणदाम धाम महतो मोहस्य दैन्यस्य वा
सेवाक्लेशमहर्निशं विषहते यो वित्तलेशाशया।
प्रस्फूर्जद्वडवाग्निगर्भगहनोद्भूतोर्मिमालाकुलं
सङ्क्षुब्धं मकराकरं प्रविशति श्रीरत्नलब्ध्यै न किम्॥५१॥

व्यर्थात्यर्थगतगताव्यतिकरैरश्रान्ततीव्रत्वरो
द्वारालोकनतत्परः परिजनैरुत्सार्यमाणः परम्।
यत्नेनैव पुरः प्रवेशकलनैः क्लेशावमानाश्रयः
सर्वापत्पिशुनः शुनः सदृशतामालप्स्यते सेवकः॥५२॥

कूजत्क्रूरकपाटपीडनरुषा दत्तप्रहारैः परं
द्वारावस्थगनाय सुस्थिरभुजैर्द्वा स्थैर्भृशं भर्त्सितः।
कुब्जीभूय जनस्य जानुविवरैः क्षिप्रप्रवेशोत्सुकः
पृच्छत्यन्तरनिर्गतानवसरं मौनव्रतान् सेवकः ॥५३॥

द्वारे रुद्धमुपेक्षते कथमपि प्राप्तं पुरो नेक्षते
विज्ञप्तौ गजमीलनानि कुरुते गृह्णाति वाक्यच्छलम्।
निर्यातस्य करोति दोषगणनां स्वल्पापराधे यमः
स स्वामी यदि सेव्यते मरुतटे किं नः पिशाचैः कृतम् ॥५४॥

नित्यं राजकुले न पूज्ययजने तद्द्वारपालार्चनं
भक्तिं भूतिसमुद्भवे न तु भवे ध्यानं धने नात्मनि।
दृष्टादुष्टविचिन्तनं नरपतौ न स्वोचिते कर्मणि
श्रीहेतोर्बत निष्फलं प्रकुरुते सर्वं जडः सेवकः ॥५५॥

सा तीव्रं जडनिम्नपातनरता नो नित्यसक्ता त्वरा
रथ्यापङ्ककलङ्कितं न वदनं न द्वारपालैः कलिः।
यस्मिंस्तच्चिरसेवकैः प्रविततं पुण्यं वनं गम्यतां
क्रूरास्ते न भवन्ति तत्र विकृतक्रोधोद्धताः पार्थिवाः ॥५६॥

हंहो कष्टविनष्ट सेवक सखे खिन्नोऽसि पोषाशया
रागश्चेद् विभवे तदेष कुपतिः क्लीबः किमासेव्यते।
सेव्यः कोऽपि महेश्वरः स भगवान् यस्य प्रसादेक्षणै-
रक्षुण्णैः करुणास्पदीकृतमरुन्नाथो मरुत्तः कृतः ॥५७॥

राज्ञामज्ञतया कृतं यदनिशं दैन्यं तदुत्सृज्यतां
सन्तोषाम्भसि मृज्यतामपि रजः पादप्रणामार्जितम्।

सन्तोषः परमः पुराणपुरुषः संविन्मयः सेव्यतां
यत्स्मृत्या न भवन्ति ते सुमनसां भूयो भवग्रन्थयः ॥५८॥

उत्सृज्य प्राज्यसेवां विजनसुखजुषां भूभुजां व्याजभाजां
छित्त्वाशापाशबन्धान् विमलशमजलैस्तीव्रतृष्णां निवार्य।
स्थित्वा शुद्धे समाधौ किमपरममृतं मृग्यतां ज्योतिरन्त-
र्यस्मिन् दृष्टे विनष्टेत्कटतिमिरभरे लभ्यते मोक्षलक्ष्मीः ॥५९॥

वृत्त्या जीवति लोकः सेवावृत्तिर्निजैव केषाञ्चित्।
अस्थाने तीव्रतरा निन्द्या तु तदर्थिनां सेवा ॥६०॥

विद्वज्जनाराधनतत्परेण सन्तोषसेवारसनिर्भरेण।
क्षेमेन्द्रनाम्ना सुधियां सदैव सुखाय सेवावसरः कृतोऽयम् ॥६१॥

**इति श्रीव्यासदासापराख्यमहाकविक्षेमेन्द्रकृतः**

**सेव्यसेवकोपदेशः समाप्तः ।**

* * * * *

# ४.उपहासकाव्यानि

## १. कलाविलासः

### प्रथमः सर्गः - दम्भाख्यानम्

अस्ति विशालं कमलाललितपरिष्वङ्गमङ्गलायतनम्।
श्रीपतिवक्षःस्थलमिव रत्नोज्ज्वलमुज्ज्वलं नगरम्॥१॥

मणिभूबिम्बितमुक्ताप्रलम्बनिवहेन यत्र शेषाहिः।
भवनानि बिभर्ति सदा बहुधात्मानं विभज्येव॥२॥

विघ्नोऽभिसारिकाणां भवनगणस्फाटिकप्रभानिकरः।
यत्र विराजति रजनीतिमिरपटप्रकटलुण्ठाकः॥३॥

यत्र त्रिनयननयनज्वलनज्वालावलीशलभवृत्तिः।
जीवति मानसजन्मा शशिवदनावदनकान्तिपीयूषैः॥४॥

रतिलुलितललितललनाक्लमजललववाहिनो मुहुर्यत्र।
श्लथकेशकुसुमपरिमलवासितदेहा वहन्त्यनिलाः॥५॥

नवबिसकिसलयकवलनकषायकलहंसकलरवो यत्र।
कमलवनेषु प्रसरति लक्ष्म्या इव नूपुरारावः॥६॥

नृत्यन्मुग्धमयूरा मरकतधारागृहावली सततम्।
सेन्द्रायुधधननिवहा प्रावृण्मूर्तेव यत्रास्ते॥७॥

शशिकिरणप्रावरणस्फाटिकहर्म्येषु हरिणशावाक्ष्यः।
यत्र विभान्ति सुधाम्बुधिमुग्धतरङ्गोत्थिता इवाप्सरसः॥८॥

तत्राभूदभिभूतप्रभूतमायानिकायशतधूर्तः।
सकलकलानिलयानां धुर्यः श्रीमूलदेवाख्यः॥९॥

नानादिग्देशागतधूर्तैरुपजीव्यमानमतिविभवः।
स प्राप विपुलसम्पदमात्मगुणैश्चक्रवर्तीव॥१०॥

भुक्तोत्तरं सहृदयैरास्थानीसंस्थितं कदाचित्तम्।
अभ्येत्य सार्थवाहो दत्तमहार्होपहारमणिकनकः॥११॥

प्रणतो हिरण्यगुप्तः सहितः पुत्रेण चन्द्रगुप्तेन।
प्राप्तासनसत्कारः प्रोवाच मुहूर्तविश्रान्तः॥१२॥ (युग्मम्)

अतिपरिचयसप्रतिभा तव पुरतो मादृशामियं वाणी।
ग्राम्याङ्गनेव नगरे न तथा प्रगल्भ्यमायाति॥१३॥

पिहितबृहस्पतिधिषणो रुचिरः प्रज्ञामरीचिनिचयस्ते।
तीक्ष्णांशोरिव सहजः प्रोषिततिमिराः करोत्याशाः॥१४॥

आजन्मार्जितबहुविधमणिमौक्तिककनकपूर्णकोषस्य।
एको ममैष सूनुः सञ्जातः पश्चिमे वयसि॥१५॥

मोहस्थानं बाल्यं यौवनमपि मदनमानसोन्मादम्।
अनिलावलोलनलिनीदलजलचपलाश्च वित्तचयाः॥१६॥

हारिण्यो हरिणदृशः सततं भोगाब्जमधुकरा धूर्ताः।
पतिता परम्परैषा दोषाणां मम सुतस्यास्य॥१७॥(युग्मम्)

धूर्तकरकन्दुकानां वारवधूचरणनूपुरमणीनाम्।
धनिकगृहोत्पन्नानां मुक्तिर्नास्त्येव मुग्धानाम्॥१८॥

अज्ञातदेशकालाश्चपलमुखाः पङ्गवोऽपि सप्लुतयः।
नवविहगा इव मुग्धा भक्ष्यन्ते धूर्तमार्जारैः॥१९॥

आश्रितजनतनयोऽयं तव विद्वन् निजसुताधिकः सत्यम्।
न यथा प्रयाति नाशं तथास्य बुद्धिं प्रयच्छ पराम्॥२०॥

इति विनयनम्रशिरसा तेन वचो युक्तमुक्तमवधार्य।
तमुवाच **मूलदेवः** प्रीतिप्रसारैः प्रसारितौष्ठाग्रः॥२१॥

आस्तामेष सुतस्ते मम भवने निज इव प्रयत्नपरः।
ज्ञास्यति मयोपदिष्टं शनकैः सकलं कलाहृदयम्॥२२॥

इति तस्य शासनेन स्वसुतं निक्षिप्य तद्गृहे मतिमान्।
नत्वाथ सार्थवाहः प्रययौ निजमन्दिरं मुदितः॥२३॥

अथ शिथिलकिरणजालो धूसरकान्तिर्निरम्बरस्तरणिः।
अभवददृश्यः शनकैर्धूर्तैरिव निर्जितः कितवः॥२४॥

अस्तमिते दिवसकरे तिमिरभरद्विरदसंसक्ता।
सिन्दूरपटलपाटककान्तिरिवाग्रे बभौ सन्ध्या॥२५॥

त्यक्तापि प्रतिदिवसं दिवसद्युतिरनुजगाम दिवसकरम्।
न तु रक्तापि हि सन्ध्या हृदयं जानाति कः स्त्रीणाम्॥२६॥

गगनाङ्गणकमलवने सन्ध्यारागे गते शनैः क्वापि।
अप्राप्तस्थितिविकलं बभ्राम भ्रमरविभ्रमं तिमिरम्॥२७॥

तीक्ष्णांशुविरहमोहैस्तिमिरैरिव मीलिता बभूव मही।
तीव्रोऽपि जनस्य सदा यातः खलु वल्लभो भवति॥२८॥

रजनी रराज सिततरतारकमुक्ताकलापकृतशोभा।
शबररमणीव परिचिततिमिरमयूरच्छदाभरणा॥२९॥

अथ पथिकवधूदहनः शनकैरुदभून् निशाकरालोकः।
कुमुदप्रबोधदूतो व्यसनगुरुश्चक्रवाकीणाम्॥३०॥

मन्मथसितातपत्रं दिग्वनितास्फटिकदर्पणो विमलः।
विरराज रजनिरमणीसिततिलको यामिनीनाथः॥३१॥

निजकरमृणालवल्लीवलयविलासी ललास सितकान्तिः।
गगनतटिनीतटान्ते रजनिकरो राजहंस इव॥३२॥

श्यामा शुशुभे शशिना तया मनोभूर्मधूत्सवस्तेन।
मदमुदितमानसानां तेनापि मृगीदृशं लीला॥३३॥

धूर्ताः समृद्धिसचिवा विच्छायां पद्मिनीं परित्यज्य।
फुल्लानि विविशुरलयः सानन्दाः कुमुदवृन्दानि॥३४॥

ज्योत्स्नाभस्मस्मेरा सुललितशशिशकलपेशलकपाला।
तारास्थिपटलहारा शुशुभे कापालिकीव निशा॥३५॥

तस्मिन् प्रौढनिशाकरकिरणप्रकरप्रकाशिताशेषे।
निजमणिभवनोद्याने निर्वर्तितभावनासमाधानः॥३६॥

स्फटिकासनोपविष्टः सह शशिना निर्विभागमित्रेण।
कन्दलिमुख्यैः शिष्यैः परिवारितपादपीठान्तः ॥३७॥

प्रोवाच **मूलदेवो** वीक्ष्य चिरं सार्थवाहसुतमग्रे।
कुर्वन् दशनमयूखैर्लज्जालीनामिव ज्योत्स्नाम् ॥३८॥ (विशेषकम्)

शृणु पुत्र वञ्चकानां सकलकलाहृदयसारमतिकुटिलम्।
ज्ञाते भवन्ति यस्मिन् क्षणरुचिचपलाः श्रियोऽप्यचलाः ॥३९॥

एकोऽस्मिन् भवगहने तृणपल्लववलयजालसञ्छन्नः।
कूपः पतन्ति यस्मिन् मुग्धकुरङ्गा निरालम्बे ॥४०॥

सोऽयं निधानकुम्भो दम्भो नाम स्वावगम्भीरः।
कुटिलैः कुहकभुजङ्गैः संवृतवदनः स्थितो लोके ॥४१॥

मायारहस्यमन्त्रश्चिन्तामणिरीप्सितार्थानाम्।
दम्भः प्रभावकारी धूर्तानां श्रीवशीकरणम् ॥४२॥

मत्स्यस्येवाप्सु सदा दम्भस्य ज्ञायते गतिः केन।
नास्य करौ न च पादौ न शिरो दुर्लक्ष्य एवासौ ॥४३॥

मन्त्रबलेन भुजङ्गा मुग्धकुरङ्गाश्च कूटयन्त्रेण।
स्थलजालेन विहंगा गृह्यन्ते मानवाश्च दम्भेन ॥४४॥

जनहृदयविप्रलम्भो मायास्तम्भो जगज्जयारम्भः।
जयति सदानुपलम्भो मायारम्भोदयो दम्भः ॥४५॥

सततावर्तभ्रान्ते दुःसहमायासहस्रकुटिलारे।
मूलं दम्भो नाभिर्विपुलतरे चक्रिकाचक्रे ॥४६॥

नयननिमीलनमूलः सुचिरं स्नानार्द्रचूलजलसिक्तः।
दम्भतरुः शुचिकुसुमः सुखशतशाखाशतैः फलितः ॥४७॥

व्रतनियमैर्बकदम्भः संवृतनियमैश्च कूर्मजो दम्भः।
निभृतगतिनयननियमैर्घोरो मार्जारजो दम्भः ॥४८॥

बकदम्भो दम्भपतिर्दम्भनरेन्द्रश्च कूर्मजो दम्भः।
मार्जारदम्भ एष प्राप्तो दम्भेषु चक्रवर्तित्वम् ॥४९॥

नीचनखश्मश्रुकचश्चूली जटिलः प्रलम्बकूर्चो वा।
बहुमृत्तिकापिशाचः परिमितभाषी प्रयत्नपादत्रः ॥५०॥

स्थूलग्रन्थिपवित्रकपृष्ठार्पितहेमवल्लीकः।
कक्षार्पितपटपल्लवरुद्धभुजो भाण्डहस्त इव ॥५१॥

अङ्गुलिभङ्गविकल्पनविविधविवादप्रवृत्तपाण्डित्यः।
जपचपलोष्ठः सजने ध्यानपरो नगररथ्यासु ॥५२॥

साभिनयाश्चितचुलकैराचमनैः सुचिरमज्जनैस्तीर्थे।
संरुद्धसकललोकः पुनः पुनः कर्णकोणसंस्पर्शी ॥५३॥

सीत्कृतदन्तनिनादावेदितहेमन्तदुःसहस्नानः।
विस्तीर्णतिलकचर्चासूचितसर्वोपचारसुरपूजः ॥५४॥

शिरसा बिभर्ति कुसुमं विनिपतितां काकदृष्टिमिव रचयन्।
एवं रूपः पुरुषो यो यः स स दाम्भिको ज्ञेयः ॥५५॥

निर्गुणलोकप्रणतः सगुणे स्तब्धः स्वबन्धुषु द्वेषी।
परजनकरुणाबन्धु कीर्त्यर्थी दाम्भिको धूर्तः ॥५६॥

कार्योपयोगकाले प्रणतशिराश्चाटुशतकारी।
सभ्रूभङ्गो मौनी कृतकार्यो दाम्भिकः क्रूरः ॥५७॥

स्तम्भितविबुधसमृद्धिर्दैत्यो योऽभूत् पुरा जम्भः।
दम्भः सोऽयं निवसति भूमितले भूतदेहेषु ॥५८॥

शुचिदम्भः शमदम्भः स्नातकदम्भः समाधिदम्भश्च।
निःस्पृहदम्भस्य तुलां यान्ति तु नैते शतांशेन ॥५९॥

शौचाचारविवादी मृत्क्षयकारी स्वबान्धवस्पर्शी।
शुचिदम्भेन जनोऽयं विश्वामित्रत्वमायाति ॥६०॥

संहृतबहुविधसत्त्वो निःक्षेपद्रविणवारिबहुतृष्णः।
सततमहिंसादम्भो वडवाग्निः सर्वभक्षोऽयम् ॥६१॥

मुण्डो जटिलो नग्नश्छत्री दण्डी कषायचीरी वा।
भस्मस्मेरशरीरो दिशि दिशि भोगी विजृम्भते दम्भः ॥६२॥

खल्वाटः स्थूलवपुः शुष्कतनुर्मुनिसामानरूपो वा।
शाटकवेष्टितशीर्षश्चैत्योन्नतशिखरवेष्टनो वापि ॥६३॥

लोभः पितातिवृद्धो जननी माया सहोदरः कूटः।
कुटिलाकृतिश्च गृहिणी पुत्रो दम्भस्य हुङ्कारः ॥६४॥

भगवान् पुरा स्वयम्भूः कृत्वा भुवनानि भूतसर्गं च।
विरतव्यापारतया सुचिरं चिन्तान्वितस्तस्थौ ॥६५॥

दृष्ट्वा स मर्त्यलोके दिव्यदृशा मानुषान् निरालम्बान्।
आर्जवयोगविशेषादप्राप्तधनादिसम्भोगान् ॥६६॥

मीलितनयनः क्षिप्रं स्थित्वा मायामये समाधाने।
असृजन् नृणां विभूत्यै दम्भं सम्भावनाधारम्॥६७॥

बिभ्राणः कुशपूलीं पुस्तकमाले कमण्डलुं शून्यम्।
निजहृदयकुटिलशृङ्गं दण्डं कृष्णाजिनं खनित्रं च॥६८॥

स्थूलतरकुशपवित्रकलाञ्छितकर्णः पवित्रपाणिश्च।
सुव्यक्तमुण्डमस्तककुशवेष्टितचूलमूलसितकुसुमः॥६९॥

काष्ठस्तब्धग्रीवो जपचपलौष्ठः समाधिलीनाक्षः।
रुद्राक्षवलयहस्तो मृत्परिपूर्णं वहन् पात्रम्॥७०॥

नयनाञ्चलैः सकोपैर्भ्रुकुटीहुंकारवदनसंज्ञाभिः।
बहुविधकदर्थनाभिः कथिताखिलहृदयवाञ्छितो मौनी॥७१॥

रक्षन् परसंस्पर्शं शौचार्थी ब्रह्मलोकेऽपि।
दम्भः पुरोऽस्य नस्थावुत्थित एवासनाकाङ्क्षी॥७२॥

आकल्पेन सुमहता सहसास्वशीकृताः परं तेन।
सप्तर्षयोऽपि तस्मै प्रणतास्तस्थुः कृताञ्जलयः॥७३॥

तं दृष्ट्वा परमेष्ठी लीलाकृतसकलसर्गवर्गोऽपि।
गौरवविस्मयहर्षैर्निः स्पन्दान्दोलितस्तस्थौ॥७४॥

तस्यातितीव्रनियमाद् ग्रस्तेऽगस्त्येऽतिविस्मयेनेव।
अल्पतपोव्रतलज्जाकुञ्चितपृष्ठे वसिष्ठे च॥७५॥

अतिसरलनिजमुनिव्रतपरिगतकुत्से च कूणिते कौत्से।
डम्बररहितात्मतपोनिरादरे नारदे विहिते॥७६॥

निजजानुसन्धिशिखरे जमदग्नौ मग्नवदने च।
त्रस्ते विश्वामित्रे वलितगले गालवे भृगौ मग्ने ॥७७॥

सुचिरोत्थितमतिकोपादासनकमले निविष्टदृष्टिं च।
शूलप्रोतमिवाग्रे निःस्पन्दममन्दगर्वगुरुगात्रम् ॥७८॥

ज्ञात्वा तमासनार्थिनमवदद् देवश्चतुर्मुखः प्रीत्या।
विकसन्निजदशनरुचा विहसन्निव वाहनं हंसम् ॥७९॥

उपविश पुत्र ममाङ्के नियमेन महीयसातिचित्रेण।
अर्होऽसि गुणगणोद्गतगौरसंवादिनानेन ॥८०॥

इत्युक्तो विश्वसृजा तस्याङ्कमशङ्कया ससङ्कोचः।
अभ्युक्ष्य वारिमुष्ट्या कृच्छ्रेणोपाविशद् दम्भः ॥८१॥

दम्भ उवाच-

नोच्चैर्वाच्यमवश्यं यदि वाच्यं हस्तपद्मेन।
आच्छाद्य वक्त्ररन्ध्रं स्पृष्टो न स्यां यथास्यवातांशैः ॥८२॥

तत्तस्य शौचमतुलं दृष्ट्वा स्मेराननो ब्रह्मा।
दम्भोऽसीति जगाद प्रायो हस्ताग्रमाकम्प्य ॥८३॥

उत्तिष्ठ सकलजलनिधिपरिखावलिमेखलां महीमखिलाम्।
अवतीर्य भुङ्क्ष्व भोगान् विबुधैरपि तत्त्वतो न विज्ञातः ॥८४॥

इत्यादराद् विसृष्टो विधिना संसारसागरगतानाम्।
कण्ठे शिलां निबध्नन् मर्त्यानामवततार महीम् ॥८५॥

अथ मर्त्यलोकमेत्य भ्रान्त्वा दम्भो वनानि नगराणि।
विनिवेश्य गौडविषये निजजयकेतुं जगाम दिशः ॥८६॥

वचने बाह्लीकानां व्रतनियमे प्राच्यदाक्षिणात्यानाम्।
अधिकारे कीराणां दम्भः सर्वत्र गौडानाम् ॥८७॥

एते दम्भसहायाः प्रतिग्रहश्राद्धसिद्धचूर्णेन।
कुर्वन्ति ये प्रभाते यतस्ततो भस्मना तिलकम् ॥८८॥

तूर्णं सहस्रभागैर्भुवनतले संविभज्य भूतानि।
मूर्तः सततं निवसति दम्भो वदनेऽधिकरणभट्टानाम् ॥८९॥

गुरुहृदयमविशदग्रे बालकहृदयं तपस्विहृदयं च।
कुटिलं नियोगिहृदयं दीक्षितहृदयं स्वयं दम्भः ॥९०॥

तदनु च गणकचिकित्सकसेवकवणिजां सहेमकाराणाम्।
नटभटगायनवाचकचक्रचराणां च हृदयानि ॥९१॥

अंशैः प्रविश्य हृदयं विविधविकारैः समस्तजन्तूनाम्।
दम्भो विवेश पश्चादन्तरमिह पक्षिवृक्षाणाम् ॥९२॥

मत्स्यार्थी चरति तपः सुचिरं निस्पन्द एकपादेन।
तीर्थेषु बकतपस्वी तेन विहङ्गान् गतो दम्भः ॥९३॥

विपुलजटावल्कलिनः शीतातपवातकर्शिताः सततम्।
वृक्षा जलार्थिनो यद्दम्भस्य विजृम्भितं तदपि ॥९४॥

एवं विचारणीयः सर्वगतः सर्वहृत् सदा दम्भः।
ज्ञाते तस्मिन् विविधे विफला मायाविनां माया ॥९५॥

दम्भविकारः पुरतो वञ्चकचक्रस्य कल्पवृक्षोऽयम्।
वामनदम्भेन पुरा हरिणा त्रैलोक्यमाक्रान्तम्॥९६॥

इति श्रीव्यासदासापराख्यमहाकविश्रीक्षेमेन्द्रविरचिते
कालविलासे दम्भाख्यानं नाम प्रथमः सर्गः॥

* * * * *

## द्वितीयः सर्गः - लोभवर्णनम्

लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम्।
कार्याकार्यविचारो लोभाकृष्टस्य नास्त्येव॥१॥

मायाविनिमयविभ्रमनिह्नववैचित्यकूटकपटानाम्।
सञ्चयदुर्गपिशाचः सर्वहरो मूलकारणं लोभः॥२॥

सत्त्वप्रशमतपोभिः सत्त्वधनैः शास्त्रवेदिभिर्विजितः।
लोभोऽवटं प्रविष्टः कुटिलं हृदयं किराटानाम्॥३॥

क्रयविक्रयकूटतुलालाधवनिक्षेपरक्षणव्याजैः।
एते हि दिवसचौरा मुष्णन्ति मुदा जनं वणिजः॥४॥

हृत्वा धनं जनानां दिनमखिलं विविधकूटमायाभिः।
वितरति गृहे किराटः कष्टेन वराटकत्रितयम्॥५॥

आख्यायिकानुरागी व्रजति सदा पुण्यपुस्तकं श्रोतुम्।
दष्ट इव कृष्णसर्पैः पलायते दानधर्मेभ्यः॥६॥

द्वादश्यां पितृदिवसे सक्रमणे सोमसूर्ययोर्ग्रहणे।
सुचिरं स्नानं कुरुते न ददाति कपर्दिकामेकाम्॥७॥

दत्त्वा दिशि दिशि दृष्टिं याचकचकितोऽवगुण्ठनं कृत्वा।
चौर इव कुटिलचारी पलायते विकटरथ्याभिः॥८॥

न ददाति प्रतिवचनं विक्रयकाले शठो वणिङ् मौनी।
निक्षेपपाणिपुरुषं दृष्ट्वा सम्भाषणं कुरुते॥९॥

उत्तिष्ठति नमति वणिक् पृच्छति कुशलं ददाति च स्थानम्।
निक्षेपपाणिपुरुषं दृष्ट्वा धर्म्यां कथां कुरुते॥१०॥

कश्चिद् वदति तमेत्य द्रविणं निक्षिप्य हन्त गन्तास्मि।
भ्रातः परं प्रभाते विष्टिदिनं किं करोम्यद्य॥११॥

तच्छ्रुत्वा विकसितदृग्वदति स मिथ्यैव नाटयन् खेदम्।
कार्ये प्रसारिताक्षः पुनः पुनः पार्श्वमवलोक्य॥१२॥

त्वदधीनं स्थानमिदं किं तु चिरं न्यासपालनं कठिनम्।
विषमौ च देशकालौ साधोस्तव तदपि दासोऽहम्॥१३॥

भद्रा न दूषितैषा निक्षेपक्षेमकारिणी शस्ता।
इत्यनुभूतं बहुशः कार्यज्ञैस्त्वं तु जानासि॥१४॥

विष्टिदिने किमपि पुरा न्यस्तं केनापि मित्रेण।
तूर्णं पुनश्च शनकैर्नीतं क्षेमेण कुशलेन॥१५॥

इत्यादि मुग्धबुद्धेरसमञ्जसवर्णनं रहः कृत्वा।
गृह्णाति कनकनिकरं नृत्यंस्तत्तन्मनोरथैः पापः॥१६॥

तत् सञ्चूर्णनजातैः क्रयविक्रयलाभराशिभिरनन्तैः।
भाण्डप्रतिभाण्डचयैरुपहसति धनाधिनाथं सः॥१७॥

पूर्णाः कदर्यवणिजां निःसम्भोगा निधानधनकुम्भाः।
सीदन्ति कुचतटा इव दुःखफला बालविधवानाम्॥१८॥

दानोपभोगविरहितहिरण्यरक्षाकृतक्षणाः सततम्।
संसारजीर्णमन्दिरविषममहामूषका वणिजः॥१९॥

अटति समुत्कटवेष्टितविकटपटस्फुटफटाटोपः।
कुटिलः कण्टकनिचितः पुरपतिनामा निधिव्यालः॥२०॥

अथ पुरुषः स दिगन्तं भ्रान्त्वा केनापि दैवयोगेन।
नष्टधनो जनरहितः प्राप्तः सुचिरान् निजं देशम्॥२१॥

पृच्छति कमपि सशङ्कः स किराटः क्व नु गतो महासत्त्वः।
तमुपेत्य वदति कश्चित् तस्याद्य सखे विभूतिरन्यैव॥२२॥

विविधनवांशुकमृगमदचन्दनकर्पूरमरिचपूगफलैः।
खटिकाहस्तः स सदा गणयति कोटीर्मुहूर्तेन॥२३॥

अस्मिन् मेरुविशाले वरभवने रुचिरभित्तिकृतचित्रे।
पुरपतिनाप्यनुयातो वसति सुखं स हि महाजनो यत्र॥२४॥

श्रुत्वैतदतुलविस्मयलोलितमौलिः स तद्गृहं गत्वा।
द्वारे स्थगितस्तिष्ठति निष्प्रतिभो जीर्णकर्पटः सुचिरम्॥२५॥

तं तुङ्गभवनवलभीजालान्तरतो वणिक् परिज्ञाय।
नोच्छ्वसिति नष्टचेष्टस्ताडित इव मूर्ध्नि वज्रेण॥२६॥

उपसृज्य मन्दमन्दं कथमपि सम्प्राप्तनिर्जनावसरः।
तं याचते स पुरुषो द्रविणं स्वं प्रकटिताभिख्यः॥२७॥

तं वदति सोऽन्यदृष्टिः सभ्रूभङ्गं विधुतहस्ताग्रः।
वञ्चकवचनः पापो वृत्तिक्षीणः [illegible] समायातः॥२८॥

कस्त्वं कस्य कुतो वा दर्शनमपि न स्मरामि किं कथनैः।
अहह कदा कुत्र त्वं वद कस्य किमर्पितं केन॥२९॥

पश्यत कष्टमनिष्टः कलिकालः कीदृशोऽयमायातः।
मत्तोऽर्थमेष वाञ्छति लोको जानाति वा सर्वम्॥३०॥

हरगुप्तकुलेऽस्माकं निक्षेपग्रहणमप्यसम्भाव्यम्।
किं पुनरपह्नवोद्गतघोरमहापातकस्पर्शः॥३१॥

तदपि सतताभिशंशी प्रत्याख्येयो जनः कथं महताम्।
कथय दिनं तद् दिवसे लिखितं सर्वं स्वयं पश्य॥३२॥

वृद्धोऽहं न्यस्तभरः पुत्रे सर्वं ममास्ति लिखितं हि।
इति तेन विनष्टधृतिः स विसृष्टस्तत्सुतान्तिकं प्राप्तः॥३३॥

तातो जानाति सुतो जानाति पितैव लिखति सकलं यत्।
इति तस्य भवति सुचिरं गतागतं कन्दुकस्येव॥३४॥

राजकुलद्वारगते तस्मिन् प्राप्तप्रवासदत्तार्थे।
सहते नरपतिकोपं त्यजति किराटो न रूपकस्याशाम्॥३५॥

परिपीडितः स राज्ञा विविधैरपि यातनाशस्त्रैः।
मम हस्ते निक्षिप्तं किञ्चित् नास्तीति वक्त्येव॥३६॥

एवं स्वभावलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः।
तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य॥३७॥

देवं धनाधिनाथं वैश्रवणं सकलसम्पदां निलयम्।
शुक्रः प्रोवाच पुरा वित्तार्थी बालमित्रमभ्येत्य॥३८॥

पूर्णः सखे तवायं विभवो विजितामरासुरैश्वर्यः।
हर्षं विदधाति परं सुहृदां शोकं च शत्रूणाम्॥३९॥

त्वयि सुहृदि वित्तनाथे निःस्वोऽहं बहुकुटुम्बसम्भारः।
समदुःखसुखं मित्रं स्वाधीनतयोदितं प्रशंसन्ति ॥४० ॥

यशसि विहितादराणामर्थिभिरुपजीव्यमानविभवानाम्।
अभिजातवंशजानां सुहृदुपभोग्याः श्रियो महताम् ॥४१ ॥

उपनतमतिपुण्यचयैः सम्पूर्णं रक्षितं च यत्नेन।
सम्पदि विपदि त्राणं भवति निधानं च मित्रं च ॥४२ ॥

इत्युक्तः सप्रणयं दैत्याचार्येण निर्जने धनदः।
तमुवाच विचिन्त्य चिरं संरुद्धः स्नेहलोभाभ्याम् ॥४३ ॥

जानामि बालमित्रं त्वामहमत्यन्तसम्भृतस्नेहम्।
किं तु न जीवितजीवं द्रविणलवं त्यक्तुमीशोऽस्मि ॥४४ ॥

स्नेहार्थी बन्धुजनः कार्यैर्बहुभिर्भवन्ति मित्राणि।
दाराः सुताश्च सुलभा धनमेकं दुर्लभं लोके ॥४५ ॥

अति साहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम्।
यौऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥४६ ॥

इत्याशापरिहारैः प्रत्याख्यातो धनाधिनाथेन।
भग्नमुखो लुलितमतिर्लज्जावक्रो ययौ शुक्रः ॥४७ ॥

स विचिन्त्य गृहे सुचिरं सचिवैः सह मायया महायोगी।
हर्तुं द्रविणमशेषं विवेश हृदयं धनेशस्य ॥४८ ॥

शुक्राविष्टशरीरो वैश्रवणः सकलमद्भुतत्यागः।
तत्कृतसङ्केतेभ्यः प्रददौ वित्तं द्विजातिभ्यः ॥४९ ॥

कौबेरं धनमखिलं हृत्वा यातेऽथ दानवाचार्ये।
सुचिरं धनाधिनाथः शुशोच विज्ञाय तां मायाम्॥५०॥

हस्तन्यस्तललाटः सह शङ्खमुकुन्दकुन्दपद्माद्यैः।
सञ्चिन्त्य शुक्रविकृतिं स जगादोष्णं विनिःश्वस्य॥५१॥

सुहृदा मर्मज्ञेन व्याजान् मायाविनातिलुब्धेन।
धूर्तेन वञ्चितोऽहं दैत्याश्रयदुर्जयेन शुक्रेण॥५२॥

अधुना द्रव्यविहीनः क्षणेन तृणलाघवं प्राप्तः।
कथयामि कस्य दुःखं करोमि किं वा क्व गच्छामि॥५३॥

धनरहितं त्यजति जनो जनराहितं परिभवाः समायान्ति।
परिभूतस्य शरीरे व्यसनविकारो महाभारः॥५४॥

दयितेषु शरीरवतां बत धर्मलतालवालेषु।
द्रविणेषु जीवितेषु च सर्वं याति प्रयातेषु॥५५॥

विद्वान् सुभगो मानी विश्रुतकर्मा कुलोन्नतः शूरः।
वित्तेन भवति सर्वो वित्तविहीनस्तु सद्गुणोऽप्यगुणः॥५६॥

इति दुःसहधनविरहक्लेशानलशोषिताशयो धनपः।
सुचिरं विमृश्य सचिवैर्देवं शर्वं ययौ शरणम्॥५७॥

प्राक्प्रतिपन्नसखोऽसौ विश्वशरण्यो महेश्वरस्तेन।
विज्ञप्तो निजवृत्तं दूतं विससर्ज शुक्राय॥५८॥

दूताहूतं सहसा प्राप्तं शुक्रं धनप्रभाशुक्रम्।
अञ्जलिविरचितमुकुटं प्रोवाच पुरः स्थितं पुरजित्॥५९॥

मित्रमयं द्रविणपतिर्भवता बत वञ्चितः कृतज्ञेन।
मित्रद्रोहे प्रसरति न हि नाम जनः कृतघ्नोऽपि॥६०॥

अगणितयशसा त्यक्तस्थितिना क्रियतेऽथ याकृतज्ञेन।
स्निग्धे सुहृदि सरागे मित्रे तव वञ्चना न युक्ता सा॥६१॥

एतत् किं श्रुतसदृशं त्वद्व्रतयोग्यं कुलानुरूपं वा।
कृतवानसि यत् सुमते परिभूतगुणोदयं कर्म॥६२॥

किमयं सुनयाभ्यासः प्रशमो वा गुरुजनोपदेशो वा।
मतिविभवः सहजो वा वञ्चकतां येन यातोऽसि॥६३॥

कस्य न दयितं वित्तं चित्तं हि येन न कस्य वित्तेन।
किं तु यशोधनलुब्धा वाञ्छन्ति न दुष्कृतैरर्थान्॥६४॥

मा मा मलिनय विमलं भृगुकुलममलं मलेन लोभेन।
लोभजलदो हि शत्रुर्विशदयशोराजहंसानाम्॥६५॥

त्यक्त्वा कीर्तिमनन्तामनिलाकुलतृणलवोपमानर्थान्।
गृह्णाति यः स मध्ये धूर्तानां कीदृशो धूर्तः॥६६॥

उत्सृज्य साधुवृत्तं कुटिलधिया वञ्चितः परो येन।
आत्मैव मूढमतिना कृतसुकृतो वञ्चितस्तेन॥६७॥

नियता दूषितयशसां बत किसलयकोमला प्रकृत्यैव।
अपवादविषतरूत्थैरामोदैर्मूर्छिता लक्ष्मीः॥६८॥

न हि नाम सज्जनानां शुद्धयशः स्फचिकदर्पणो विमलः।
परिभवदुःखितजनतानिः श्वासैर्मलिनतामेति॥६९॥

असमञ्जसमतिमलिनं मोहाद् व्यक्तिं समागतं कर्म।
तस्य विशुद्धिः क्रियतां परवित्तसमर्पणेनैव ॥७०॥

अपवादधूलिधूसरममलयशो मृज्यतां स्वहस्तेन।
अस्मद्वचनं क्रियतां परधनमुत्सृज्यतामेतत् ॥७१॥

इत्युक्तः सानुनयं त्रिभुवनगुरुणापि देवदेवेन।
परधननिबद्धतृष्णः प्रोवाच कृताञ्जलिः शुक्रः ॥७२॥

भगवन् भवतः शासनममरेन्द्रकिरीटकोटिविश्रान्तम्।
लङ्घयति को नु मोहाद् दौर्गत्यं सत्त्वहारि यदि न स्यात् ॥७३॥

यस्य क्षीणस्य गृहे भृत्या दाराः सुताश्च सीदन्ति।
कार्याकार्यविचारो द्रविणादानेषु कस्तस्य ॥७४॥

मित्रमयं धननाथो विपदि त्राणं विचिन्तितः सततम्।
वृद्धिं यातः सुमहानाशाबन्धश्च मे हृदये ॥७५॥

अभ्येत्य याचितोऽपि त्यक्त्वा लज्जां मया विगतलज्जः।
चिच्छेदैष ममाशां सहसा प्रतिपेधशस्त्रेण ॥७६॥

तेन प्रहतमशस्त्रं दाहोऽनग्निश्च निर्विषं मरणम्।
विहितं शठेन मोहादाशाभङ्गः कृतो येन ॥७७॥

तस्मान् ममैष शत्रुः सुकृतसमं शत्रुवञ्चनापापम्।
रिक्तस्य निरपवादो व्याजेनोपार्जितोऽप्यर्थः ॥७८॥

अणु धनमपि न त्याज्यं मम भवता ज्ञापिते सत्यम्।
वित्तं जीवितमग्र्यं जीवितहानिर्धनत्यागः ॥७९॥

इति सम्भाषिणमसकृद् दैत्यगुरुं प्रार्थितं पुनर्बहुशः।
कवलीचकार सहसा प्रतिषेधरुषा विरूपाक्षः ॥८०॥

जठरान्तरे पुरारेः प्रलयानलविपुलभीषणाभोगे।
प्रक्वाथ्यमानकायः शुक्रश्चुकोश साक्रोशः ॥८१॥

त्यज धनमिति विषमदृशा पुनः पुनः प्रेरितोऽवदच्छुक्रः।
निधनं ममास्तु भगवन् धनदधनं न त्यजामि किञ्चिदपि॥८२॥

अथ धारणाप्रवृद्धज्वलनज्वालासहस्रविकराले।
शुक्रश्चुक्रोश भृशं घोरगभीरे हरोदरे पतितः॥८३॥

तमुवाच देवदेवस्त्यज दुर्ग्रहदग्ध परवित्तम्।
अस्मिन्नुदरमहोदधिवडवाग्नौ मा गमः प्रलयम्॥८४॥

सोऽवददतिशयतापस्फुटितास्थिवसाप्रवाहबहलाग्नौ।
परमिह मरणं श्रेयो द्रविणकणं न त्यजामि सोच्छ्वासः॥८५॥

पुनरपि घोरतरोद्गतकालानलधारणानलज्वलितः।
शुक्रश्चक्रे देव्याः स्तोत्रं क्षणलेशशेषायुः॥८६॥

स्तोत्रपदाराधितया गौर्या प्रणयप्रसादिते रुद्रे।
तद्वचसा लब्धधृतिः शुक्रद्वारेण निर्ययौ शुक्रः॥८७॥

एवं स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते।
न तु सन्त्यजन्ति वित्तं कौटिल्यमिवाधमः सहजम्॥८८॥

तस्माल्लोभसमुत्था कपटकला कुटिलवर्तिनी माया।
लुब्धहृदयेषु निवसति नालुब्धो वञ्चनां कुरुते॥८९॥

**इति श्रीव्यसदासापराख्यमहाकविक्षेमेन्द्रविरचिते**
**कलाविलासे लोभवर्णनं नाम द्वितीयः सर्गः॥**

* * * * *

## तृतीयः सर्गः - कामवर्णनम्।

कामः कमनीयतया किमपि निकामं करोति सम्मोहम्।
विषमिव विषमं सहसा मधुरतया जीवनं हरति ॥१॥

एते हि कामकलिताः परिमललीनालिवलयहुङ्कारैः।
सूचितदानाः करिणो वध्यन्ते क्षिप्रमबलाभिः ॥२॥

पादाघातशिताङ्कुशघटनानिगडादिसंरोधम्।
विषयमुषितः करीन्द्रः किं न स्मरवञ्चितः सहते ॥३॥

दीर्घव्यसननिरुद्धो भ्रूभङ्गज्ञो विधेयतां यातः।
विषयविवशो मनुष्यः केलिशिखण्डीव नर्त्यते स्त्रीभिः ॥४॥

रक्ताकर्षणसक्ता मायाभिर्मोहतिमिररजनीषु।
नार्यः पिशाचिका इव हरन्ति हृदयानि मुग्धानाम् ॥५॥

रागिमृगवागुराणां हृदयद्विपबन्धशृङ्खलौधानाम्।
व्यसननववल्लरीणां स्त्रीणां न हि मुच्यते वशगः ॥६॥

संसारचित्रमायां शम्बरमायां विचित्तिमायां च।
यो जानाति जितात्मा सोऽपि न जानाति योषितां मायाम् ॥७॥

कुसुमसुकुमारदेहा वज्रशिलाकठिनहृदयसद्भावाः।
जनयन्ति कस्य नान्तर्विचित्रचरिताः स्त्रियो मोहम् ॥८॥

अनुरक्तजनविरक्ता नम्रोत्सिक्ता विरक्तरागिण्यः।
वञ्चकवचनासक्ता नार्यः सद्भावशङ्किन्यः ॥९॥

जातः स एव लोके बहुजनदृष्टा विलासकुटिलाङ्गी।
धैर्यध्वंसपताका यस्य न पत्नी प्रभुर्गेहे॥१०॥

विजितस्य मदविकारैः स्त्रीभिर्मूकस्य नष्टसंज्ञस्य।
गृहधूलिपटलमखिलं वदने निक्षिप्यते भर्तुः॥११॥

कृतकापरिस्फुटक्षरकामकलाभिः स्वभावमुग्धेव।
तिलकाय चन्द्रबिम्बं मुग्धपतिं याचते प्रौढा॥१२॥

स्वैरविहारगतागतखिन्नायास्तीर्थदर्शनव्याजैः।
भर्ता विलासविजितश्चरणौ मृद्नाति चपलायाः॥१३॥

नयनविकारैरन्यं वचनैरन्यं विचेष्टितैरन्यम्।
रमयति सुरतेनान्यं स्त्री बहुरूपा स्वभावेन॥१४॥

निजपतिचपलकुरङ्गी परतरुभृङ्गी स्वभावमातङ्गी।
मिथ्याविभ्रमभृङ्गी कुटिलभुजङ्गी निजा कस्य॥१५॥

बहुविधतरुणनिरर्गलसम्भोगसुखार्थभोगिनी वेश्या।
धन्येति वदन्ति सदा सोच्छ्वासा निर्जने नार्यः॥१६॥

चपला तिष्ठति हर्म्ये गायति रथ्यावलोकिनी स्वैरम्।
धावत्यकारणं वा हसति स्फटिकाश्ममालेव॥१७॥

पशुरिव वक्तुं कर्तुं किञ्चिदयं मम पतिर्न जानाति।
उक्त्वेति गृहे स्वजनं पुरुषव्यापारमङ्गना कुरुते॥१८॥

प्रत्युत्थानं कुरुते व्यवहारगतागतैः स्वयं याति।
उच्चैर्वदति च गेहे गृहिणी जीवन्मृतस्यैव॥१९॥

ईर्ष्यालुवृद्धभार्या सेवकपत्नी नियोगिभार्या वा।
कारुकुशीलवनारी लुब्धवधूः सार्थवाहवनिता वा॥२०॥

गोष्ठीविहरणशीला तरुणजने वत्सला प्रकृत्यैव।
परगुणगणने सक्ता निजपतिदोषाभिधायिनी सततम्॥२१॥

अल्पधना बहुभोगा रूपवती विकृतरूपभार्या वा।
मुग्धवधूः सकलकलामानवती नीचसङ्गमोद्विग्ना॥२२॥

द्यूतमधुपानसक्ता दीर्घकथागीतरागिणी कुशला।
बहुपुंश्चलीवयस्या शूरजने प्रकृतिपक्षपातैव॥२३॥

त्यक्तगृहव्यापारा बहुविधवेषा निरर्गलाभ्यासा।
प्रत्युत्तरसप्रतिभा सत्यविहीना स्वभावनिर्लज्जा॥२४॥

कुशलानामयवार्ताप्रश्नपरा प्रीतिपेशलालापा।
विजने विविधक्रीडाडम्बरशौण्डा प्रकाशसावित्री॥२५॥

क्रतुतीर्थसुरनिकेतनगणकभिषग्बन्धुगेहगमनपरा।
भोजनपानबहुव्ययत्रोत्सवकारिणी स्वतन्त्रेव॥२६॥

भिक्षुकतापसभक्ता स्वजनविरक्ता मनोरमासक्ता।
दर्शनदीक्षारक्ता दयितविरक्ता समाधिसंयुक्ता॥२७॥

..........................................
गोष्ठीरञ्जनमित्रा विज्ञेया नष्टचारित्रा॥२८॥

सततानुरक्तदोषा मोहितजनता बहुग्रहाश्चपलाः।
सन्ध्याः स्त्रियः पिशाच्यो रक्तच्छायाहराः क्रूराः॥२९॥

कस्य न वाहनयोग्या मुग्धधियस्तुच्छसाधने लग्नाः।
प्रीततया प्रशमरुचश्चपलासु स्त्रीषु येऽदान्ताः॥३०॥

शृङ्गारशौर्यकत्थनमसमञ्जसदानवर्णना विविधाः।
एतावदेव तासाममन्त्रयन्त्रं वशीकरणम्॥३१॥

कलिकालतिमिररजनीरजनिचरीणां सहास्रमायानाम्।
स्त्रीणां नृशंसचरितैः कस्य न सञ्जायते कम्पः॥३२॥

निर्जितधनपतिविभवो बभूव भुवि विश्रुतो वणिङ्नाथः।
धनदत्तो नाम पुरा रत्नारामाश्रयः पयोधिरिव॥३३॥

तस्याभवद् विभूतिर्मूर्तेव मनोभुवः सुललिताङ्गी।
तनया नयनविलासैर्विजिताशा वसुमती नाम॥३४॥

प्रददौ स तामपुत्रः पुत्रपदे विनिहितां प्रियां पुत्रीम्।
वणिजे विभवकुलोदयतुल्याय समुद्रदत्ताय॥३५॥

रममाणः स तया सह हरिणाक्ष्या श्वशुरमन्दिरे सुचिरम्।
प्रययौ कदाचिदग्रे द्वीपायातस्य सार्थस्य॥३६॥

पत्यौ याते तरुणी जनकगृहे हर्म्यशिखरमारूढा।
विललास विलासमयी केलिविलोला सखीभिः सा॥३७॥

सौधे मन्मथरूपं पृथुनयना पथि ददर्श पुरुषं सा।
यं दृष्ट्वैव गतास्याः क्वापि धृतिः कुमतिकुपितेव॥३८॥

सा तेन चपलनयना सहसा मुषितेव हारितविचारा।
अभवदशक्ता नितरां संवरणे स्मरविकारस्य॥३९॥

शीलं पालय चपले मा पातय निम्नगेव कुलकूलम्।
इति तामवददिवोच्चैः कम्पाकुलमुखरमेखला सुचिरम्॥४०॥

सा कृत्वा विदिताकथां रहसि सखीमानिनाय तं तरुणम्।
चलितं हि कामिनीनां धर्तुं शक्नोति कश्चित्तम्॥४१॥

कामं कामविकासैः सुरतविलासैः सुनर्मपरिहासैः।
सहजप्रेमनिवासैर्मुमुदे सा स्वैरिणी तेन॥४२॥

अथ कृतनिजधनकृत्यस्त्वरितं दयिताविलोकनोत्कण्ठः।
अविशत् समुद्रदत्तः श्वशुरावासं महारम्भः॥४३॥

विपुलमहोत्सवलीलाव्यग्रजनैर्भोगसम्पदां निचयैः।
अतिवाह्य दिनं दयितासहितः शय्यागृहं स ययौ॥४४॥

विरचितवरतरशयने बद्धविताने मनोरमस्थाने।
जृम्भितसौरभधूपे सुरगृहरूपे प्रदीप्तमणिदीपे॥४५॥

तत्र स मधुमदविलुलितलोचनकमलां प्रियां समालिङ्ग्य।
मदगज इव नवनलिनीं भेजे रतिलालसः शय्याम्॥४६॥

सापि हृदयान्तरस्थितपरपुरुषध्यानबद्धलक्षैव।
तस्थौ निमीलिताक्षी ध्यानपरा योगिनीव चिरम्॥४७॥

आलिङ्गनपरिचुम्बननीविविमोक्षेषु बहुतरोच्छ्वासा।
पत्यौ सङ्कुचिताङ्गी सस्मार तमेव शीलहरम्॥४८॥

प्रणयकुपितेति मत्वा मुग्धपतिस्तां समुद्रदत्तोऽपि।
प्रणिपत्य चाटुकारैः किमपि ययाचे प्रसादाय॥४९॥

परपुरुषरागिणीनां विमुखीनां प्रणयकामवामानाम्।
पुरुषपशवो विमूढा रज्यन्ते योषितामधिकम्॥५०॥

किं क्रियते कामोऽयं परगतकामः स्वतन्त्रकामश्च।
धनशतरक्तायामपि सन्ध्यायां भास्करो रागी॥५१॥

गूढोपवननिकुञ्जे न्यस्तं सा वल्लभं ससङ्केतम्।
सञ्चिन्त्य चिरं स्वपतिं विषमिव सम्मूर्छिता मेने॥५२॥

निद्रामुद्रितनयने प्रणयश्रान्ते समुद्रदत्ते सा।
उत्थाय रचितवेषा शनकैर्गमनोन्मुखी तस्थौ॥५३॥

चौरः क्षणे च तस्मिन् मधुमत्तजनं प्रविश्य तद्भवनम्।
गमनोत्सुकामपश्यन् मुखराभरणामलक्ष्यस्ताम्॥५४॥

अत्रान्तरे शशाङ्कः शनकैः सुरराजवल्लभां ककुभम्।
चकित इवाशु चकम्पे मीलिततारां समालिङ्ग्य॥५५॥

सङ्कोचिकमलायाः कुमुदविजृम्भाविराजमानायाः।
प्रससार तुहिनकिरणो यामिन्याः कपटहास इव॥५६॥

रविपरितापश्रान्तां वीक्ष्य दिवं प्रसरदिन्दुसानन्दाम्।
जहसुरिव कुमुदवृन्दैरलिकुलहुङ्कारनिर्भरा वाप्यः॥५७॥

जग्राह रजनिरमणी शशिकरहततिमिरकञ्चुकावरणा।
लज्जान्वितेव पुरतः कुमुदामोदाकुलालिपटलपटम्॥५८॥

सुप्तजनेऽथ निशार्धे चन्द्रालोके च विपुलतां याते।
तमसीव निर्विशङ्का सा शनकैरुपवनं प्रययौ॥५९॥

अथ सा विवेश विवशा विषमशरप्लोषिता निजोपवनम्।
छन्नं भूषणलोभादनुयाता विस्मितेन चौरेण ॥६०॥

तत्र ददर्श विभूषितमुज्ज्वलललितांशुकं लसत्कुसुमम्।
शङ्काजनकं विपिने पक्षिभिरुपलक्षितं दयितम्॥६१॥

हृदयदयितावियोगज्वलनज्वालावलीतप्तम्।
दिङ्मुखविलसितरुचिना चन्द्रेण करानलैर्दग्धम्॥६२॥

चिरसङ्केतस्थित्या मुक्ताशं प्रियतमापुनर्मिलने।
वृक्षालम्बितवल्लीवलयालम्बेन विगलितप्राणम्॥६३॥

तं दृष्ट्वैव विलीनां विलपन्ती व्यसनशोकसन्त्रासैः।
निपपात वल्लरीव क्वणदसिवलयाकुला तन्वी ॥६४॥

संम्मोहमीलिताक्षी स्थित्वा सुचिरं महीं समालिङ्ग्य।
शनकैरवाप्तजीवा विललाप लघुस्वरैः स्वैरम्॥६५॥

हा हा नयनानन्द क्व नु ते विशदेन्दुसुन्दरं वदनम्।
द्रक्ष्यामि मन्दपुण्या किमिदं क्वाहं क्व मे कान्तः ॥६६॥

इति तरुणकरुणमबला विलप्य पाशं विमुच्य यत्नेन।
अङ्के धृत्वास्य मुखं चुचुम्ब जीवं क्षिपन्तीव ॥६७॥

सा तस्य वदनकमलं निजवदने मोहिता कृत्वा।
ताम्बूलगर्भकरोत् प्रकटितसाकाररागेव ॥६८॥

अथ तस्याः कुसुमोत्करमृगमदधूपादिसौरभाहूतः।
आविश्य शवशरीरं नासां चिच्छेद वेतालः ॥६९॥

सा प्राप्य चापलोचितमनयफलं छिन्ननासिका गत्वा।
भवनं प्रविश्य भर्तुस्तारं हा हेति चुक्रोश॥७०॥

प्रतिबुद्धे सकलजने नादत्रस्ते समुद्रदत्ते च।
सा नासिका समेयं भर्त्रा छिन्नेति चक्रन्द॥७१॥

श्वशुरादिबन्धुवर्गैः पृष्टः कुपितैः समुद्रदत्तोऽपि।
विक्रीतः परदेशे मूक इवोचे न किञ्चिदपि॥७२॥

अथ चास्य सुप्रभाते बन्धुभिरावेदिते नृपसभायाम्।
तत्राभून्नृपकोपो बहुधनदण्डः समुद्रदत्तस्य॥७३॥

चौरोऽपि निखिलवृत्तं प्रत्यक्षमवेक्ष्य विस्मयाविष्टः।
आवेद्य भूपपुरतः प्राप्य च वलयादिसत्कारम्॥७४॥

उद्याने शववदने तस्यास्तां नासिकां च सन्दर्श्य।
निष्कारणसुहृदुचितां शुद्धिं विदधे समुद्रदत्तस्य॥७५॥

इत्येताः कुटिलतराः क्रूराचारा गतत्रपाश्चपलाः।
यो नाम वेत्ति रामाः स स्त्रीभिर्नैव वञ्च्यते मतिमान्॥७६॥

**इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे**
**कामवर्णनं नाम तृतीयः सर्गः॥**

* * * * *

## चतुर्थः सर्गः - वेश्यावृत्तम्।

तत्रापि वेशयोषाः कुटिलतराः कूटरागहृतलोकाः।
कपटचरितेन यासां वैश्रवणः श्रमणतामेति ॥१॥

हारिण्यश्चटुलतरा बहुलतरङ्गाश्च निम्नगाभिन्यः।
नद्य इव जलधिमध्ये वेश्याहृदये कलाश्चतुः षष्टिः ॥२॥

वेशकला नृत्यकला गीतकला वक्रवीक्षणकला च।
कामपरिज्ञानकला ग्रहणकला मित्रवञ्चनकला च ॥३॥

पानकला केलिकला सुरतकलालिङ्गनान्तरकला च।
चुम्बनकला परकला निर्लज्जावेगसम्भ्रमकला च ॥४॥

ईर्ष्याकलिकेलिकला रुदितकला मानसङ्क्षयकला च।
स्वेदभ्रमकम्पकला पुनरेकान्तप्रसाधनकला च ॥५॥

नेत्रनिमीलननिः सहनिस्पन्दकला मृतोपमकला च।
विरहासहरागकला कोपप्रतिषेधनिश्चयकला च ॥६॥

निजजननीकलहकला सद्गृहगमनोत्सवेक्षणकला च।
हरणकला जातिकला केलिकला चौरपार्थिवकला च ॥७॥

गौरवशैथिल्यकला निष्कारणदोषभाषणकला च।
शूलकलाभ्यङ्गकला निद्राक्षिरजस्वलाम्बरकला च ॥८॥

रूक्षकला तीक्ष्णकला गलहस्तगृहार्गलार्पणकला च।
सन्त्यक्तकामुकाहृतिदर्शनयात्रास्तुतिकला च ॥९॥

तीर्थोपवनसुरालयविहरणहेलाकला गृहकला च।
वश्यौषघमन्त्रकला वृक्षकला केशरञ्जनकला च॥१०॥

भिक्षुकतापसबहुविधपुण्यकला द्वीपदर्शनकला च।
खिन्ना कलात्रिषष्ट्या पर्यन्ते कुट्टनीकला वेश्या॥११॥

अज्ञातनामवर्णेष्वात्मापि ययार्प्यते धनांशेन।
तस्या अपि सद्भावं मृगयन्ते मोघसङ्कल्पाः॥१२॥

निखिलजनवञ्चनार्जितमलिनधनं रागदग्धहृदयानाम्।
खादति गुणगणभग्नो नग्नो हीनोऽथवा कश्चित्॥१३॥

नीचस्तुरगारोहो हस्तिपकः खलतरोऽथवा शिल्पी।
वञ्चितसकलजनानां तासामपि वल्लभो भवति॥१४॥

राजा विक्रमसिंहो बलवद्भिर्भूमिपैः पुरा विजितः।
मानी ययौ विदर्भान् गुणयशसा मन्त्रिणा सहितः॥१५॥

तत्र स वेश्याभवनं प्रविश्य भुवि विश्रुतां विलासवतीम्।
भेजे गणिकां बहुधनभोग्यामप्यल्पविभवोऽपि॥१६॥

तं राजलक्षणोचितभाजानुभुजं विलोक्य पृथुसत्त्वम्।
विविधमणिकनककोषं चक्रे सा तद्व्ययाधीनम्॥१७॥

सहजमनुरागामद्भुतमौचित्यं वीक्ष्यं भूपतिस्तस्याः।
विस्मयविवशः प्रेम्णा जगाद विजने महामात्यम्॥१८॥

चित्रमियं बहु वित्तं क्षपयति वेश्यापि मत्कृते तृणवत्।
प्रीतिपदवीविसृष्टो वेश्यानां धननिबन्धनो रागः॥१९॥

मिथ्या धनलवलोभादनुरागं दर्शयन्ति बन्धक्यः।
तदपि धनं विसृजति या कस्तस्याः प्रेम्णि सन्देहः ॥२०॥

इति वचनं भूमिपतेः श्रुत्वा मन्त्री विहस्य सासूयः।
तमुवाच कस्य राजन् वेश्याचरितेऽस्ति विश्वासः ॥२१॥

एताः सत्यविहीनां धनलवलीनाः सुखक्षणाधीनाः।
वेश्या विशन्ति हृदयं मुखमधुरा निर्विचाराणाम् ॥२२॥

प्रथमसमागसुखदा मध्ये व्यसनप्रवासकारिण्यः।
पर्यन्ते दुःखफलाः पुंसामाशाश्च वेश्याश्च ॥२३॥

अद्यापि हरिहरादिभिरमरैरपि तत्त्वतो न विज्ञाताः।
भ्रमविभ्रमबहुमोहा वेश्याः संसारमायाश्च ॥२४॥

इति सचिववचो नृपतिः श्रुत्वा कृत्वा च संविदं तेन।
मिथ्यामृतमात्मानं चक्रे वेश्यापरीक्षायै ॥२५॥

तस्मिन् कुणपशरीरे विन्यस्ते मन्त्रिणा चितावह्नौ।
सहसैव विलासवती वह्निभुवं भूषिता प्रययौ ॥२६॥

तां प्रबलज्वलितोज्ज्वलवह्निज्वालानिपातसावेगाम्।
दोर्भ्यामालिङ्ग्य नृपो जीवामीत्यभ्यधान् मुदितः ॥२७॥

तत्तस्याः प्रेम दृढं सत्यं च विचार्य सम्भृतस्नेहः।
राजा निनिन्द मन्त्रिणमसकृद् वेश्यागुणाभिमुखः ॥२८॥

अथ वेश्याधनसञ्चयमात्माधीनं महीपतिर्विपुलम्।
आदाय गजतुरंगमभटविकटामाददे सेनाम् ॥२९॥

सम्भृतविपुलवलौघैर्जित्वा वसुधाधिपान् स भूपालः।
निजमाससाद मण्डलमिन्दुरिवानन्दकृत् पूर्णः॥३०॥

सा चान्तः पुरकान्तामूर्ध्नि कृता भूभुजा विलासवती।
शुशुभे श्रीरिव चामरपवनाकुलितालका तन्वी॥३१॥

साथ कदाचिन्नरपतिमेकान्ते विरचिताञ्जलिः प्रणता।
ऊचे नाथ मया त्वं कल्पतरुः सेवितश्चिरं दास्या॥३२॥

यदि नाम कुत्रचिदहं याता ते हेतुतां विभो लक्ष्म्याः।
तन्मम सफलामाशामर्हसि कर्तुं प्रसादेन॥३३॥

पुण्यफलप्राप्यानां हृतपररजसां स्वभावविमलानाम्।
तीर्थानामिव महतां न हि नाम समागमो विफलः॥३४॥

अभवन्मम कोऽपि युवा दयितो धनजीविताधिकः प्रणयी।
बद्धः स विदर्भपुरे दैववशाच्चोररूपेण॥३५॥

तन्मुक्तये मया त्वं शक्ततरः सेवितो महीनाथः।
अधुना क्रियतामुचितं सत्त्वस्य कुलस्य शौर्यस्य॥३६॥

इति वञ्चनामवाप्तो विस्मित इव तद्वचो नृपः श्रुत्वा।
सुचिरं विलोक्य वसुधां सस्मारामात्यवचनं सः॥३७॥

अथ तां तथैव राजाश्वास्य विदर्भेषु भूभुजं जित्वा।
अन्धनमुक्तेनास्याश्चोरेण समागमं चक्रे॥३८॥

इत्येवं बहुहृदया बहुजिह्वा बहुकराश्च बहुमायाः।
तत्वेन सत्यरहिताः को जानाति स्फुटं वेश्याः॥३९॥

वर्णनदयितः कश्चिद् धनदयितो दासकर्मदयितोऽन्यः।
रक्षादयितश्चान्यो वेश्यानां नर्मदयितोऽन्यः ॥४०॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे
वेश्यावृत्तं नाम चतुर्थः सर्गः ॥

* * * * *

## पञ्चमः सर्गः - कायस्थचरितम्

मोहो नाम जनानां सर्वहरो हरति बुद्धिमेवादौ।
गूढतरः स च निवसति कायस्थानां मुखे च लेखे च॥१॥

चन्द्रकला इव पूर्णा निष्पन्ना सस्यसम्पत्तिः।
ग्रस्ता क्षणेव दृष्टा निःशेषा दिविरराहुकलयैव॥२॥

ज्ञाताः संसारकला योगिभिरपयातसम्मोहैः।
न ज्ञाता दिविरकला केनापि बहुप्रयत्नेन॥३॥

कूटकलाशतशिबिरैर्जनधनविवरैः क्षयक्षपातिमिरैः।
दिविरैरेव समस्ता ग्रस्ता जनता न कालेन॥४॥

एते हि कालपुरुषाः पृथुदण्डनिपातहतलोकाः।
गणनागणनपिशाचाश्चरन्ति भूर्जध्वजा लोके॥५॥

कस्तेषां विश्वासं यममहिषविषाणकोटिकुटिलानाम्।
व्रजति न यस्य विषक्तः कण्ठे पाशः कृतान्तस्य॥६॥

कलमाग्रनिर्गतमषीबिन्दुव्याजेन साञ्जनाश्रुकणैः।
कायस्थलुण्ठ्यमाना रोदिति खिन्नेव राज्यश्रीः॥७॥

अङ्कन्यासैर्विषमैर्मायावनितालकावलीकुटिलैः।
को नाम जगति चरितैः कायस्थैर्मोहितो न जनः॥८॥

मायाप्रपञ्चसञ्चयवञ्चितविश्वैर्विनाशितः सततम्।
विषयग्रामग्रासैः कायस्थैरिन्द्रियैर्लोकः॥९॥

कुटिला लिपिविन्यासा दृश्यन्ते कालपाशसङ्काशाः।
कायस्थभूर्जशिखरे मण्डललीना इव व्यालाः ॥१०॥

एते हि चित्रगुप्ताश्चित्रधियो गुप्तकारिणो दिविराः।
रेखामात्रविनाशात् सहितं कुर्वन्ति ये रहितम् ॥११॥

लोके कलाः प्रसिद्धाः स्वल्पतराः सञ्चरन्ति दिविराणाम्।
गूढकलाः किल तेषां जानाति कलिः कृतान्तो वा ॥१२॥

वक्रलिपिन्यासकला सकलाङ्कनिमीलनकला च।
सततप्रवेशसङ्ग्रहलोककला व्ययविवर्धनकला च ॥१३॥

ग्राह्यपरिच्छेदकला देयधनादानकारणकला च।
शेषस्य विवेककला सङ्कलितराशिसर्वभक्षणकला च ॥१४॥

उत्पन्नगोपनकला नष्टविशीर्णप्रदर्शनकला च।
क्रयमाणैर्भरणकला योजनचर्यादिभिः क्षयकला च ॥१५॥

निःशेषभूर्जदाहादागमनाशश्च पर्यन्ते।
येन विना धनहारी भूर्जग्रहणे निरालोकः ॥१६॥

सकलङ्कस्य क्षयिणो नवनवरूपस्य वृद्धिभाजश्च।
दिविरस्य कलाः कुटिलाः षोडश दोषाकरस्यैताः ॥१७॥

कूटस्थाः कायस्थाः सर्वनकारेण सिद्धमन्त्रेण।
गुरव इव विदितमाया वृत्तिच्छेदं क्षणेन कुर्वन्ति ॥१८॥

हारितधनपशुवसनश्चौर्यभयाद् बन्धुभिः परित्यक्तः।
बभ्राम महीमखिलां तीव्रव्यसनः पुरा कितवः ॥१९॥

स कदाचिदाप पुण्यैरुज्जयिनीं तत्र मज्जनं कृत्वा।
विचरन् विजने पुरहरमन्दिरमवलोकयामास॥२०॥

शून्यायतने गत्वा वरदं देवं सदा महाकालम्।
उपलेपनकुसुमफलैर्निर्व्यापारः सिषेवे सः॥२१॥

स्तोत्रजपगीतदीपैर्विपुलध्यानैर्निशासु निर्निद्रः।
तस्थौ तत्र च सुचिरं दुःसहदौर्गत्यनाशाय॥२२॥

तस्य कदाचिद् भक्त्या शुभशतकृतया प्रसादितः सहसा।
भवभयहारी भगवान् भूतपतिः सम्बभाषे तम्॥२३॥

पुत्र गृहाणेत्युक्ते देवेन कपालमालिना शिखरे।
एकं कपालमसकृच्चक्रे सञ्ज्ञां पुराराते॥२४॥

अर्धोक्ते स्थगिततरः सम्पीडनसञ्ज्ञया कपालस्य।
तूष्णीं बभूव रुद्रो दारिद्र्यात् कितवपुण्यानाम्॥२५॥

स्नातुं याते तस्मिन् विजने देवः कपालमवदत् तम्।
दन्तांशुपटलपालीं गङ्गामिव दर्शयन्नग्रे॥२६॥

अस्य कितवस्य साधोर्भक्तस्य चिरस्थितस्य वरदाने।
कस्मात् त्वया ममैषा विहिता सम्पीडनैः सञ्ज्ञा॥२७॥

इति भगवता कपशालं पृष्टं प्रोवाच सस्मितं शनकैः।
विषमनयनोष्मविगलन्मौलीन्दुसुधारसैर्जीवत्॥२८॥

शृणु भगवन् येन मया विज्ञप्तोऽसि स्वभावसरलात्मन्।
सुलभोऽपि बोध्यते वा निष्कारणमीश्वरः केन॥२९॥

एष कितवोऽतिदुःखी दारिद्र्याद् विरतसकलनिजकृत्यः।
प्रासादेऽस्मिन् रचयति लेपनबलिकुसुमधूपार्घम्॥३०॥

दुःखी भवति तपस्वी धनरहितः सादरो भवति।
भ्रष्टाधिकारविभवः सर्वप्रणतः प्रियंवदो भवति॥३१॥

अर्चयति देवविप्रान् नमति गुरून् वेत्ति निर्धनो मित्रम्।
कठिनोऽपि लोहपिण्डस्तप्तः कर्मण्यतामेति॥३२॥

व्यसनपरितप्तहृदयस्तिष्ठति सर्वः सदाचारे।
विभवमदमोहितानां कर्मस्मरणे कथा कैव॥३३॥

ऐश्वर्यार्थी भगवन्नाशापाशेन लम्बमानोऽसौ।
कुरुते परां सपर्यां प्राप्तार्थो दृश्यते न पुनः॥३४॥

स्वार्थार्थिनः प्रयत्ताः प्राप्तार्थाः सेवकाः सदा विफलाः।
न हि नाम जगति कश्चित् कृतकार्यः सेवको भवति॥३५॥

देव प्रासादेऽस्मिन् फलजलकुसुमादिभोगसामग्रीम्।
पूर्णे जाते कितवे विजने नान्ये करिष्यन्ति॥३६॥

तस्मात् पुण्यायतनं कितवं संरक्ष सेवकं सततम्।
वरदानमस्य भगवन् निर्वासनमात्मपूजाया॥३७॥

श्रुत्वैतद् वक्रतरं वचनं पृथुविस्मयस्मेरः।
तं पप्रच्छ पिनाकी कस्त्वं तत्त्वेन मे कथय॥३८॥

इति पृष्टं पुनरूचे सपदि कपालं विचिन्त्य सद्भावम्।
मगधानामहमभवं कायस्थकुले स्वकर्मणो विमुखः॥३९॥

स्नानजपव्रतनिरतस्तीर्थरतो विदितसकलशास्त्रार्थः।
त्यक्त्वा भागीरथ्यां शरीरकं त्वत्पदं प्राप्तः ॥४०॥ (युग्मम्)

आकर्ण्यैवं भगवानूचे कायस्थ एव सत्यं त्वम्।
चित्रं कौटिल्यकलां न त्यजसि कपालशेषोऽपि ॥४१॥

इत्युक्त्वा स्मितकिरणैः कुर्वन्नाशालताः कुसुमशुभ्राः।
स्नात्वागताय तस्मै कितवाय वरं ददौ वरदः ॥४२॥

कृत्वा तत् कितवहितं पश्यत एवाशु तस्य शशिमौलिः।
निष्कासितवांस्तच्छिर उत्तमतममालिकापङ्क्तेः ॥४३॥

इत्येवं कुटिलकलां सहजां मलिनां जनक्षये निरताम्।
यमदंष्ट्रामिव मुञ्चति कायस्थो नास्थिशेषोऽपि ॥४४॥

सुस्थः को नाम जनः सतताशुचिभावदूषितकलानाम्।
दोषकृतां शकृतामिव कायस्थानामवष्टम्भैः ॥४५॥

असुररचितप्रयत्नाद् विज्ञाता दिविरवञ्चना येन।
संरक्षिता मतिमता रत्नवती वसुमती तेन ॥४६॥

**इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे**
**कायस्थचरितं नाम पञ्चमः सर्गः ॥**

* * * * *

## षष्ठः सर्गः - मदवर्णनम्

एकः सकलजनानां हृदयेषु कृतास्पदो मदः शत्रुः।
येनाविष्टशरीरो न श्रृणोति न पश्यति स्तब्धः ॥१॥

विजितात्मनां जनानामभवद् यः कृतयुगे दमो नाम।
सोऽयं विपरीततया मदः स्थितः कलियुगे पुंसाम् ॥२॥

मौनं वदननिकूणनमूर्ध्वेक्षणमन्यलक्ष्यता चाक्ष्णोः।
गात्रविलेपनवेष्टनमग्र्यं रूपं मदस्यैतत् ॥३॥

शौर्यमदो रूपमदः श्रृङ्गारमदः कुलोन्नतिमदश्च।
विभवमदमूलजाता मदवृक्षा देहिनामेते ॥४॥

शूलारूढसमानो वातस्तब्धोपमोऽथ भूतसमः।
बहुभोगे विभवमदः प्रथमज्वरसन्निपातसमः ॥५॥

शौर्यमदो भुजदर्शी रूपमदो दर्पणादिदर्शी च।
काममदः स्त्रीदर्शी विभवमदश्चैव जात्यन्धः ॥६॥

अन्तः सुखरसमूर्च्छामीलितनयनः समाहितध्यानः।
धनमद एष नराणामात्मारामोपमः कोऽपि ॥७॥

उन्मादयत्यविषये विविधविकारः समस्तगुणहीनः।
मूढमदस्त्वन्योऽयं जयति विचित्रो निरालम्बः ॥८॥

स्तम्भान् न पश्यति भुवं खेचरदर्शी सदा तपस्विमदः।
भक्तिमदोऽद्भुतकारी विस्मृतदेहश्चलः प्रकृत्यैव ॥९॥

आकोपरक्तनयनः परवाङ्मात्रासहः प्रलापी च।
विषमः श्रुतमदनामा धातुक्षोभो नृणां मूर्तः ॥१०॥

सततभ्रुकुटिकरालः परुषाक्रोशी हठाभिघातपरः।
अधिकारमदः पुंसां सर्वाशी राक्षसः क्रूरः ॥११॥

पूर्वपुरुषप्रतापप्रथितकथाविस्मृतान्यनिजकृत्यः।
कुलमद एकः पुंसां सुदीर्घदर्शी महाज्ञानः ॥१२॥

वर्जितसकलस्पर्शः सर्वाशुचिभावनानिरालम्बः।
आकाशेऽपि सलेपः शौचमदो नित्यसङ्कोचः ॥१३॥

सावधयः सर्वमदा निजनिजमूलक्षये विनश्यन्ति।
वरमद एकः कुटिलो विजृम्भते निरवधिर्भोगी ॥१४॥

पानमदस्तु जघन्यः सर्वजुगुप्सास्पदं महामोहः।
क्षणिकोऽपि हरति सहसा वर्षसहस्रार्जितं शीलम् ॥१५॥

विद्यावति विप्रजने गवि हस्तिनि कुक्कुरे श्वपाके च।
मद्यमदः समदर्शी स्वपरविभागं न जानाति ॥१६॥

विगलितसदसद्भेदः समकाञ्चनलोष्टपाषाणः।
प्राप्तो योगिदशामपि नरके क्षीवः स्वयं पतति ॥१७॥

रोदिति विहसति गायति विलपत्युच्चैरुपैति सम्मोहम्।
भजते विविधविकारान् संसारादर्शमण्डलः क्षीबः ॥१८॥

परपतिचुम्बनसक्तां पश्यति दयितां न याति संतापम्।
क्षीबोऽतिगाढरागं पीत्वा मधु वीतरागः किम्॥ १९॥

विसृजति वसनं दूरे व्यसनं गृह्णाति दुःसहं क्षीबः।
अञ्जलिपात्रे पिबति च निजमूत्रविजृम्भितं चन्द्रम्॥२०॥

च्यवनः पुरा महर्षिर्यौवनमश्विप्रयोगतो लब्ध्वा।
यज्ञे स्वयं कृतज्ञस्तौ चक्रे सोमपानार्हौ॥२१॥

क्रुद्धस्तमेत्य शक्र प्रोवाच मुने न जानासि।
भिषजावपङ्क्तियोग्यौ सोमार्हावश्विनौ यज्ञे॥२२॥

इति बहुशः सुरपतिना प्रतिषिद्धोऽपि स्वतेजसा च्यवनः।
न चचाल निश्चितात्मा निजकृत्यादश्विनोः प्रीत्या॥२३॥

तत्कोपोद्यतवज्रं जम्भारेरायतं भुजस्तम्भम्।
अस्तम्भयन् मुनीन्द्रः प्रभावसम्भावनापात्रम्॥२४॥

असृजच्च तद्वधाय प्रलम्बकालोपमं चतुर्दंष्ट्रम्।
योजनसहस्रविपुलं कृत्यारूपं महासुरं घोरम्॥२५॥

तेनाविष्टः सहसा भीतो वज्री तमाययौ शरणम्।
सोमोऽस्तु देवभिषजोरिति चोवाच प्रणष्टधृतिः॥२६॥

मुनिरपि करुणासिन्धुर्भीतं प्रणतं महेन्द्रमाश्वास्य।
मदमुत्ससर्ज घोरं द्यूतस्त्रीपानमृगयासु॥२७॥

सोऽयमसुरः प्रमाथी मुनिना क्रुद्धेन निर्मितो हृदये।
निवसति शरीरभाजां स्तम्भाकारो गुणैर्बद्धः॥२८॥

मौने श्रीमत्तानां निःस्पन्ददृशि प्रवृद्धविभवानाम्।
भ्रूभङ्गमुखविकारे धनिकानां भ्रूयुगे विटादीनाम्॥२९॥

जिह्वासु दूतविदुषां रूपवतां दशनवसनकेशेषु।
वैद्यानामोष्ठपुटे ग्रीवायां गुणिनियोगिगणकानाम्॥३०॥

स्कन्धतटे सुभटानां हृदये वणिजां करेषु शिल्पवताम्।
गलपत्राङ्गुलिभङ्गे छात्राणां स्तनतटेषु तरुणीनाम्॥३१॥

उदरे श्राद्धार्हाणां जङ्घासु च लेखहारपुरुषाणाम्।
गण्डेषु कुञ्जराणां बर्हे शिखिनां गतेषु हंसानाम्॥३२॥

इत्येवं मदनामा महाग्रहो बहुविकारदृढमोहः।
अङ्गे काष्ठीभूतो वसति सदा सर्वभूतानाम्॥३३॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे
महवर्णन नाम षष्ठः सर्गः॥

* * * * *

## सप्तमः सर्गः - गायनवर्णनम्

अर्थो नाम जनानां जीवितमखिलक्रियाकलापस्य।
तमपि हरन्त्यतिधूर्ताः श्लक्ष्णगला गायना लोके॥१॥

निःशेषं कमलाकरकोषं जग्ध्वापि कुमुदमास्वाद्य।
क्षीणा गायनभृङ्गा मातङ्गप्रणयतां यान्ति॥२॥

घटपटशकटस्कन्धा बहुडिम्भा मुक्तकेशककलापाः।
एते योनिपिशाचा भूपभुजो गायना लोके॥३॥

तमसि वराकश्चौरो हाहाकारेण याति सन्त्रस्तः।
गायनचौरः प्रकटं हाहाकृत्वैव हरति सर्वस्वम्॥४॥

पापाधधनिनिगमसाधाधामामासमासगाधामा।
कृत्वा स्वरपदपालीं गायनधूर्ताश्चरन्त्येते॥५॥

कुटिलावर्तभ्रान्तैर्वेषविकारैश्च मुखविकारैश्च।
गायति गायनसङ्घो मर्दलहस्तश्चिरं मौनी॥६॥

आमन्त्रणजयशब्दैः प्रतिपदहुङ्कारघर्घरारावैः।
स्वयमुक्तसाधुवादैरन्तरयति गायनो गीतम्॥७॥

जलपतिते सक्तुकणे मत्स्यैर्भुक्तेऽस्ति कापि धर्माप्तिः।
गायनदत्तासु परं कोटिष्वपि नास्ति फललेशः॥८॥

मुग्धधनानां विधिना रुद्धानामन्धकूपकोषेषु।
विहितो विवृतमहास्यो गायननामा प्रणालौघः॥९॥

नैतत् प्रकटितदशना गायनधूर्ताः सदैव गायन्ति।
एते गतानुगतिकान् हसन्ति धूर्ता गृहीतार्थान्॥१०॥

प्रातर्गायनधूर्ता भवन्ति धीराः सहारकेयूराः।
मध्याह्ने द्यूतजिता नग्ना भग्ना निराधाराः॥११॥

स्तुतिवागुरानिबद्धैर्वचनशरैः कपटकूटरचनाभिः।
गीतैर्गायनलुब्धा मुग्धमृगाणां हरन्ति सर्वस्वम्॥१२॥

नष्टस्वरपदगीतैः क्षणेन लक्षाणि गायनो लब्ध्वा।
दास्याः सुतेन दत्तं किमिति वदन् दुःखितो याति॥१३॥

वर्जितसाधुद्विजवरवृद्धायाः सकलशोककलितायाः।
शापोऽयमेव लक्ष्म्या गायनभोज्यैव यत् सततम्॥१४॥

देवः पुरा सुराणामधिनाथो नारदं चिरायातम्।
पप्रच्छ लोकवृत्तं महीतले भूमिपालानाम्॥१५॥

सोऽवददवनिपतीनां जयिनां बहुदानधर्मयज्ञानाम्।
चरता मया नृलोके पुरपतियोग्याः श्रियो दृष्टाः॥१६॥

ते तु त्वां स्पर्धन्ते विभवैर्वरुणं धनाधिनाथं च।
शतमखसंज्ञामसकृद् बहुतरयज्ञा हसन्त्येव॥१७॥

श्रुत्वा तन्मुनिवचनं जातद्वेषः शतक्रतुः कोपात्।
हर्तुं धनं पिशाचान् विससर्ज भुवं नरेन्द्राणाम्॥१८॥

ते गीतनाममन्त्राः सुरपतिदिष्टाः पिशाचसङ्घाताः।
हर्तुं सकलनृपाणां धनमखिलं भूतलं प्रययुः॥१९॥

मायादासः प्रथमं डम्बरदासश्च वज्रदासश्च।
झयदासलुण्ठदासौ खरहरदासः प्रसिद्धदासश्च ॥२०॥

वाडवदासश्चाष्टौ ते गत्वा मर्त्यलोकमतिभयदाः।
विवृतास्यघोरकुहरा गायनसृष्टिं ससर्जुरतिविकटाम् ॥२१॥

यैरेतैर्हृतविभवा दिशि दिशि हृतसकललोकसर्वस्वाः।
यज्ञादिषु भूपतयो जाताः शिथिलोद्यमाः सर्वे ॥२२॥

एतेऽहि कर्णविवरैः प्रविश्य गीतच्छलेन भूपानाम्।
सहसा हरन्ति हृदयं कर्णपिशाचा महाघोराः ॥२३॥

तस्मादेषां राष्ट्रे न ददाति विकारिणां प्रवेशं यः।
तस्य सकलार्थसम्पद्यज्ञवती भूमिराधीना ॥२४॥

नटनर्तकचक्रचराः कुशीलवाश्चारणा विटाश्चैव।
ऐश्वर्यशालिशलभाश्चरन्ति तेभ्यः श्रियं रक्षेत् ॥२५॥

गायनसङ्घस्यैक्यादुत्तिष्ठन्ति गीतनिःश्वनः सुमहान्।
अस्थाने दत्ताया लक्ष्म्या इव सम्भ्रमाक्रन्दः ॥२६॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे
गायनवर्णनं नाम सप्तमः सर्गः ॥

* * * * *

## अष्टमः सर्गः - सुवर्णकारोत्पत्तिः

तत्रापि हेमकारा हरणकलायोगिनः पृथुध्यानाः।
ये धाम्नि बहुललक्ष्म्याः शून्यत्वं दर्शयन्त्येव॥१॥

सारं सकलधनानां सम्पत्सु विभूषणं विपदि रक्षा।
एते हरन्ति पापाः सततं तेजः परं हेम॥२॥

सहसैव दूषयन्ति स्पर्शेन सुवर्णमुपहतच्छायम्।
नित्याशुचयः पापाश्चण्डाला हेमकाराश्च॥३॥

मसृणकषाश्मनि निकषो मन्दरुचिक्रमगता कला तेषाम्।
येषां परुषकषाश्मनि विक्रयकालेऽपि लाभकला॥४॥

सोपस्नेहः स्वेद्यः सिक्थकमुद्रोऽपि बालुकाप्रायः।
सोष्मा च युक्तिभेदात् तुलोपलानां कलाः पञ्च॥५॥

द्विपुटा स्फोटविपाका सुवर्णरसपायिनी सुताम्रकला।
सीसमलकाचचूर्णग्रहणपरा षट्कला मूषा॥६॥

वक्रमुखी विषमपुटा सुषिरतला न्यस्तपारदा मृद्वी।
पक्षकटा ग्रन्थिमती सिक्थकला बहुगुणा पुरोनम्रा॥७॥

वातभ्रान्ता तन्वी गुर्वी वा परुषवातधृतचूर्णा।
निर्जीवना सजीवा षोडश हेम्नस्तुलासु कलाः॥८॥

मन्दः सावेगो वा मध्यच्छिन्नः सशब्दफूत्कारः।
पाती शीकरकारी फूत्कारः षट्कलस्तेषाम्॥९॥

ज्वालावलयी धूमो विस्फोटी मन्दकः स्फुलिङ्गी च।
पूर्वधृतताम्रचूर्णस्तेषामपि षट्कलो वह्निः॥१०॥

प्रश्नः कथा विचित्रा कण्डूयनमंशुकान्तराकृष्टिः।
दिनवेलार्कनिरीक्षणमतिहासो मक्षिकाक्षेपः॥११॥

कौतुकदर्शनमसकृत् स्वजनकलिः सलिलपात्रभङ्गश्च।
बहिरपि गमनं बहुशो द्वादश चेष्टाकलास्तेषाम्॥१२॥

घटितस्योपरि पाकः कृत्रिमवर्णप्रकाशनोत्कर्षी।
तनुगोमयाग्निमध्ये लवणक्षारानुलेपेन॥१३॥

सामान्यलोहपात्राद् भूमिन्यस्तेऽपि कान्तलोहतले।
धावति वदनेन तुला रिक्तापि मुहुः सुपूर्णेव॥१४॥

प्रतिबद्धे जतुयोग्ये प्रक्षिप्तनिगूढकनककणम्।
तुलितं पूरणकाले सुखेन हर्तुं समायाति॥१५॥

उज्ज्वलनेऽपि च तेषां पातनमतिसुकरमश्मकाले च।
सदृशविचित्राभरणे परिवर्तनलाघवप्रसारश्च॥१६॥

पूर्णादाने घटने नेक्षा माषार्पणं प्रभायोगः।
कालाहरणविनाशः प्रतिपूरणयाचनं बहुश्लेषः॥१७॥

एकादश युक्तिकलास्तेषामेताः समासेन।
एकैव कला महती निशि गमनं सर्वमादाय॥१८॥

एता हेमकराणां विचारलभ्याः कलाश्चतुःषष्टिः।
अन्या गूढाश्च कलाः सहस्रनेत्रोऽपि नो वेत्ति॥१९॥

मेरुः स्थितोऽतिदूरे मनुष्यभूमिं चिरात् परित्यज्य।
भीतोऽवश्यं चौर्याद् घोराणां हेमकाराणाम्॥२०॥

कनकशिलशतसन्धिप्रसृतमहाविवरकोटिसङ्घातैः।
उत्कीर्णनिखिलशिखरः पुरा कृतो मूषकैर्मेरुः॥२१॥

तत्राखिलाखुसेनानिखातनखरावलेखनोत्खातैः।
शिथिलितमूलः सहसा बभूव मेरुः पुरा नियतम्॥२२॥

मूषकनखरोत्खातः सुमेरुरुच्चैस्तरां शुशुभे।
उद्धतसुवर्णधूलीपटलैः कपिला बभुः ककुभः॥२३॥

तस्मिञ्जर्जरशिखरे विवरोदरदलितकनककूटतटे।
कल्पान्तागमशङ्काभयमाविरभूदमर्त्यानाम्॥२४॥

आह च दिव्यदृशा तद् विलोक्य सर्वं सुरानथागस्त्यः।
एते ते ब्रह्मघ्ना निशाचरास्त्रिदशसङ्गरे निहताः॥२५॥

जाता मूषकरूपा मेरुनिपाते कृतारम्भाः।
वध्याः पुनरपि भवतामाश्रमभङ्गान् मुनीनां च॥२६॥

श्रुत्वैतन्मुनिवचनं धूमेन बिलावलीं समापूर्य।
शापेन पूर्वदग्धान् जग्धुस्त्रिदशा महामूषान्॥२७॥

एते त एव मूषाः सुवर्णकाराः क्षितौ पुनर्जाताः।
जन्माभ्यासादनिशं काञ्चनचूर्णं निकर्षन्ति॥२८॥

तस्मान्महीपतीनामसम्भवे गरदचोरदस्यूनाम्।
एकः सुवर्णकारो निग्राह्यः सर्वथा नित्यम्॥२९॥

**इति महाकवि श्री क्षेमेन्द्रविरचिते कलाविलासे**
**सुवर्णकारोत्पत्तिर्नामाष्टमः सर्गः॥**

* * * * *

## नवमः सर्गः - नानाधूर्तवर्णनम्

वञ्चकमाया महती महीतले जलधिमेखले निखिले।
नष्टधियां मत्स्यानां जालाली धीवरैर्विहिता ॥१॥

सर्वस्वमेव परमं प्राणा येषां कृते प्रयत्नोऽयम्।
वैद्या वेद्याः सततं येषां हस्ते स्थितास्तेऽपि ॥२॥

एते हि देहदाहाद् विरहा इव दुःसहा भिषज्ञः।
ग्रीष्मदिवसा इवोग्रा बहुतृष्णाः शोषयन्त्येव ॥३॥

विविधौषधपरिवर्तैर्योगैर्जिज्ञासया स्वविद्यायाः।
हत्वा नृणां सहस्रं पश्चाद् वैद्यो भवेत् सिद्धः ॥४॥

विन्यस्य राशिचक्रं ग्रहचिन्तां नाटयन् मुखविकारैः।
अनुवदति चिराद् गणको यत् किञ्चित् प्राश्निकेनोक्तम् ॥५॥

गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः।
विविधभुजङ्गक्रीडासक्तां गृहिणीं च जानाति ॥६॥

प्रथमं स्ववित्तमखिलं कनकार्थी भस्मसात् कृत्वा।
पश्चात् सधनान् रसिकान् विनाशयत्येष वर्णिकानिपुणः ॥७॥

शतवेधी सिद्धो मे सहस्रवेधी रसोऽपि निर्यातः।
इति वदति धातुवादी नग्नो मलिनः कृशो रूक्षः ॥८॥

ताम्रघटोपमशीर्षो धूर्तो हि रसायनी जराजीर्णः।
केशोत्पादनकथया खल्वाटानेव मुष्णाति ॥९॥

प्रल्हादनशुचितारकशम्बररमणीजनेऽपि बद्धाशः।
बिल्वादिभिरतिकामी हुत्वा धूमान्धतामेति॥१०॥

खेचर्यः सुखसाध्या यत्नाद् यदि लभ्यते नभः कुसुमम्।
उक्ताः प्रयोगविद्भिर्मशकास्थिषु सिद्धयो बहुधा॥११॥

कृष्णाश्वशकृद्वर्त्या पश्यति गगने सुरेन्द्रभवनानि।
मण्डूकवसालिप्तो भवति पुमान् वल्लभोऽप्सरसाम्॥१२॥

इत्युक्त्वा पुनराशां दिशि दिशि विलसन्ति धूर्तसङ्घाताः।
यैर्विविधसिद्धिलुब्धाः क्षिप्ताः शतशो नराः श्वभ्रे॥१३॥

वश्याकर्षणयोगी पथि पथि रक्षां ददाति नारीणाम्।
रतिकामतन्त्रमूलं मूलं मन्त्रं न जानाति॥१४॥

बहवो रथ्यागुरवो लघुदीक्षाः स्वल्पयोगमुत्पाद्य।
व्याधा इव वर्धन्ते मुग्धानां द्रविणदारहराः॥१५॥

हस्तस्था धनरेखा विपुलतरास्या पतिश्च चलचित्तः।
मृद्नाति कुलवधूनामित्युक्त्वा कमलकोमलं पाणिम्॥१६॥

बद्धेऽङ्गुष्ठे सलिले पश्यति विविधं जनभ्रमं कन्या।
न प्राप्यते च चोरो मोहोऽसाविन्द्रजालस्य॥१७॥

खादति पिबति च धूर्तः प्रलापकारी नृणां तलाघातैः।
चेटावेशं कृत्वा निर्मन्त्रक्षुद्रधूपेन॥१८॥

कक्षपुटे नागार्जुनलिखिता युक्तिर्विधीयतां धूपे।
यो हर्तुं मोहादिति धूर्तोऽग्नौ क्षिपति परवित्तम्॥१९॥

यक्षीपुत्राश्चोरा विज्ञेयाः कूटधूपकर्तारः।
येषां प्रत्यक्षफलं दारिद्र्यं राजभङ्गश्च ॥२०॥

बहुतरधनेन वणिजा पुत्री सा पुत्रवद् गृहीतैव।
मदधीनेति कथाभिः कन्यार्थं भुज्यते धूर्तैः ॥२१॥

चिन्त्यः स्वेङ्गितवादी मर्मज्ञो हृदयचौर एवासौ।
तिष्ठति परप्रयुक्तो मिथ्याबधिरोऽथवा मूकः ॥२२॥

भस्मस्मेरा वेश्या वृद्धाः श्रमणः सदैवता गणिकाः।
एताः कुलनारीणां चरन्ति धनशीलहारिण्यः ॥२३॥

विधवा तरुणी सधना वाञ्छति दिव्यं भवद्विधं रमणम्।
धूर्तो जडमित्युक्त्वा सर्वस्वं तस्य भक्षयति ॥२४॥

प्रत्यहवेतनयुक्ताः कर्मसु ये कारुशिल्पिनो धूर्ताः।
विलसन्ति कर्मविघ्नैर्विज्ञेयाः कालचौरास्ते ॥२५॥

अक्षव्याजैर्विविधैर्गणनाहस्तादिलाघवैर्निपुणाः।
धूर्ताश्चरन्ति गूढं प्रसिद्धकितवा विदेशेषु ॥२६॥

भोजनमात्रोत्पत्तिर्बहुव्ययो द्यूतमद्यवेश्याभिः।
विज्ञेयो गृहचौरो बन्धुजनो वेश्मदासो वा ॥२७॥

कृतकं शास्त्रमसत्यं साक्षाद् दृष्टश्च केन परलोकः।
इति वदति यः स शङ्क्यो निरङ्कुशो मत्तमातङ्गः ॥२८॥

बहुलाभलुब्धमनसां हरन्ति ये दुःसहेन लाभेन।
ऋणधनमधिकविदग्धा विज्ञेया लाभचोरास्ते ॥२९॥

अधिकरणाम्बुधिमध्ये ज्वलन्ति वडवाग्नयः सततभक्षाः।
जनधनघनमनसो ये भट्टाख्या न्यायचोरास्ते॥३०॥

विभवाम्भोरुहमधुपा दुःसहविपदनिलवेगविमुखा ये।
सुहृदस्ते सुखचौराश्चरन्ति लक्ष्मीलताहूताः॥३१॥

यद्यत् किञ्चिदपूर्वं परिचरितं कल्पनादसम्बद्धम्।
वर्णयति हर्षकारी बहुवचनः कर्णचौरोऽसौ॥३२॥

दोषेषु गुणस्तुतिभिः श्रद्धामुत्पाद्य चतुरवचना ये।
कुर्वन्त्यभिनवसृष्टिं स्थितिचौरास्ते निराचाराः॥३३॥

आत्मगुणख्यातिपराः परगुणमाच्छाद्य विपुलयत्नेन।
प्रभवन्ति परमधूर्ता गुणचौरास्ते विमूढहृदयेषु॥३४॥

वल्लभतामुपयाताः परवाल्लभ्यं विचित्रपैशुन्यैः।
ये नाशयन्ति धूर्ता मात्सर्याद् वृत्तिचौरास्ते॥३५॥

शमदमभक्तिविहीनस्तीव्रव्रतदुर्ग्रहग्रस्तः।
अभिभवति प्रतिपत्त्या साधुजनं कीर्तिचौरोऽसौ॥३६॥

देशान्तरसम्भविभिर्भोगवरैर्वर्णनारम्यैः।
येऽपि नयन्ति विदेशं पशुसदृशान् देशचौरास्ते॥३७॥

नानाहासविकारैर्बहुवैदग्ध्यैः सुनर्मवैचित्र्यैः।
रमयति दिवसमशेषं प्रकृतिव्यापारचौरोऽसौ॥३८॥

भक्षितनिजबहुविभवाः परविभवक्षपणदीक्षिताः पश्चात्।
अनिशं वेश्यावेशस्तुतिमुखरमुखा विटाश्चिन्त्याः॥३९॥

अतिशुचितया न वित्तं गृह्णाति करोति चाग्र्यमधिकारम्।
यो नियमसलिलमत्स्यः परिहार्यो निःस्पृहनियोगी॥४०॥

रथ्यावणिजः पापाः स्वयमेत्य गृहेषु यत् प्रयच्छन्ति।
तत्स्वकरार्पितमखिलं भवति परं काचशकलमपि॥४१॥

छन्दानुवर्तिनो ये श्वभ्रापातेऽपि साधुवादपराः।
सर्वस्वहारिणस्ते मधुरा विषवद् विशन्त्यन्तः॥४२॥

तव नरपतिः प्रसादी गुणगणनपरः परं विजने।
उक्त्वेति राजदासैः सेवकलोकः सदा मुषितः॥४३॥

स्वप्ने मयाब्जहस्ता दृष्टा श्रीस्त्वद्गृहं प्रविष्टा सा।
मासोपवासतुष्टा देवी श्रीः सादरा प्राह॥४४॥

मद्भक्तस्ते दास्यति सर्वं तत्त्वं मया लब्धः।
इत्युक्त्वा सरलानां विलसन्ति गृहे गृहे धूर्ताः॥४५॥

पुरविप्लवनगरोदययज्ञविवाहोत्सवादिजनसङ्घे।
प्रविशन्ति बन्धुवेषाः परेऽपि सर्वापहाराय॥४६॥

परिजनपानावसरे पिबति न मद्यं निशासु जागर्ति।
ध्यानपरः सेवार्थी किमपि च कर्तुं कृतोद्योगः॥४७॥

न ददाति प्रतिवचनं ददाति वा गद्गदाक्षरैर्विषमम्।
नष्टमुखः सोच्छ्वासः प्रवेपते तत्क्षणं चोरः॥४८॥

यश्चाधिकपरिशुद्धिं प्रार्थयते रटति यश्च साटोपः।
घोरापह्नवकारी शङ्कायतनं स पापः स्यात्॥४९॥

प्रत्यक्षेऽपि परोक्षे कृतमकृतं कथितमप्यनुक्तं च।
यः कुरुते निर्विकृतिः स परं पुंसां भयस्थानम्॥५०॥

कृतकृतकमुग्धभावः षण्ढ इव स्त्रीस्वभावसंलापः।
विचरति यः स्त्रीमध्ये स कामदेवो गृहे धूर्तः॥५१॥

सततमधोमुखदृष्टिः सति विभवे मलिनदशनवसनश्च।
विलिखन् कोषनियुक्तः कोषगृहे मूषकश्चिन्त्यः॥५२॥

तिष्ठति यः सकलदिनं गृहदासः प्रीतवेश्मभवनेषु।
गृहदीर्घकथाः कथयन् स चरः सर्वात्मना त्याज्यः॥५३॥

निन्द्ये बहुदण्डार्हे कर्मणि यः सर्वथा प्रतारयति।
आजीवभीतिभोज्यस्तेन निबद्धः स्थिरो राशिः॥५४॥

दृष्ट्वा गुह्यमशेषं तस्य रहस्यं च लीलया लब्ध्वा।
धूर्तेन मुग्धलोकस्तेन शिलापट्टके लिखितः॥५५॥

राजविरुद्धं द्रव्यं रूपं वा कूटलेख्यमन्यद् वा।
निःक्षिप्य यात्यलक्ष्यं धूर्तो धनिनां विनाशाय॥५६॥

क्षुद्रः क्षीणोऽपि गृहे लब्धास्वादः कृतो धनैर्येन।
शस्त्रविषपाशहस्तः स पाशहस्तो धृतस्तेन॥५७॥

लज्जाधनः कुलीनः सम्भावितशुद्धशीलमर्यादः।
नारीक्रियते धूर्तैः प्रायेण सगर्भनारीभिः॥५८॥

दृष्टाभिरदृष्टाभिः क्रूराभिः कृतकवचनमुद्राभिः।
धूर्तो मुष्णाति वधूं मुग्धां विप्रोषिते पत्यौ॥५९॥

सजनेऽपि साधुवेषा विधृताभरणाश्च हेलया धूर्ताः।
धीरा हरन्ति सकलं दृष्टे हासोऽन्यथा लाभः ॥६०॥

देशे कृत्वा स्फीते कुम्भधनो डम्बरैर्गृहं पूर्णम्।
निक्षेपलक्षहारी वर्षेण पलायते धूर्तः ॥६१॥

सुचिरतरकनकविभूषणतनुवस्त्राः सम्भ्रमेण पूज्यन्ते।
रिपुभग्नराजपुत्रव्याजने गृहे गृहे धूर्ताः ॥६२॥

आदाय देशवृषभं पुण्यं छागं च धूर्तविक्रीतम्।
मुग्धस्य दुःखपाकः समर्धलाभोदितो हर्षः ॥६३॥

साधिक्षेपत्यागो महतां सम्पत्सु यः कृतासूयः।
तस्मै भयेन वित्तं रिक्तोऽपि ददाति यत्नेन ॥६४॥

निःसारभूर्जसारैः कृत्वा युक्तं महासार्थम्।
धूर्तो दिशि दिशि विचरन् धनिकसहस्राणि मुष्णाति ॥६५॥

धूर्तो वसन् विदेशेषूद्दिश्य सुरापगागयायात्राम्।
मृतबन्धूनामर्थे द्रविणं गृह्णाति मुग्धेभ्यः ॥६६॥

मुष्णाति सार्थरमणी शाटीमादाय निद्रया मुग्धान्।
धूर्तेन कूटरूपं दत्त्वा निशि वञ्च्यते सापि ॥६७॥

बधिरं वा मूकं वा वणिजं निःक्षिप्य भाण्डशालायाम्।
धूर्तो नयति त्वरया बहुमूल्यं वर्णकद्रव्यम् ॥६८॥

किञ्चित् परिचयमात्रैः किञ्चिद् धार्ष्ट्यैः सकल्पनैः किञ्चित्।
किञ्चिद् विवादकलहैः सर्वज्ञो वञ्चकश्चरति ॥६९॥

मिथ्याडम्बरधनिकः पुस्तकविद्वान् कथाज्ञानी।
वर्णनशूरश्चपलश्चतुर्मुखो जृम्भते धूर्तः ॥७०॥

सर्वावयवविधूननकृतसङ्केतान् विसृज्य गेहेषु।
भोक्तुं व्रजति दिगन्तान् स्वेच्छाचारी महाधूर्तः ॥७१॥

शतवार्षिकमामलकं भुक्त्वा श्रीपर्वतादहं प्राप्तः।
धूर्तो वदति गुरुणां पुरतः शकुनं स्मरामीति ॥७२॥

एता लेशेन मया कथिता मायाश्चतुःषष्टिः।
को वेद वञ्चकानां मायानां शतसहस्राणि ॥७३॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे
नानाधूर्तवर्णनं नाम नवमः सर्गः ॥

* * * * *

## दशमः सर्गः - सकलकलानिरूपणम्

एता वञ्चकमाया विज्ञेया न तु पुनः स्वयं सेव्याः।
धर्म्यः कलाकलापो विदुषामयमीप्सितो भूत्यै ॥१॥

धर्मस्य कला ज्येष्ठा भूतदयाख्या परोपकारश्च।
दानं क्षमानसूया सत्यमलोभः प्रसादश्च ॥२॥

अर्थस्य सदोत्थानं नियमपरीपालनं क्रियाज्ञानम्।
स्थानत्यागः पटुतानुद्वेगः स्त्रीष्वविश्वासः ॥३॥

कामस्य वेषशोभा पेशलता चारुता गुणोत्कर्षः।
नानाविधाश्च लीलाश्चित्तज्ञानं च कान्तानाम् ॥४॥

मोक्षस्य विवेकरतिः प्रशमस्तृष्णाक्षयश्च सन्तोषः।
सङ्गत्यागः स्वलयस्थानं परमप्रकाशश्च ॥५॥

एताश्चतुष्टयकला द्वात्रिंशत् क्रमधृताः समस्ता वा।
संसारवञ्चकानां विद्या विद्यावतामेव ॥६॥

मात्सर्यस्य त्यागः प्रियवादित्वं सधैर्यमक्रोधः।
वैराग्यं न परार्थे सुखस्य सिद्धाः कलाः पञ्च ॥७॥

सत्सङ्गः कामजयः शौचं गुरुसेवनं सदाचारः।
श्रुतममलं यशसि रतिर्मूलकलाः सप्त शीलस्य ॥८॥

तेजः सत्वं बुद्धिर्व्यवसायो नीतिरिङ्गितज्ञानम्।
प्रागल्भ्यं सुसहायः कृतज्ञता मन्त्ररक्षणं त्यागः ॥९॥

अनुरागः प्रतिपत्तिर्मित्रार्जनमानृशंस्यमस्तम्भः।
आश्रितजनवात्सल्यं सप्तदश कलाः प्रभावस्य॥१०॥ (युगम्)

मौनमलौल्यमयाच्ञा मानस्य च जीवितं कलात्रितयम्।
एताः कला विदग्धैः स्वगताः कार्याश्चतुः षष्टिः॥११॥

शक्तविरोधे गमनं तत्प्रणतिर्वा बलोदये वैरम्।
आर्तस्य धर्मचर्या दुःखे धैर्यं सुखेष्वनुत्सेकः॥१२॥

विभवेषु संविभागः सत्सु रतिर्मन्त्रसंशये प्रज्ञा।
निन्द्येषु पराङ्मुखता भेषजमेतत् कलादशकम्॥१३॥

गुरुवचनं सत्यानां कार्याणां गोद्विजातिसुरपूजा।
लोभः पापतमानां क्रोधं सर्वोपतापजनकानाम्॥१४॥

प्राज्ञः सर्वगुणानां यशस्विता विपुलवित्तविभवानाम्।
सेवा दुःखतमानामाशा पृथुकालभुजगपाशानाम्॥१५॥

दानं रत्ननिधीनां निर्वैरत्वं सुखप्रदेशानाम्।
याच्ञा मानहराणां दारिद्र्यं चोपतापसार्थानाम्॥१६॥

धर्मः पाथेयानां सत्यं मुखपद्मपावनकराणाम्।
व्यसनं रोगगणानामालस्यं गृहसमृद्धिनाशानाम्॥१७॥

निःस्पृहता श्लाघ्यानां प्रियवचनं सर्वमधुराणाम्।
दर्पस्तिमिरकराणां दम्भः सर्वोपहासपात्राणाम्॥१८॥

अद्रोहः शौचानामचापलं व्रतविशेषनियमानाम्।
पैशुन्यमप्रियाणां वृत्तिच्छेदो नृशंसचरितानाम्॥१९॥

कारुण्यं पुण्यानां कृतज्ञता पुरुषचिह्नानाम्।
माया मोहमतीनां कृतघ्नता नरकपातहेतूनाम्॥२०॥

मदनश्छलचौराणां स्त्रीवचनं ज्ञातिभेदानाम्।
क्रूरश्चण्डालानां मायावी कलियुगावताराणाम्॥२१॥

शास्त्रं मणिदीपानामुपदेशश्चाभिषेकाणाम्।
वृद्धत्वं क्लेशानां रोगित्वं मरणतुल्यदुःखानाम्॥२२॥

स्नेहो विषमविषाणां वेश्यारागो विसर्पकुष्ठानाम्।
भार्या गृहसाराणां पुत्रः परलोकबन्धूनाम्॥२३॥

शत्रुः शल्यशतानां दुष्पुत्रः कुलविनाशानाम्।
तारुण्यं रमणीनां रूपं रुचिरोपचारवेषाणाम्॥२४॥

सन्तोषो राज्यानां सत्सङ्गश्चक्रवर्तिविभवानाम्।
चिन्ता शोषकराणां विद्वेषः कोटराग्निदाहानाम्॥२५॥

मैत्री विस्रम्भानां निर्यन्त्रणता महार्हभोगानाम्।
सङ्कोचो व्याधीनां कौटिल्यं निर्जलान्धकूपानाम्॥२६॥

आर्जवममलकराणां विनयो वररत्नमुकुटानाम्।
द्यूतं दुर्व्यसनानां स्त्रीजितता मरुतटीपिशाचानाम्॥२७॥

त्यागो मणिवलयानां श्रुतमुज्ज्वलकर्णरत्नानाम्।
खलमैत्री चपलानां दुर्जनसेवा वृथाप्रयासानाम्॥२८॥

निर्वृतिरुद्यानानां प्रियदर्शनममृतवर्षाणाम्।
तत्त्वरतिर्लभ्यानां मूर्खसभा सद्विवेकनाशानाम्॥२९॥

कुलजः सफलतरूणां सौभाग्यं कृतयुगावताराणाम्।
राजकुलं शङ्क्यानां स्त्रीहृदयं प्रकृतिकुटिलानाम्॥३०॥

औचित्यं स्तुत्यानां गुणरागश्चन्दनादिलेपानाम्।
कन्या शोककराणां बुद्धिविहीनोऽनुकम्प्यानाम्॥३१॥

विभवः सौभाग्यानां जनरागः कीर्तिकन्दानाम्।
मद्यं वेतालानां मृगया गजगहनयक्षाणाम्॥३२॥

प्रशमः स्वास्थ्यकराणामात्मरतिस्तीर्थसेवानाम्।
लुब्धः फलरहितानामाचारविवर्जितः श्मशानानाम्॥३३॥

नीतिः स्त्रीरक्षाणामिन्द्रियविजयः प्रभावाणाम्।
ईर्ष्या यक्ष्मशतानामयशः कुस्थानमरणानाम्॥३४॥

माता माङ्गल्यानां जनकः सुकृतोत्सवोपदेशानाम्।
घातस्तीक्ष्णतराणां छेदस्तीक्ष्णासिशस्त्राणाम्॥३५॥

प्रणतिर्मन्युहराणां सौहार्दं कृच्छ्रयाच्ञानाम्।
मानः पुष्टिकराणां कीर्तिः संसारसाराणाम्॥३६॥

प्रभुभक्तिर्नीतीनां युधि निधनं सौख्यवीथीनाम्।
विनयः कल्याणानामुत्साहः सर्वसिद्धीनाम्॥३७॥

पुण्यं प्राप्यतमानां ज्ञानं परमप्रकाशानाम्।
कीर्तिः संसारेऽस्मिन् सारतरा सर्वलोकानाम्॥३८॥ (कुलकम्)

ज्ञेयः कलाकलापे कुशलः सर्वार्थतत्त्वविज्ञानी।
प्रवरतरो लोकेऽस्मिन् ब्राह्मण इव सर्ववर्णानाम्॥३९॥

इत्युक्तं शतमेतद् यो वेत्ति शुभाशुभोदयकलानाम्।
तस्यैव व्यवहारे दृष्टादृष्टप्रयोजना लक्ष्मीः ॥४०॥

उक्त्वेति मूलदेवो विसृज्य शिष्यानूकृतोचिताचारः।
किरणकलिकाविकासां निनाय निजमन्दिरे रजनीम्॥४१॥

केलीमयः स्मितविलासकलाभिरामः
सर्वाश्रयान्तरकलाप्रकटप्रदीपः।
लोकोपदेशविषयः सुकथाविचित्रो
भूयात् सतां दयित एष कलाविलासः॥४२॥

कलाविलासः क्षेमेन्द्रप्रतिभाम्भोधिनिर्गतः।
शशीव मानसानन्दं करोतु सततं सताम्॥४३॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे
सकलकलानिरूपणं नाम दशमः सर्गः॥

॥ समाप्तः कलाविलासः॥

* * * * *

# (२) देशोपदेशः

## प्रथम उपदेशः - दुर्जनवर्णनम्

देवो जयति हेरम्बः स्वदन्तबिसखेलनैः।
यस्योच्चैस्तत्प्रभाः शुभ्रा हसन्तीव दिशो दश॥१॥

जयन्ति वेश्या व्यसनाभ्रविद्युतो जयन्ति कौटिल्यकलानटा विटाः।
जयत्यजस्रं जनवृक्षपातिनी प्रकृष्टमायातटिनी च कुट्टनी॥२॥

ये दम्भमायामयदोषलेशलिप्ता न मे तान् प्रति कोऽपि यत्नः।
किन्त्वेष हासव्यपदेशयुक्त्या *देशोपदेशः* क्रियते मयाद्य॥३॥

हासेन लज्जितोऽत्यन्तं न दोषेषु प्रवर्तते।
जनस्तदुपकाराय ममायं स्वयमुद्यमः॥४॥

सदा खण्डनयोग्याय तुषपूर्णाशयाय च।
नमोऽस्तु बहुबीजाय खलायोलूखलाय च॥५॥

समः शत्रौ च मित्रे च तथा मानापमानयोः।
वृत्तिच्छेदकृताभ्यासः खलो निर्वाणदीक्षितः॥६॥

जिह्वादूषितसत्पात्रः पिण्डार्थी कलहोत्कटः।
तुल्यतामशुचिर्नित्यं बिभर्ति पिशुनः शुनः॥७॥

मन्दः पापग्रहः क्रौर्यादनिष्टः शुभकर्मणाम्।
पिशुनः शनितुल्योऽपि चित्रं यदशनिर्नृणाम्॥८॥

अहो बत खलः पुण्यैर्मूर्खोऽप्यश्रुतपण्डितः।
स्वगुणोदीरणे शेषः परनिन्दासु वाक्पतिः॥९॥

खलः सुजनपैशुन्ये सर्वतोऽक्षिशिरोमुखः।
सर्वतः श्रुतिमान् लोके सर्वमावृत्य तिष्ठति ॥१०॥

सत्साधुवादे मूर्खस्य मात्सर्यगलरोगिणः।
जिह्वा कङ्कमुखेनापि कृष्टा नैव प्रवर्तते ॥११॥

मायामयः प्रकृत्यैव रागद्वेषमदाकुलः।
महतामपि मोहाय संसार इव दुर्जनः ॥१२॥

लज्जाव्यसनसम्मोहहेतुना कामकारिणा।
को नाम जघनेनेव खलेन न खलीकृतः ॥१३॥

निकटस्थः प्रभोर्नित्यं विस्मृतस्वपराशनः।
कर्णे पठति पैशुन्यं ब्रह्मविद्यामिवाधमः ॥१४॥

खलो वक्त्येव सर्वस्य दोषं वक्ति खलस्य कः।
दोषो मलिनवस्त्रस्य कदा केन विचार्यते ॥१५॥

खचित्रमपि मायावी रचयत्येव लीलया।
लघुश्च महतां मध्ये तस्मात् खल इति स्मृतः ॥१६॥

खलेन धनमत्तेन नीचेन प्रभविष्णुना।
पिशुनेन पदस्थेन हा प्रजे क्व गमिष्यसि ॥१७॥

भग्नदन्त इव व्यालः श्रेयान् मूर्खखलो वरम्।
पक्षवानिव कृष्णाहिर्न त्वेव खलपण्डितः ॥१८॥

दूषणानुगतो नित्यं जनस्थानविनाशकृत्।
दुर्मदो विबुधद्वेषी पुरुषादः खरः खलः ॥१९॥

खलः प्रववृते दैवादार्जवे सुजनस्य यत्।
तदूर्ध्वबाहुर्विपिने मर्कटः कुरुते तपः ॥२०॥

गुणान् स्तौतीत्यसम्बद्धं स्निह्यतीत्यसमञ्जसम्।
ददातीति विरुद्धार्थं खलो हन्तीति नानृतम्॥२१॥

अनिशं जपता कर्णे मन्ये पैशुन्यमातृकाम्।
कृत्वेश्वरं वशे ग्रस्ताः खलेन निखिला दिशः॥२२॥

ते दोषा एव न गुणाः कस्तेषामर्जने गुणः।
येषां खलसभाद्वारि मस्तके पतितं रजः॥२३॥

भ्रुकुटिकुटिलदृष्टिर्धातुरन्यैव सृष्टि-
र्धनलवमदलिप्तः प्रौढवादानुलिप्तः।
सदसि कुटिलदोषैर्दुर्जनः सज्जनानां
मलिनयति यशांसि स्फारकैलासभांसि॥२४॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते
देशोपदेशे दुर्जनवर्णनं नाम प्रथम उपदेशः॥

* * * * *

## द्वितीय उपदेशः - कदर्यवर्णनम्

कर्कशाय नमस्तस्मै सर्वाशानिष्फलाय च।
पर्यन्ते विटभोज्याय लुब्धाय खदिराय च ॥१॥

यतेन्द्रियः पांसुशायी निःसङ्गः प्रसृतिंपचः।
कदर्यो मुनिरक्रुद्धः किन्तु तृष्णास्य वर्धते ॥२॥

लुब्धात् सर्वजनानिष्टात् कष्टचेष्टानिकेतनात्।
विमुखाः सततं यान्ति श्मशानादिव बान्धवाः ॥३॥

थूत्कृतस्य जनैर्नित्यं निर्निद्रस्य निशास्वपि।
उलूकस्येव लुब्धस्य न कल्याणाय दर्शनम् ॥४॥

कोपविकृतवक्त्रस्य मन्ये सर्वात्मना हितम्।
कदर्यस्यातिपूर्णस्य पिटकस्येव पीडनम् ॥५॥

धनं भूमिर्गृहं दाराः सर्वथा जन्मसञ्चितम्।
परार्थमेव पर्यन्ते कदर्यस्य जिनस्य च ॥६॥

सहस्राक्षस्तृणतुषे वज्रहस्तो गृहव्यये।
अशनाच्छादनच्छेदात् कदर्यः पाकशासनः ॥७॥

नीरसस्य कदर्यस्य माधुर्यं वचने कथम्।
गृहे लवणहीनस्य लावण्यं वदने कुतः ॥८॥

कदर्यश्चर्मवसनो रूक्षोऽस्नानात् सदा जटी।
मलेन श्यामलगलः शूली विलवणाशनात् ॥९॥

कार्यपीडानिरोधेऽपि नार्थं मुञ्चति सग्रहः।
सञ्चयेष्वेकदृष्टिश्च कदर्यः शुक्रतां गतः ॥१०॥

निःसत्त्वस्य समुद्रस्य विच्छायस्य पलाशिनः।
लुब्धस्यावनिसक्तस्य लोकातीतं विचेष्टितम् ॥११॥

कोऽन्यः कदर्यसदृशो दाता जगति जायते।
नाश्नात्यदत्त्वा योऽर्थिभ्यो गले हस्तं गृहेऽर्गलम् ॥१२॥

नक्ताशिनः शाकमूलशुद्धयावकभोजिनः।
अहो बत कदर्यस्य तथापि नरके स्थितिः ॥१३॥

पटी पितामहक्रीता तत्पूर्वाप्तश्च शाटकः।
दिव्यवस्त्रस्य लुब्धस्य क्षीयते न युगैरपि ॥१४॥

नष्टोत्सवस्य लुब्धस्य त्यक्तपुण्यदिनस्थितेः।
अदृष्टलवणा भार्या प्रातिवेश्यैर्निमन्त्र्यते ॥१५॥

मुष्टिमानेन दत्त्वापि लुब्धो धान्यं गृहव्यये।
मृतो मुष्टिं समादाय क्लेशमूल्यं न गच्छति ॥१६॥

पितुः पितृदिने लुब्धो देशोत्सवदिनेषु च।
मृतकाशौचमाचष्टे ज्वरव्याजं करोति वा ॥१७॥

कदर्यः स्वजनं दृष्ट्वा यदृच्छोपनतं गृहे।
करोति दारकलहव्याजेनानशनव्रतम् ॥१८॥

कदर्यः कुशलप्रश्नं न करोति शृणोति वा।
अभ्यागतस्य सायाह्ने पश्चाद्भोजनशङ्कया ॥१९॥

गीतादुद्विजते स्पर्शं नेच्छति द्वेष्टि भोजनम्।
विमुखः सौरभे रूपेऽलुब्धः सर्वेन्द्रियोज्झितः ॥२०॥

सत्यं कृतार्थिकलहात् कदर्यादुत्तमः शवः।
यः समौनो निरुच्छ्वासः क्रव्यादैरुपजीव्यते ॥२१॥

जीवतः सञ्चिताद् यस्य न निर्याति कपर्दिका।
म्रियमाणस्य तस्यैव सकृत् सर्वं प्रयाति च ॥२२॥

भट्टव्ययं निवार्यैव व्ययभीरोः करोत्यलम्।
पुत्रकार्ये कदर्यस्य भार्या जारोत्सवव्ययम् ॥२३॥

चण्डालस्यापि साहाय्ये दृष्ट्वा लाभलवोद्गतिम्।
चरणौ चूषति चिरं कदर्यः कार्यगौरवात् ॥२४॥

पश्चात् संशुद्धिसन्त्रासान् नियमं समुदाहरन्।
विषवद् वर्जयत्येव कदर्यः पानभोजनम् ॥२५॥

नैष्ठुर्यनैरपेक्ष्यं च शाठ्यं क्रौर्यमनार्जवम्।
कृतविस्मरणं यच्च तत् कदर्यस्य लक्षणम् ॥२६॥

वित्तव्ययवशाद् दोषमुपकारेऽपि वक्ति यः।
कृतघ्नो गर्हितः सद्भिः स कदर्यो विचार्यताम् ॥२७॥

अचुल्लीपाकमस्मेरमसुखं निर्जनं च यत्।
यदुत्सवकथाहीनं तत् कदर्यगृहं विदुः ॥२८॥

मन्दाग्निः पाण्डुरोगी च लालास्यश्चुल्ललोचनः।
दुर्गन्धवदनो यश्च स कदर्योऽभिधीयते ॥२९॥

दन्तेषु मलपूर्णेषु कम्बले धूमपिङ्गले।
नूनं स्थिता श्रीर्लुब्धस्य जघन्यजनवासिनी ॥३०॥

दन्ता ज्वरितमूत्राभा मुखं पक्वफलोपमम्।
शुष्काशिनः कदर्यस्य शुष्कचर्मनिभं वपुः ॥३१॥

कुम्भीपाकेषु येनार्थाश्चिरं गर्तेषु पीडिताः।
स लुब्धस्तेन पापेन मन्ये कुम्भीषु पच्यते ॥३२॥

सोऽपि सर्वङ्कषः कालः सत्यं लुब्धस्य विस्मृतः।
षष्टिवर्षस्य धान्यस्य यः करोति न विक्रयम् ॥३३॥

नृत्यत्यवृष्टिषु पुरा ह्यतिवृष्टिषु नृत्यति।
दुर्भिक्षोपप्लवाकाङ्क्षी कदर्यो धान्यगौरवात् ॥३४॥

या निशा सर्वभूतानां तस्यां जगर्ति संयमी।
यस्यां जाग्रति भूतानि सा रात्रिर्लुब्धचेतसः ॥३५॥

विरमति मतिहीनो लाभलोभेन वित्तं
जरयति यतिरूपः संयमादिन्द्रियेच्छाम्।
चरति च रतिविघ्नं सव्ययत्वाद् गृहिण्याः
स्वधननिधनरक्षाचार्यवर्यः कदर्यः ॥३६॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते देशोपदेशे
कदर्यवर्णनं नाम द्वितीय उपदेशः ॥

* * * * *

## तृतीय उपदेशः - वेश्यावर्णनम्

अर्थलुब्धामतिप्रौढां चित्रालङ्कारहारिणीम्।
प्रौढां वाणीमिव कवेः स्वच्छन्दां बन्धकीं नुमः ॥१॥

स्पृहारागविनिर्मुक्ता निष्कामा कामचारिणी।
स्वध्यानशीला गणिका योगिनीव गुणोज्झिता ॥२॥

नीचोपभोग्यविभवा सदाचारपराङ्मुखी।
दुर्जनश्रीरिव चला वेश्या व्यसनकारिणी ॥३॥

न लोभात् स्थानमस्थानं जानीते सर्वगामिनी।
आवेशमूढमनसां वेश्या पर्यन्तनिष्फला ॥४॥

नोपशाम्यति वृद्धापि समस्ताहरणोन्मुखी।
तृष्णेव बन्धकी नित्यं दुष्पूरा केन पूर्यते ॥५॥

सङ्कोचिताङ्गी सुरते रक्तापचयकारिणी।
जरेव वारवनिता जनतारूपहारिणी ॥६॥

न सिध्यति धिया भक्त्या शक्त्या युक्त्या गुणेन वा।
कुलटा खलसेवेव मानम्लानिकरी परम् ॥७॥

न बालेष्वपि सस्नेहा तरुणेषु न सस्पृहा।
न सानुरोधा वृद्धेषु मृत्योर्मतिरिवासती ॥८॥

अपि वर्षशतं स्थित्वा सदा कृत्रिमरागिणी।
वेश्या शुकीव निःश्वासा निःसङ्गेभ्यः पलायते ॥९॥

पणेन हृतसर्वस्वा कृतलोलाक्षविभ्रमा।
वेश्या कितवमायेव धूर्तानामपि मोहनी॥१०॥

कृत्रिमं देश्यते सर्वं चित्तसद्भाववर्जिता।
सूत्रप्रोतेव चपला नर्तकी यन्त्रपुत्रिका॥११॥

निर्यात्येको विशत्यन्यः परो द्वारि प्रतीक्षते।
यस्याः सभेव सा वेश्या कार्यार्थशतसङ्कुला॥१२॥

मधुधारेव वचसि क्षुरधारेव चेतसि।
वेश्या कुठारधारेव मूलच्छेदाय कामिनाम्॥१३॥

मौग्ध्ये बाला रतौ प्रौढा वृद्धा मायाशतेषु च।
सा कामरूपिणी वेश्या रक्तमांसैर्न तृष्यति॥१४॥

धीमान् मूढो धनी निःस्वः शुचिश्चौरो लघुर्गुरुः।
भवितव्यतयेवायं वेश्यया क्रियते जनः॥१५॥

असूचिभेद्यामासाद्य बालां प्रौढाभिलाषिणीम्।
हा कष्टं मुषितोऽस्मीति प्रभाते वक्ति कामुकः॥१६॥

स्पष्टकूटकुचा भाटीं प्रौढे वादाय बालिका।
मुष्णाति सुरतायोग्या केवलं परिचुम्बनैः॥१७॥

मात्रा समर्पिता लोभादभियुक्तैर्विचारिता।
जन्मावधिं विना वेत्ति वेश्या पुरुषसङ्गमम्॥१८॥

शयनेऽहं तवाद्यैव बाला प्रथमपुष्पिता।
इत्युक्त्वा कामुकान् प्रातर्वेश्या भुङ्क्ते सदोत्सवम्॥१९॥

न निर्विचारसुरतव्यापारोपरमः क्वचित्।
आशैशवादनिच्छन्त्या यस्याः सा कस्य रागिणी ॥२०॥

वेश्याया जघनोद्याने फुल्ले यौवनपादपे।
दिवानिशं भवत्येव सुवर्णकुसुमोच्चयः ॥२१॥

पुण्यैः पण्यवधूर्लग्ने यौवनाख्ये शरत्फले।
सहस्रभगमात्मानं शक्ररूपं समीहते ॥२२॥

स्तनौ नखमुखोच्छिष्टौ वेश्यायाः खण्डितोऽधरः।
न रागाय न लज्जायै केवलं पण्यवृद्धये ॥२३॥

पर्यन्तविरसाः सर्वे भावाः संसारवर्तिनः।
आदिमध्यान्तविरसो वेश्यारतिसमागमः ॥२४॥

कटिर्विटशतैर्घृष्टा पान्थपीतोज्झितं मुखम्।
स्तनौ सहस्रमृदितौ यस्याः कस्यास्तु सा निजा ॥२५॥

स्पष्टं वराशनं त्यक्त्वा भुङ्क्ते कदशनं रहः।
विश्ववञ्चनशालिन्या वेश्ययात्मापि वञ्च्यते ॥२६॥

यामं कथाभिः पानेन परमीर्ष्यारुषा परम्।
वेश्या क्षिपति मुग्धस्य शेषं कृतकनिद्रया ॥२७॥

मोक्षगामि मनो मन्ये वेश्याया रतिसङ्गमे।
लिप्यते यन्न रागेण पद्मपत्रमिवाम्भसा ॥२८॥

ब्रूते प्रभाते मिथ्यैव दासी जन्मदिनोत्सवम्।
भुक्त्वैव बन्धुनिधनं शिरः शूलं करोति वा ॥२९॥

विरसा सेव्यते वेश्या जनैर्नित्यरजस्वला।
न कामाय न धर्माय धननाशाय केवलम्॥३०॥

प्रम्लाने यौवने शुक्लकेशरञ्जनतत्परा।
वश्ययोगार्थिनी याति वेश्या कस्य न शिष्यताम्॥३१॥

मत्स्ययूषरसैर्दासी घृतक्षीरपलाण्डुभिः।
प्रियं पराङ्मुखमिव प्रत्यानयति यौवनम्॥३२॥

षष्टिवर्षापि यद् वेश्या बालेवोन्मार्जितानना।
तद्युगादौ तया पीतं नूनं काकैः सहामृतम्॥३३॥

कूटविक्रयदोषेण ब्रह्मस्वहरणेन च।
पतितौ पण्यवनिता स्तनौ यत्नेन गूहते॥३४॥

क्व तदस्ति न जानीमः पिबामः किं न तद् विषम्।
तथैव दृश्यते येन प्रपुराणापि पुंश्चली॥३५॥

छन्नाननार्धा प्रोत्क्षिप्तस्तनी शीर्णशिरोरुहा।
मुष्णाति तरुणीभ्रान्त्या मुग्धान् वृद्धापि बन्धकी॥३६॥

क्षीणध्वान्तपटा वृद्धा सबाष्पा नष्टतारका।
वेश्या प्रभातवेलेव सर्वस्वापहृतिक्षमा॥३७॥

रक्तच्छाया पाण्डुमुखी प्रसवैः कृशतां गता।
सा गुरून् सूत्रकं रक्षां याचते भूतशङ्कया॥३८॥

मस्तके भुजयोः कण्ठे जतुरक्षाशतान्विता।
भूतवित्रासजननी सा भूतबलिमिच्छति॥३९॥

सुधौतवसना तीर्थे स्थित्वा पुण्यदिनेऽसकृत्।
रण्डावेशेन कुरुते वेश्या मैथुनविक्रयम्॥४०॥

प्रसिद्धायतने वेश्या कृत्वा लिङ्गार्चनव्रतम्।
महाश्वेतेव निर्याति शैवलोकजिगीषया॥४१॥

सा रागकोशशपथक्षीणजिह्वाकराधरा।
शीताम्बरा निष्पुरुषा निशि शीतेन कूजति॥४२॥

नित्याभ्यक्ता वर्तिलिप्तनयना सा मलीमसा।
न स प्रतीपमायाति यस्यायाति पुरः पथि॥४३॥

अर्थार्थिनी देवपूजास्वप्नोपश्रुतितत्परा।
सदा गणकगेहं सा प्रष्टुं याति ग्रहस्थितिम्॥४४॥

वाराणसीं व्रजाम्येव किन्तु दोषोऽस्ति दुःसहः।
पलाण्डुना विना तत्र न जीवामीति वक्ति सा॥४५॥

प्रम्लाननयना दैन्यजननी घर्घरस्वना।
दुःखोच्छ्वासवती वृद्धा नीचयाच्ञेव नोचिता॥४६॥

नष्टच्छायाञ्जनवती रोगार्त्या धातुवादिनी।
भूतावेशोल्बणा वेश्या युक्ता सिद्धगुणैरिव॥४७॥

हृदयनयनचौरी चारुवेशेन वेश्या
ललितवलितरङ्गिभ्रूलता तावदेव।
स्थित इह धनिकोऽद्य प्रातरागच्छ गच्छे
त्यनुचितमुचितं वा वक्ति यावन् न किञ्चित्॥४८॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते देशोपदेशे
वेश्यावर्णनं नाम तृतीय उपदेशः॥

* * * * *

# चतुर्थ उपदेशः कुट्टनीवर्णनम्

हालाहलोल्बणां कालीं कुटिलां कुट्टनीं नुमः।
वेश्यारतिनिधानस्य क्षयरक्षामहोरगीम्॥१॥

शक्रराज्यापहरणक्षमा विबुधवर्जिता।
कुट्टनी ब्रह्महत्येव भवस्यापि भयप्रदा॥२॥

कालकापालिकोत्तालकङ्कालाकृतिराकुला।
कुट्टनी मानुषानत्ति रक्ताकर्षणशालिनी॥३॥

क्षणाद् बुधोऽप्यबुधतां समुद्रोऽपि विमुद्रताम्।
कुट्टनीदृष्टिपतितः शेषोऽप्यायात्यशेषताम्॥४॥

भगदत्तप्रभावाढ्या कर्णशल्योत्कटस्वना।
सेनेव कुरुराजस्य कुट्टनी किन्तु निष्कृपा॥५॥

न कान्तं न कलावन्तं न शूरं सहते सदा।
प्रतीपचारिणी घोरा राहुच्छायेव कुट्टनी॥६॥

नापेक्षते परिचयं नोपकारं स्मरत्यपि।
सर्वदैव विरागान्ता खलमैत्रीव कुट्टनी॥७॥

सदंष्ट्रा कुट्टनी क्रूरा भुजङ्गाकृष्टिकारिणी।
याता मूर्तिः कृतान्तस्य नूनमन्यप्रकारताम्॥८॥

जनपुण्यैरसामान्यैः कुट्टनी कुट्टनी नृणाम्।
कङ्काली बालकङ्काली भक्षिता व्रजतु क्षयम्॥९॥

रामेण ताटका मिथ्या हता कृष्णेव पूतना।
विश्वकण्टकतां याता निहता किं न कुट्टनी ॥१०॥

नूनं बिभेति कुट्टन्याः सोऽपि सर्वहरो यमः।
स्नायुचर्मास्थिशेषापि सा मायेव यदक्षया ॥११॥

कलहोल्लुञ्चितकचा त्रुटितश्रवणद्वया।
छिन्ननासा पिशाचीव घटयत्येव कुट्टनी ॥१२॥

श्वपुच्छैश्छागशृङ्गैश्च व्यालैरुष्ट्रगलैः खलैः।
कुट्टनीहृदयान् मन्ये कौटिल्यमुपजीव्यते ॥१३॥

यौवने मूल्यकुल्येव तुलेव रतिविक्रये।
पण्यस्त्रीणामनेकार्था कृता दैवेन कुट्टनी ॥१४॥

जाने जाम्बवतो ज्येष्ठा जर्जरा वृद्धकुट्टनी।
रामायणसहस्राणां साक्षिणी कथमन्यथा ॥१५॥

सधनं कामुकं धृष्टा विलोक्यानिशमागतम्।
जिह्वां प्रसार्य निर्याति कुट्टनी कार्यगौरवात् ॥१६॥

कुट्टन्या प्रविशन्नेव नरः साभरणाम्बरः।
सविषाणखुरो मेषः सौनिकेनेव गण्यते ॥१७॥

वात्सल्यपेशलगिरा सर्वमातेव कुट्टनी।
करोति पुत्रेत्याह्वानं पुराणस्यापि वेधसः ॥ १८॥

न हृद्यस्त्वत्परः काण खल्वाट शोभसे परम्।
इति वित्तार्थिनी स्तौति कुरूपमपि कुट्टनी ॥१९॥

हरत्यपक्वमनिशं पक्वं गिलति लाघवात्।
बहूच्छिष्टं विधत्ते च लुण्ठिता कुट्टनी नृणाम्॥२०॥

कामिनः सप्रयत्नस्य बन्धकीभोजकारिणः।
न तृप्यति महाकाली महिषस्यापि कुट्टनी॥२१॥

अदृश्योपक्रमैस्तैस्तैः करोति सुशिरं नरम्।
यत् सत्यं जृम्भमाणस्य जिह्वां नयति कुट्टनी॥२२॥

रात्रौ विषूचिकाक्रान्ता क्रन्दती वान्तभोजना।
परिष्वक्ता बन्धुजनैः पुनर्जातेव कुट्टनी॥२३॥

छिन्नार्धनासिका मात्रा,...,... विकृतानना।
जिह्वां प्रसार्य महती ........... ॥२४॥

.........................।
......................... ॥२५॥

.............................. ।
.............................. ॥२६॥

भृगुतुङ्गं व्रजामीति कृत्वा पुण्यदिनावधिम्।
भुङ्क्ते नानारसाहारं कुट्टनी बान्धवाहृतम्॥२७॥

ज्वरातीसारशोफार्ता तीर्थं नीता स्वबान्धवैः।
दिनैः प्रतीपमायाति कुट्टनी विजयेश्वरात्॥२८॥

चौराः सर्वे स्थिताः केन नीता सा हेमवालिका।
इत्युक्त्वा कुट्टनी स्वस्था निष्कासयति बान्धवान्॥२९॥

कामिनः सुरतेच्छायां वेश्याविन्यस्तचक्षुषः।
पूर्वराजकथाव्याजैर्विघ्नं चरति कुट्टनी॥३०॥

क्षीणं व्यसनिनं मूढं दुर्दशेव विनाशिनी।
कुट्टनी प्रेरयत्येव सपत्नकलहादिषु॥३१॥

विरक्ता रिक्तहस्तस्य प्रच्छन्नव्यक्तयुक्तिभिः।
सक्ता निष्कासनोपाये निद्रां नायाति कुट्टनी॥३२॥

सर्वस्वेनाप्यसन्तुष्टा रूक्षा स्नेहशतैरपि।
निर्मिता कामिनां विघ्नः कृतघ्ना केन कुट्टनी॥३३॥

नयननयनसक्ता रक्तमांसप्रसक्ता
सकलसकललोकग्रासमुक्ताट्टहासा।
कलितकलितरङ्गस्फारसञ्चारचारा
भ्रमति जगति पुंसां कुट्टनी कुट्टनी सा॥३४॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते देशोपदेशे कुट्टनीवर्णनं नाम चतुर्थ उपदेशः॥**

* * * * *

## पञ्चम उपदेशः - विटवर्णनम्

क्षीणाय गुणहीनाय सदोषाय कलाभृते।
विटाय कृष्णपक्षेन्दुकुटिलाय नमो नमः ॥१॥

सर्वोद्वेगकरी चेष्टा भुजङ्गस्य विलासिनः।
विटस्यानेकजिह्वस्य भोगमात्राभिमानिनः ॥२॥

परदानुबद्धस्य सरागस्य विकारिणः।
विशेषं नाधिगच्छामि विषस्य विटकस्य च ॥३॥

सदा विप्लवशीलेन कोपनेन प्रमादिना।
चटुलेन विटः स्पष्टं मर्कटेनोपमीयते ॥४॥

अन्तर्मुखोऽन्तरालीनो ध्यानवान् संहृतेन्द्रियः।
क्षणादवाप्तो योगित्वमात्मारामस्थितिर्विटः ॥५॥

वेश्याभिस्थूत्कृतमुखः सुजनेन विवर्जितः।
अमङ्गलाकृतिरिव भ्राम्यतेऽविरतं विटः ॥६॥

सूचीहस्तः सूत्रधारः सकङ्कणप्रवेशकः।
क्षीणो नटायते स्पष्टं विटः कपटनाटके ॥७॥

विटो राम इवाभाति काकुत्स्थः कुलटागृहे।
निकृत्तकुट्टनीशूर्पणखाश्रवणनासिकः ॥८॥

गतागतेष्वखिन्नेन सततं चक्रचारिणा।
खरस्वनेन प्रकटं विटेन शकटायते ॥९॥

शूरो दोषाकरः स्त्रीणां वक्रश्चित्ते खलो बुधः।
गुरुः पापे व्यये शुक्रो विटः पथि शनैश्चरः ॥१०॥

वेश्याभिर्विप्रलब्धोऽपि निरस्तोऽप्यसकृद् विटः।
पुनर्विशति तद्गेहं श्वा हतो लगुडैरिव ॥११॥

क्षीणः कृतोपवासोऽपि शून्यदेवकुले क्वचित्।
मिथ्यैव भोगानाचष्टे यैर्विराटायते विटः ॥१२॥

निदाघे स्थूलवसनं माघे तनुतराम्बरम्।
पिङ्गं धत्ते विटो वेश्याहस्तोत्पुंसनकुङ्कुमैः ॥१३॥

विलेपनाङ्कितपटः स्वदत्तनखमण्डितः।
वेश्यासम्भोगसौभाग्यं याति प्रकटयन् विटः ॥१४॥

फणाटोपकृतास्फोटविचटत्पटपल्लवः।
विटस्ताम्बूलगण्डूषैर्वेश्याभिः परिपूर्यते ॥१५॥

उदञ्चितकचः किञ्चिच् चिबुकश्मश्रुवेष्टने।
दिने देवगृहाधीशवदनं वीक्षते विटः ॥१६॥

दर्पयन् दन्तताम्बूलो दन्त्यप्रायाक्षरैः पदैः।
अलग्नोष्ठपुटो वक्ति कत्थनः कटुको विटः ॥१७॥

रूक्षैः पश्चात् पुरः स्निग्धैः कचैः कृत्रिमकुञ्चितैः।
शिरो विलोलयन् ब्रूते वेश्यां केशधनो विटः ॥१८॥

सुचिरं बालकं कृत्वा हस्ते प्रस्ताववर्जितम्।
अङ्गुल्या वर्णयत्येव सर्वं सर्वोद्भवो विटः ॥१९॥

यत्नेन खादिरं रागं रक्षन् बद्धमिवाधरे।
प्रपायां मण्डकं भुङ्क्ते वेशमात्रधनो विटः ॥२०॥

निद्रां न याति विवलन् पलालशयने निशि।
तूस्तप्रावरणं दृष्ट्वा ............॥२१॥

....................सजने जननीं पुरः।
ममेयं कुम्भदासीति वक्ति मानधनो विटः॥२२॥

टक्कराकोटिटाङ्कारविस्फुटन्मस्तको रटन्।
खल्वाटः शङ्कितो याति वेश्यावेश्म जरद्विटः॥२३॥

ऋणेन खण्डितो रागी पुंश्चलीनखमण्डितः।
सपत्नैर्दण्डितो याति विदेशं विटपण्डितः॥२४॥

मासमात्रं शठः स्थित्वा क्वचित् खशकुटीरके।
प्रगल्भते दाक्षिणात्यभङ्गीभणितिभिर्विटः॥२५॥

दुर्निमित्तमिवासह्यं यूकानां विपुलं पटम्।
जूटं बध्नाति हा कष्टं बहिर्देशगतो विटः॥२६॥

रसायनैर्बिलज्ञानैर्योगशास्त्रैरसङ्गतैः।
गन्धयुक्तिकथाभिश्च मुग्धान् भुङ्क्ते जरद्विटः॥२७॥

क्षपितविकलकालो धातुवादी विटाग्र्यः
सततमलिनभस्त्राभस्ममूषाङ्गहस्तः।
विकटकचकरालः कज्जलालिप्तभाल-
श्चरति रसविदग्धो दग्धचीरः पिशाचः॥२८॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते देशोपदेशे**
**विटवर्णनं नाम पञ्चमः उपदेशः॥**

* * * * *

## षष्ठः उपदेशः - छात्रवर्णनम्

नमश्छात्राय सततं सत्रे वामार्धहारिणे।
उग्राय विषभक्षाय शिवाय निशि शूलिने॥१॥

कालकङ्कालसदृशश्छात्रो देशान्तरागतः।
करङ्कशङ्कया दूरात् सजने वर्ज्यते जनैः॥२॥

क्षत्रिणः सपवित्रस्य स्पर्शहुङ्कारकारिणः।
लज्जन्ते मुनयोऽप्यग्रे गौडस्यापरपाकिनः॥३॥

ग्रहवारेषु भुञ्जानः स्नातकः संशितव्रतः।
प्रणतश्चान्नसंकाङ्क्षी जपति प्रहरद्वयम्॥४॥

अवाप्ततिलकः सत्रे भोज्यैरुद्वर्तनैश्च सः।
भुजङ्गः कञ्चुकमिव त्यक्त्वा सञ्जायते नवः॥५॥

भाटीः पृच्छति वेश्यानां द्यूतं पृच्छति निर्जितम्।
मांसं संपृच्छति भोज्ये व्रतखिन्नेषु दैशिकः॥६॥

छात्रः प्रवृत्तः पाण्डित्ये वृद्धकीरजिगीषया।
कष्टेन जानात्योङ्कारं स्वस्तिज्ञाने कथैव का॥७॥

अलिपिज्ञोऽप्यहङ्कारस्तब्धो विप्रतिपत्तये।
गौडः करोति प्रारम्भं भाष्ये तर्के प्रभाकरे॥८॥

स्पर्शं परिहरन् याति गौडः कक्षाकृताञ्चलः।
कुञ्चितेनैकपार्श्वेन दम्भभारभरादिव॥९॥

अलक्तकाङ्कितोद्धृष्टनखश्चित्राम्बरोऽथ सः।
लज्जते मलपत्रेण चक्रनाराचसञ्चये॥१०॥

क्रुद्धः कर्मकरान् सर्वान् निरस्य लगुडाहतान्।
तमेव सहते दासं तरुणी यस्य गेहिनी ॥११॥

उपानत्कुत्सितारावगर्वितः स शनैर्व्रजन्।
लोहितक्षुरिकापट्टवेष्टितां वीक्षते कटीम् ॥१२॥

लीलाञ्चितलतापाणिर्भ्रूविलासविकारकृत्।
वेश्यावेश्माग्ररथ्यासु सायं भ्रमति दैशिकः ॥१३॥

कितवः कुट्टनी वेश्या चर्मकारः सनापितः।
पञ्च गौडशरण्डस्य करण्डग्रन्थिभेदिनः ॥१४॥

निर्दीपपात्रतुल्यास्यकान्त्या जितशनैश्चरः।
गीयते रूपकन्दर्पश्छात्रो दुर्गतगायनैः ॥१५॥

यातः प्रसिद्धिं काठिन्यादविश्रान्तरतिः सदा।
त्रिगुणेनापि मूल्येन वेश्यां नाप्नोति दैशिकः ॥१६॥

यदैव शयने गाढं जूटं बध्नाति दैशिकः।
तदैव हा मृतास्मीति वेश्या ब्रूते भयार्दिता ॥१७॥

भाटीं गृह्णाति या वेश्या परनाम्नापि दैशिकात्।
सैव तस्याः कटीशूलपथ्ये याति चतुर्गुणा ॥१८॥

यस्योपस्पृशतः शौचे पर्याप्ता नाभवन् नदी।
स एव भुङ्क्ते वेश्याभिरुत्सृष्टं मधुभोजनम् ॥१९॥

शीतकाले शिरःशाटी वेश्या वेश्मसु दैशिकः।
हसन् कालमुखः शुक्लदशनो वानरायते ॥२०॥

रण्डां परवधूं वापि यत्नादन्वेष्टुमिच्छति।
पितुर्नाम्ना परिचयं स करोति गृहे गृहे ॥२१॥

हसन्ति किं भणन्तीति मुग्धोक्त्या परयोषितः।
विश्वास्य सेवते धूर्तः सत्रभोजनवर्णनैः ॥२२॥

चञ्चत्कर्णसुवर्णाङ्कः स्थूलत्रिगुणवालकी।
प्रभाते धनदाकारस्तूर्णं निर्याति दैशिकः ॥२३॥

स पिशाच इवाभाति दिनान्ते द्यूतनिर्जितः।
नग्नो भग्नमुखः पांसुलिप्तसत्रपसत्रपः ॥२४॥

उदराबद्धवस्त्रेण ग्रन्थिजूटेन नादिना।
लगुडोद्धतहस्तेन छात्रेणोन्मूल्यते मठः ॥२५॥

अनेकक्षुरिकाघातक्षुण्णकुक्षेः क्षयैषिणः।
को नाम गौडयक्षस्य सत्रे याति विपक्षताम् ॥२६॥

भुक्तं करोति न प्रीत्या न भयान् न च गौरवात्।
गौडश्चरति लोकेऽस्मिन् दुर्ग्रहोऽपि सविग्रहः ॥२७॥

द्वादश्यामन्यवद् गौडः सत्रच्छेदादुपोषितः।
स्वयं पक्वेन कुरुते मत्स्यमांसेन पारणम् ॥२८॥

नापितश्चर्मकारो वा धीवरः सौनिकोऽपि वा।
स्वदेशे दैशिको नूनं सन्ध्यापाठं न वेत्ति यत् ॥२९॥

सत्रे छात्रेण पात्रेण कृते भोज्यप्रतिग्रहे।
तुष्यन्ति देवता वेश्याः क्षीरिणीघृतमोदकैः ॥३०॥

वेश्यासक्तो द्यूतकरश्चाक्रिकः प्रायकृत् सदा।
कुक्षिभेदी मठवने छात्रः पञ्चतपा मुनिः ॥३१॥

न ब्रह्मचारी न गृही न वनस्थो न वा यतिः।
पञ्चमः पञ्चभद्राख्यश्छात्राणामयमाश्रमः ॥३२॥

दैशिकः कृपया येन पीतकोशः प्रवेशितः।
तस्यैव लिखति प्राये ब्रह्महत्यां विषाशनः ॥३३॥

वेश्यावारज्वरः सत्रसन्निपातो मठक्षयः।
न सङ्गहैर्न हृदयैः साध्यतामेति दैशिकः ॥३४॥

शृङ्गग्राही दधिक्षीरे सूदाघातेषु दण्डधृत्।
मठच्छात्रः सदाछत्री न तथापि स दीक्षितः ॥३५॥

चाक्रिकः शिवतां यातश्चौरः कर्मकरैर्धृतः।
गौडो गर्वोन्नतग्रीवष्ठक्कुरोऽस्मीति भाषते ॥३६॥

सत्रान्नेनोदरस्थेन ये मृता बुद्धदैशिकाः।
ते सत्रतूर्ये क्रोशन्ति जातास्तत्रैव कुक्कुटाः ॥३७॥

याचते पण्यमधिकं मूल्यमल्पं प्रयच्छति।
वणिजस्तिष्ठति पुरः प्रभाते दैशिकः कलिः ॥३८॥

मत्स्या मत्स्यमिवाश्नन्ति भागीकृत्यातुरं क्षणात्।
छात्राश्छत्रकरण्डादिपटशाटककम्बलैः ॥३९॥

श्राद्धपक्षे मठच्छात्रो भुक्त्वा ठक्कगृहे क्वचित्।
न पश्यत्यूर्ध्वनयनः शूलारूढ इव क्षितिम् ॥४०॥

नायं मठः शठमठः प्रांशुर्हठमठोऽपि वा।
वृद्धराक्षसपूर्णेयं घोरा दारुगिरेर्गुहा ।।४१ ।।

मठश्मशाने वेतालाः पिशाचाः स्नानकोष्ठके।
घटयन्ति जनं छात्राः सत्रे सन्त्रासभैरवाः ।।४२ ।।

कुपितं कपिमालिङ्ग्य कण्ठे बद्ध्वा महोरगम्।
गौडं चातुरमासाद्य वैद्यस्य कुशलं कुतः ।।४३ ।।

स्नाने दाने व्रते श्राद्धे निष्कारणरुषा ज्वलन्।
मातरं चोदयामीति वदन् सर्वं करोति सः ।।४४ ।।

व्रजति दिनमखिन्नः सत्रपां सत्रपालीं
रमयति च कुमारीं दन्तरूपो विरूपः।
क्षपयति भजमानः स्वां कुलालीं कुलालीं
विलसति मठचट्टः पापकारी विकारी ।।४५ ।।

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते देशोपदेशे
छात्रवर्णनं नाम षष्ठ उपदेशः ।।

* * * * *

## सप्तम उपदेशः - वृद्धभार्यावर्णनम्

नुमः पुष्पवतीं कान्तां कन्यां यौवनशालिनीम्।
पुरुषस्पर्शरहितां श्वभ्रजातां लतामिव॥१॥

अविद्ययेव जरया स्पृहया च विमोहितः।
कुमारीं याचते वृद्धः कदर्य इव सम्पदम्॥२॥

विवाहं परलोकार्थं करोत्येष विचक्षणः।
इति वृद्धस्य वरणे वक्ति स्मितमुखो जनः॥३॥

कृता रुचिः पृथुश्वासतमोदृष्टिविरागवान्।
कन्याया वरणे वृद्धो मूर्तो ज्वरः इवागतः॥४॥

अकाले जरया पुत्रि व्याप्तोऽयं धनिनां वरः।
इति वृद्धः पिता ब्रूते तनयामश्रुवर्षिणीम्॥५॥

वृद्धहस्तेन कुचयोः स्पर्शो मे कथमेतयोः।
इत्युच्छ्वासवती कान्तं कन्या शोचति यौवनम्॥६॥

आलम्भ्य कन्यामञ्जर्या विवाहे पाणिपल्लवम्।
वृद्धः कुचफलन्यस्तवदनो वानरायते॥७॥

वधूर्वरोत्सवायाततरुणन्यस्तलोचना।
नोपसर्पति वृद्धस्य शय्यां वध्यशिलामिव॥८॥

भार्यासमागमे वृद्धः प्रणामानतमस्तकः।
पादास्फोटनभग्नास्यः पतितो मूर्छितः क्षितौ॥९॥

लालापूर्णेन वक्त्रेण परिचुम्बनमीहते।
धिगहो बत नष्टा धीरिति वृद्धं ब्रवीति सा॥१०॥

पितुः पितामहोऽस्तीति त्वत्तुल्यः किं न लज्जसे।
आनीताहं कुपतिना वद कस्य कृते त्वया॥११॥

इति प्रलापिनीं वृद्धः शयनं याचते वधूम्।
वाक्यैः पतितदन्तालीगलल्लालालवाकुलैः॥१२॥

वधूर्वृद्धभुजङ्गेन स्पृष्टा हा कष्टवादिनी।
दष्टेव खट्वामुत्सृज्य गेहाद् गेहं पलायते॥१३॥

बलाद् बन्धुजनैर्नीता पुनः शय्यानिकेतनम्।
वधूर्वृद्धस्य संस्पर्शं चण्डालस्येव रक्षति॥१४॥

पृथगंशुकसंवीतां सुप्तामालिङ्गतः प्रियाम्।
वृद्धस्य निद्रा नायाति कुपितेव तदीर्ष्यया॥१५॥

रजस्वलोत्सवे वध्वाः पूर्वजारसमागमात्।
प्रातः क्षिपति सिन्दूरं वृद्धस्य वदने जनः॥१६॥

विधेयं सकलाज्ञासु पुष्पालङ्कारवस्त्रदम्।
कटुकौषधवद् वृद्धं मुहूर्तं सहते वधूः॥१७॥

मुहुः शक्तिदरिद्रस्य गूढाङ्गं स्पृशतो मुहुः।
न रतिर्विरतिर्वापि स्थविरस्य प्रजायते॥१८॥

प्रमादाद् यदि वृद्धस्य शक्तिराकालिकी भवेत्।
तदर्थं तस्य निर्यान्ति शुक्रेणैव सहासवः॥१९॥

पीनस्तनोरुजघनां जीर्णवीणोपमाकृतिः।
तरुणीं संस्पृशन् वृद्धः शुष्कोऽप्यायाति शुष्कताम्॥२०॥

बृद्धस्य वृष्यैराहारैर्वाजीकरणमिच्छतः।
अतीसारैः सवमनैर्नष्टा पुष्टिस्त्रिवार्षिकी॥२१॥

अहो वृद्धस्य पर्यन्ते लग्नः सुकृतसञ्चयः।
भार्या सुरतमन्त्रेण नामग्रहणकारिणी॥२२॥

गर्भिणी परबीजेन वृद्धस्योत्सवकारिणः।
ददात्यनुज्ञां सततं पादसंवाहने वधूः॥२३॥

प्रहर्षात् पादपतनैर्बन्धुमध्ये वधूगिरा।
पुत्रजन्मनि वृद्धेन सपत्नोऽपि निमन्त्रितः॥२४॥

घुणजग्धस्य दग्धस्य तरोर्जातोऽयमङ्कुरः।
इति ब्रुवाणा वृद्धस्य प्रनृत्यन्त्युत्सवे स्त्रियः॥२५॥

षष्ठीप्रजागरेणेव वृद्धस्याजीर्णकारिणा।
पर्यन्तकारी विषमः श्वासः समुपजायते॥२६॥

धन्या त्वं वृद्धदयिते पुत्रिकाविधवाधुना।
गृहिणी स्त्रीभिरित्युक्ता बाष्पं नोज्झत्यमङ्गलम्॥२७॥

अभियुक्तैस्तथा चोक्तं कैश्चित् कुशलवादिभिः।
भाग्ययोग्यं न नारीणां यौवने म्रियते पतिः॥२८॥

मा श्रौषं मापि क्व द्राक्षं निन्द्यं सर्वापदां पदम्।
स्थविरं तरुणीभार्यं वेश्यासक्तं च निर्धनम्॥२९॥

क्व कियत् किं तवास्तीति कण्ठप्राप्तार्धजीवितम्।
वृद्धं चौरमिवाभ्येत्य धनं पृच्छति गेहिनी॥३०॥

विरतसुरतशक्तिः स्पर्शमात्रैकभक्ति-
र्निशि निशितवचोभिर्भर्त्स्यमानो गृहिण्या।
भुजभुजगनिबद्धं स्वक्षये वृद्धयक्षः
सुभगभगनिधानं रक्षति न्यस्तहस्तः ॥३१॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते**
**देशोपदेशे वृद्धभार्यावर्णनं नाम सप्तम उपदेशः ॥**

* * * * *

## अष्टम उपदेशः - प्रकीर्णवर्णनम्

एकत्र संक्षिप्तधिया प्रकीर्णजनवर्णनम्।
देशभाषापदैर्मिश्रमधुना क्रियते मया॥१॥

गुरुः - रागद्वेषसमाकुलमुग्रमहामोहलोभदम्भभयम्।
गुरुमपि लाघवहेतुं भवमिव बहुविभ्रमं वन्दे॥२॥

गुणरहितो रुतकारी शिष्यवधूनां सदा गुरुर्गदितः।
दीनारक्षयकरणाद् दीक्षेत्युक्ता कृता तेन॥३॥

सुलभमहो बत पुंसां कलिकाले लीलयैव मोक्षपदम्।
हीषामण्डकमधुना वक्ति गुरुर्ज्ञानसर्वस्वम्॥४॥

दिविरः - लुण्ठितसकलसुरद्विजपुरनगरग्रामघोषसर्वस्वः।
पुनरपि हरणाकाङ्क्षी व्रजति गुरुं दीक्षितो दिविरः॥५॥

कलमशिखाहतजनतादीनतराक्रन्दलब्धविभवस्य।
दिविरस्योन्नतिहेतोर्यागविधाने मतिर्भवति॥६॥

वञ्चनविरचितपटलीसंग्रहमिश्रैश्च दीर्घसञ्चारः।
निगिलति मेषमशेषं तालक्षुद्रोऽथ वाचालः॥७॥

कुलवधूः - वक्त्रालोकिनि सदने प्रागल्भ्याद् दासभावमानीते।
पत्यौ विरचितवेशा याति गुरुं दीक्षिता पत्नी॥८॥

पशुसंस्पर्शाद् विमुखी समयविहीनस्य गेहिनी भर्तुः।
आयाति सदा कृत्वा गुरुसुरतपवित्रमात्मानम्॥९॥

खरतरपृष्ठकटीतटमन्थरगमना गृहानेत्य।
पादाघातैः पत्नी हन्ति पतिं भोजनस्य चिरात्॥१०॥

*भट्टः-* मधुपाने कृतबुद्धिः कौलकथानष्टजातिसंकोचः।
मत्स्यशरावकहस्तो गुरुगृहमायाति दीक्षितो भट्टः॥११॥

घटगलगलगलशब्दैर्गलपूरं मैरवं पिबन् भट्टः।
संलक्ष्यते प्रवाहे लुठित इवाम्भोभरात् खिन्नः॥१२॥

नीत्वा निखिलां रात्रिं क्षीबो वान्तासवः श्वलीढास्यः।
अभिवादनपरिशुद्धः प्रातर्भट्टोऽन्यभट्टेषु॥१३॥

*वणिक्-* निक्षेपक्षयकारी निह्नवदक्षः कलाक्षपायक्षः।
वणिगर्थोदयकाङ्क्षी गुरुगृहमाप्तो न मोक्षार्थी॥१४॥

मार्जनरेणुकरालो गुडमधुघृतपिङ्गतैललिप्तकरः।
ग्राहकघट्टनसक्तो हट्टपिशाचो वणिङ मूर्तः॥१५॥

दुर्गन्धोत्कटसंचितधननिचयक्लिन्नहट्टनिगडस्य।
वणिजः कृतो विधात्रा श्रीगुरुनाथः प्रणालनिष्कर्षः॥१६॥

*कविः-* सारस्वतमन्त्रार्थी किंचित् संस्कारलिप्तजिह्वाग्रः।
कुलवागीशीसिद्ध्यै याति गुरुं काव्यहेवाकी॥१७॥

अज्ञातधातुलिङ्गं मुखकूणनमुल्बणमपक्वम्।
अज्वरमिव वमति कविः श्लोकं कृच्छ्रात् सह प्राणैः॥१८॥

शुष्कश्लोकध्यानात् कुष्णाति दिवानिशं हृदयम्।
मन्दः काव्येन विना गत्वा कुरुते न वृत्तिं स्वाम्॥१९॥

*धातुवादी* - जरया जीर्णशरीरः कासश्वासप्रयासहतशक्तिः।
व्रजति रसायनसिद्धः स्वगुरुं वृद्धोऽप्यशेषायुः॥२०॥

मूषामुखविस्तीर्णैर्भूरिसुवर्णैः करोमि सम्पूर्णम्।
निजजनमपरं च रसैरित्युक्त्वा निर्धनो म्रियते॥२१॥

पर्यन्तातीसारे लग्ने वृद्धस्य सूतसिद्धस्य।
शुद्धिर्देहमलानां जातेत्युपजायते हर्षः॥२२॥

*द्यूतकरः*- श्वेतार्काकृतिगणपतिमन्त्रार्थी कितवचक्रविजयाय।
कितवः शफरीमण्डकसिन्दूरकरो गुरुं याति॥२३॥

मूत्रनिरोधात् कृच्छ्री सततमनशनव्रतो जितो मौनी।
धत्ते तापसवृत्तिं चित्रं संसारवञ्चकः कितवः॥२४॥

भस्मविलिप्तशरीरः सततं नग्नः कपालपाणिश्च।
ईश्वररूपोऽपि भृशं दारिद्र्यनिकेतनं कितवः॥२५॥

*बुद्धिविहीनः*- गुरुरिति वितरति सर्वं पशुसंकाशो गतानुगतिः।
बुद्धिविहीनः शिष्यः केवलभक्तो गलाटः ...मध्यः॥२६॥

*गुरुभक्तः*- यागगृहेष्वासन्नो भोजनपानैकसेवकः शिष्यः।
चौरस्याप्यतिचौरश्चरति सदा वञ्चकस्य गुरोः॥२७॥

जय जय भगवन् मोक्षक्षपणैकनिमित्तदत्तसंसार।
मग्नमधर्मपथे मामुद्धर नाथ स्वहस्तेन॥२८॥

इत्यादिस्तुतिवचनैः पादाग्रालीनमस्तकः स गुरोः।
भुङ्क्ते पिबति च दम्भाद् भक्तिविहीनो महाधूर्तः॥२९॥

*वैणिकः*-आह्वानेऽपि विसर्जनकारी देवस्य घर्घरैर्गीतैः।
तुम्बकवीणास्कन्धः प्रविशति यागे गुरोः शिष्यः॥३०॥

सोत्कण्ठेषु श्रोतृषु कृच्छ्राद् दिवसेन सारणां दत्त्वा।
तन्त्रीघर्षणखषखषशब्दैः श्रुतिशूलमाधत्ते॥३१॥

नारदतुम्बुरुगर्वः स्वरटांकारशब्देन।
मुहुरीक्षते मुखानि श्रोतृणां साधुवादाय॥३२॥

वैद्यः- आतुरधनसम्पूर्णचूर्णार्धश्लोकपाठपाण्डित्यः।
वैद्यो गृहमेति गुरोः शिष्यधनव्याधिभक्षस्य॥३३॥

हृदयविहीनो धूर्तः संग्रहरहितः स वञ्चको वैद्यः।
वक्ति न दोषान् दोषी चरकश्चरकं न जानाति॥३४॥

शब्दाटोपैर्भयकृद् दुःसहतरसंनिपातहतलोकः।
वैद्यो विद्युदिवोग्रः पतति निधानेषु सदनेषु॥३५॥

*निर्गुटः*- यूकाङ्गश्चुल्लमुखश्चन्द्रापीडान्वयी नयनपीडः।
कुलगुरुमेति ग्रामात् तण्डुलतस्त्रां (?) वहन् कक्षे॥३६॥

चूर्णहरिद्रारञ्जितनवहिमसूत्राभशीर्षशाटाकः।
खञ्जन्या सितसङ्कटविकटामोचोटनिर्गताङ्गुष्टः॥३७॥

ऋणराशिर्लेखशतैर्भुक्तफलो निर्गुटः कुटुम्बिभटैः।
नीराजदण्टभीत्या प्रविशति वर्षेण राजकुलम्॥३८॥

**पण्डितः**-चरितैर्गौरवहेतुर्मूर्खाणां पण्डितो गुरुं याति।
पदमन्दसानुनासिकदीर्घपदैर्जनितशिरः शूलः॥३९॥

वाक्यसमन्वयहीनो मेलाकलमस्फरभारमलपत्रः।
विपरीतच्छिन्नार्थैः पठति पदैष्टिप्पिकाबन्धैः॥४०॥

विद्वानसाधुशब्दोविस्मृतलिङ्गो नपुंसकप्रकृतिः।
अविदितसकलसमासोऽसत्सु सदा द्वन्द्वमेव जानाति॥४१॥

नासा(?) स्थूत्कृतिमिश्रैर्मिथ्याकासैः सकण्ठटाङ्कारैः।
पृष्टो विध्नं कुरुते विस्मृतलट्प्रत्ययो विद्वान्॥४२॥

**लेखकः**- मिथ्या प्रापः प्रातर्दाता सर्वस्य चर्मकार इव।
लिखति भगार्चनकल्पं याति गुरुं लेखको भक्तः॥४३॥

संकरकृद् वर्णानां विबुधानां पतितपङक्तिभिर्भयदः।
सततामेध्यः पापी कलिकालो लेखकः साक्षात्॥४४॥

आकारशीर्षहारी नवदरकारी पदार्थसंहारी।
अक्षरभक्षकमेलालिप्तमुखो लेखकः साक्षात्॥४५॥

*जटाधरः*- नयनशिवः खल्वाटो......दन्तुरश्च रूपशिवः।
जटिनो विशन्ति यागे ध्यानशिवस्तन्त्रमन्त्रहीनश्च॥४६॥

त्रिफलाक्षालनविमलो धूपाढ्यो भस्ममुष्टिहतयूकः।
वेश्यानामुपधानं धन्यो जटिनां जटाजूटः॥४७॥

तन्त्रस्थानायातः प्रायतपोभिः शटीजपध्यानैः।
अश्नाति मठतपस्वी शिवतासिद्ध्यै पुनर्विषमः॥४८॥

*रण्डा*- कुशतिलराजतवालिः कलितकरा स्नानदानजपनिरता।
मधुमांसाशनहीना रण्डा त्राणं गुरुं स्मरति॥४९॥

श्राद्धे भर्तुरविद्यां त्यक्त्वा सा भट्टभोजकश्राद्धम्।
भक्त्या मृतकोद्धारे जघनं हस्ते गुरोः क्षिपति ॥५०॥

मण्डितपीवरजघना घनकुचकलशा विलोलाक्षी।
अस्तु सुखाय विटानां नवरतरसवाहिनी रण्डा ॥५१॥

इत्युद्देशनिदर्शनेन विविधं यत् किंचिदुक्तं मया
तत् सर्वं स्मितकारणं सहृदयाः शृण्वन्तु सन्तः क्षणम्।
क्षेमेन्द्रः प्रणतिं करोति न पटुर्लोकोपहासेष्वलं
किन्त्वेष व्यपदेशतः प्रतिपदं देशोपदेशः कृतः ॥५२॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते देशोपदेशे प्रकीर्णवर्णनं नाम अष्टम उपदेशः ॥**

* * * * *

दीर्घा दूरे दुराशा खलमुखरमुखालोकने का कथैव
सेवासन्तापशान्तिः प्रशमपरिचिता स्वान्तसन्तोषलक्ष्मीः।
सर्वं श्लाघ्यं वदन्ते पयसि बुसरजः किन्त्वयं दोषलेशाद्-
यस्योन्मेषः कथानां हृदयपरिमलः शुद्ध्यते केन सार्धम्॥१॥

दर्पान्धो नगरे तथा परगुणोत्कर्षे महामत्सरो
ग्रामे शेषवृषाशयस्तरुशिलाप्रायः परो गह्वरः।
सोन्मेषप्रतिभः प्रगल्भवचसामन्तश्चमत्कारिणां
चित्रं नास्ति विचारचारुचतुरः प्रत्युत्तरार्हः सुहृत्॥२॥

**कृतिः क्षेमेन्द्रस्येति शम्।**

**॥ देशोपदेशः समाप्तः ॥**

* * * * *

# ३. नर्ममाला

## प्रथमः परिहासः

गृहकृत्याधिपतिः-

येनेदं स्वेच्छया सर्वं मायया मोहितं जगत्।
स जयत्यजितः श्रीमान् कायस्थः परमेश्वरः ॥१॥

अस्ति स्वस्तिमतामग्र्यं मण्डितं बुधमण्डलैः।
खण्डिताखण्डलावासदर्पं कश्मीरमण्डलम्॥२॥

यस्मिन् प्राज्यभुजस्तम्भस्तम्भिताहितविक्रमः।
त्रिविक्रम इव श्रीमाननन्तो बलिजिन्नृपः ॥३॥

तेन प्रजोपसर्गेषु वारितेषु विवेकिना।
दुर्नियोगिषु सर्वेषु नीतेषु स्मृतिशेषताम्॥४॥

विदग्धचूडामणिना केनचित् केलिशालिना।
विद्वद्गोष्ठीगरिष्ठेन कश्चित् सहृदयो जनः ॥५॥

हासायातीतकायस्थचरितं कर्तुमीरितः।
करोति तत् प्रसङ्गेन दुराचारविडम्बनाम्॥६॥

कृतविश्वप्रपञ्चाय नमो मायाविधायिने।
उत्पत्तिस्थितिसंहारकारिणे पुरहारिणे॥७॥

व्यापिने जन्महीनाय निर्गुणाय कलाभृते।
सर्वाधिकारिणे सर्वकालकूटाशनाय ते॥८॥

पुरा हतेषु दैत्येषु विष्णुना प्रभविष्णुना।
दुःखितो दीर्घवैराग्यस्तद्गेहगणनापतिः ॥९॥

गत्वा वैतरणीतीरं तपो वार्षसहस्रकम्।
स्वमूत्रचुलकाहारः सुरवैराच्चकार सः ॥१०॥

तुष्टस्तमेत्य वरदः कलिः साक्षादभाषत।
सर्वदेवविनाशाय गच्छ वत्स महीतलम् ॥११॥

अनेन कलमास्त्रेण मद्दत्तेन प्रहारिणा।
विच्छिन्नदीपकुसुमान् धूपहीनान् निराम्बरान् ॥१२॥

भ्रष्टालयान् धूलिलिप्तान् हाहाभूतान् श्वभिर्वृतान्।
करिष्यसि सुरान् सर्वान् भक्तपानीयकाङ्क्षिणः ॥१३॥

जगति ब्राह्मणानां च वृत्तिच्छेदे त्वया कृते।
यज्ञच्छेदाद् विनंक्ष्यन्ति दिवि देवा न संशयः ॥१४॥

दैत्यक्षये कृते यस्माद् भवता दिवि रोदितम्।
तस्मात् त्वं दिविरो नाम भुवि ख्यातो भविष्यसि ॥१५॥

मषी सकलमा यस्य काली कवलिताखिला।
सदा सकलमायस्य तस्य सर्वार्थसिद्धिदा ॥१६॥

त्वद्वंशेऽत्र भविष्यन्ति दैत्या दिविररूपिणः।
यैरियं लब्धविभवैः पृथिवी न भविष्यति ॥१७॥

इत्युक्त्वान्तर्हिते तस्मिन् कलौ कल्मषमानसः।
याति काले सुविपुले महीमवततार सः ॥१८॥

सौनिकेन प्रजातोऽथ भूतले मर्मघातिना।
स कुद्दालकभार्यायां जगदुन्मूलनव्रतः ॥१९॥

तीक्ष्णैस्तदन्वये जातैः सर्ववृत्तिविलोपिभिः।
रूक्षैर्न कस्यचिन्मित्रैः पापैः सर्वापहारिभिः॥२०॥

कल्पान्तैरिव सर्वत्र ग्रस्तस्थावरजङ्गमैः।
मषीविलिप्तसर्वाङ्गैः कालेनालिङ्गितैरिव॥२१॥

अधोगतैर्मृदुतरैः स्तब्धैरभ्युद्गतैः क्षणात्।
पुरीषैरिव कायस्थैः कायस्थैर्दोषकारिभिः॥२२॥

सेवाकाले बहुमुखैर्लुब्धकैर्बहुबाहुभिः।
वञ्चने बहुमायैश्च बहुरूपैः सुरारिभिः॥२३॥

व्याप्तासु नगरग्रामपुरपत्तनभूमिषु।
तस्मिन् काले मषीलिप्तकलमेव खमुल्लिखन्॥२४॥

ननर्त कर्तरीहस्तो भूर्जप्रावरणः कलिः।
भस्त्राकक्ष्याभिधानोऽयं सर्वभक्षो महासुरः।
जातो जगत्क्षयायेति पिशाचनिचया जगुः॥२५॥

देवापहारिणा तेन गोघासलवणच्छिदा।
भुज्यते पीयते भूरि दिविरेण दिवानिशम्॥२६॥

भक्त्या भगवतो विष्णोस्त्रैलोक्याक्रमणे पुरा।
धर्मः प्रयातो द्रवतां मषीरूपेण तिष्ठति॥२७॥

देवनागमनुष्याणां नित्यनैमित्तिकच्छिदः।
तस्य कायस्थनाथस्य त्रैलोक्याक्रमणे पुनः॥२८॥

कलिः प्रयातो द्रवतां मषीरूपेण तिष्ठति।
यथा स्वर्गप्रदा गङ्गा तथैषा नरकप्रदा॥२९॥

व्यथितः प्रथितैर्ग्रामैर्निगडैर्लगुडैस्तथा।
भयाद् वैराग्यमापन्नः स बभूव महाव्रती॥३०॥

भग्नव्यथोऽथ सन्त्यज्य व्रतं प्रायाद् दिगन्तरम्।
कालेन विस्मृतोऽभ्येति भूर्जज्ञोऽलीकनिःस्पृहः॥३१॥

क्रमाद् ग्रामनियोगेन नगरे गणनापतेः।
दम्भसम्भावितः प्राप गृहकृत्यं विधेर्वशात्॥३२॥

तस्यानुजीविभिः क्रूरैरनुवर्तनजीविभिः।
वसुहीना वसुमती कृता प्रकटतस्करैः॥३३॥

दम्भध्वजो निष्प्रपञ्चो लुब्धकः कलमाकरः।
सूचीमुखो भूर्जगुप्तो महीमण्डश्च दुःसहः॥३४॥

दैत्यावताराः सप्तैते तन्माहात्म्यान् नियोगिनः।
लुण्ठ्या वध्याश्च पूज्या ये सर्व इत्यवदन् मदात्॥३५॥

उपतापो वज्रतापः परिघो द्वारभञ्जकः।
धूमकेतुः कपिमुखः कुक्षिभेदो गृहोल्मुकः॥३६॥

अष्टौ पिशाचास्तस्यैते भटमुख्याः पुरःसराः।
मर्त्यलोकविनाशाय बभ्रमुर्यष्टिपाणयः॥३७॥

स वृतः सेवकशतैः सदा दम्भहरार्चने।
स्तोत्रं पठति हाहेति कुर्वन् साश्रुविलोचनः॥३८॥

सुगिरा चित्तहारिण्या पश्यन्त्या दृश्यमानया।
-ह्यः कियन्तो मया दत्ताः प्रायस्था विजयेश्वरे॥३९॥

जयत्युल्लासितानन्तमहिमा परमेश्वरः।
आदौ स्थितानामुपरि प्रयान्त्वेते त्रिसप्ततिः ॥४०॥

यः स्फीतः श्रीदयाबोधपरमानन्दसम्पदा।
प्रायस्थाने मृता भट्टाः कृष्यन्तां गुल्फदामभिः ॥४१॥

विद्योद्द्योतितमाहात्म्यः स जयत्यपराजितः।
निर्धामधूमकर्तारो ग्रामान् यान्तु नियोगिनः ॥४२॥

सर्वानन्दस्वरूपाय सर्वमाङ्गल्यहेतवे।
सर्वस्वहरणं कृत्वा वध्या दण्डनिषेधिनः ॥४३॥

सर्वक्लेशापहर्त्रे च चिद्रूपब्रह्मणे नमः।
पीडिताः प्रस्रवन्त्येव प्रजा गुग्गुलुबीजवत् ॥४४॥

इत्यादिस्तोत्रमुखरो घण्टाबधिरिताखिलः।
समादिश्याविशच्चाशु नियोगिनिबिडां सभाम् ॥४५॥

मरीचः प्रथितस्थानमास्थितो जनदुष्कृतैः।
ददर्श दूरादायान्तं कार्यदूतं नियोगिनम् ॥४६॥

पदालग्नाशिवं देवगृहोच्चाटनचाक्रिकम्।
सुसूक्ष्मदलविन्यासविभागोन्नतटिप्पिकम् ॥४७॥

अतसीकुसुमच्छायं मृदुस्पर्शाङ्गरक्षकम्।
जात्यकस्तूरिकामोदस्थूलतूलपटीवृतम् ॥४८॥

हस्ताङ्गुलीन्यस्तहैमत्रिगुणावर्तवालिकम्।
दूराध्वक्लमसोच्छ्वासातुकुर्वाणं विकृतीर्मुखे ॥४९॥

दृष्ट्वा पिशुनमायान्तं तं भागवतमन्तिके।
उत्थाय हर्षादालम्ब्य पाणौ पार्श्वे न्यवेशयत्॥५०॥

**चाक्रिकः पुंश्चलको वा-**

पिशुनेभ्यो नमस्तेभ्यो यत्प्रसादान् नियोगिनः।
दूरस्था अपि जायन्ते सहस्रश्रोत्रचक्षुषः॥५१॥

सोऽब्रवीत् त्वामहं श्रुत्वा स्थितं शक्तिमतां धुरि।
प्राप्तो देवगृहादेष राशिमार्गप्रदर्शकः॥५२॥

वस्त्रालङ्काररत्नादि यत् किञ्चिद् देववेश्मसु।
विद्यमानमशेषं तत् करिष्ये प्रकटं तव॥५३॥

विजयेश्वरवाराहमार्तण्डादिषु विद्यते।
त्वद्भाग्योपचयाद्राशिरपोष्यपरिपूरकः॥५४॥

अभीरुरपवादेषु निःशङ्कः पातकेषु च।
तत्र तीक्ष्णो भृशं शश्वत् क्रियतां परिपालकः॥५५॥

स चास्ति भुवि विख्यातः कायस्थो भवता समः।
विना धनं विनायासं सर्वस्वहरणं विना॥५६॥

ब्रह्महत्या न गण्यन्ते गोवधेषु कथैव का।
प्रभुभक्तिकृता येन मूलादुन्मूल्यते जनः॥५७॥

अन्येऽपि सन्ति सर्वत्र तद्विधस्तु न लभ्यते।
नीतः स्वजनको येन निधनं बन्धने धनी॥५८॥

यदि नाम भवत्पुण्यैः स समेष्यति मद्गिरा।
तत् स्वगेहं निधानानां विद्धि स्वच्छन्दमन्दिरम्॥५९॥

इति ब्रुवाणमसकृत् कर्णे विहितसंविदम्।
महत्तमस्तमवदत् तूर्णमानीयतामिति ॥६०॥

ततः स सत्वरं द्वित्रैरादराय गतागतैः।
तमानिनाय निश्चित्य पापिनं परिपालकम्॥६१॥

**परिपालकः**

काष्ठस्तब्धोन्नतग्रीवः सनिः स्पन्दोर्ध्वलोचनः।
कामलाहरितच्छायशिरः शाटककञ्चुकः॥६२॥

लम्बमानेन महता मेध्यक्रीडानुकारिणा।
उदरेण दरेणेव व्याप्तः पिशिनवेश्मना॥६३॥

तीव्रदर्पो महाकोपः प्राणहृन्निष्प्रतिक्रियः।
सोपद्रवः सोपतापः सन्निपात इव ज्वरः॥६४॥

स महान्तं समासाद्य दुःसहं दंसनं विटम्।
लीलयैव वशीकृत्य लेभे देवगृहान् बहून्॥६४॥

ततो मूर्तैरिवायासैः सहसैव पुरः सरैः।
अर्घवेलां ययौ कर्तुमसङ्ख्यैः परिवारितः॥६६॥

काचरोऽयं हिरण्याक्षः पूर्ववैरमनुस्मरन्।
देवानवाप्तः संहर्तुमिति तं बुबुधे जनः॥६७॥

भयात् पलाय्य यातेषु धनिकेषु सुरालयात्।
तमयुः पुनरक्षीणा देवागारनिवासिनः॥६८॥

भटैरर्गलितद्वारकवाटस्फोटनाकुलैः।
प्रारब्धे गृहभाण्डादिविलुण्ठनमहोत्सवे॥६९॥

सहसा हृतवस्त्राणां गृहिणीनां समाययौ।
सन्त्रस्तबालकानां च करुणो रोदनध्वनिः ॥७० ॥

**लेखकोपाध्यायः**

अथाययौ चिरावाप्तबहुहर्षस्खलद्गतिः।
कृशः शनैश्चराकारो धूसरः क्षुत्क्षतोदरः ॥७१ ॥

बहुच्छिद्रशिरः शाटलडत्पर्यन्ततूस्तकः।
शतचक्रलिकास्यूतमललिप्ताङ्गरक्षकः ॥७२ ॥

शीर्णजीर्णपटीगुप्तकक्ष्यानियमिताञ्चलः।
याचितानीतसंशुष्कपादत्रव्यथितः खलः ॥७३ ॥

लेखाधिकारी निःस्वोऽपि लेखसंस्कारगर्वितः।
परिपालकनिर्दिष्टो वायुभक्ष इवोरगः ॥७४ ॥

तद्गेहिनी शीर्णवस्त्रखण्डावृतकटीतटा।
कज्जलालिप्तनासाग्रा लडन्मृत्कर्णभूषणा ॥७५ ॥

क्षुधितापत्यकुपिता शूर्पार्धावृतमस्तका।
साक्षतापूपधूपाद्यैर्गणाधिपमपूजयत् ॥७७ ॥

सोऽप्यनेकार्थसन्देशानाकर्ण्यावहितः प्रभोः।
दाप्यप्रसारितकरो लेखानस्खलितोऽलिखत् ॥७८ ॥

धावत्कलमचीत्कारतारः कपिरिवाहतः।
दीनारान् गणयन्नाशु ददौ लेखशतद्वयम् ॥७९ ॥

परिपालकपादानां यत् किञ्चिदुपयुज्यते।
दर्वी बृसी पटलिका कुण्डभाण्डकरण्डिका॥८०॥

इत्यादिलेखदानेन प्रसिद्धिं परमां गतः।
सोऽचिरेणाभवत् पुष्टः पूर्णपाणिर्मदोद्धतः॥८१॥

लेखपत्राणि विगलल्लोचनः परिवाचयन्।
चकार विकृतीस्तास्ता नानाभ्रूनेत्रकुञ्चनैः॥८२॥

**गञ्जदिविरः**

ततो गृहीतमध्यस्थच्छत्रभङ्गव्यवस्थया।
आययौ गञ्जदिविरो भट्टभागवतार्थितः॥८३॥

स प्रायस्थखलीकारान् मानी सन्त्यक्तकर्पटः।
शिरः शाटकविन्यासश्वित्रितार्धललाटभूः॥८४॥

सर्वदेवगृहग्रामराशिसंहारतत्परः।
रज्जुशेषीकृताशेषनिर्जरः परिपालकः॥८५॥

स प्राप्य प्रददौ दीर्घां शरत्षणमासकल्पनाम्।
यस्या मध्येऽस्ति लिखितं सार्धं लक्षचतुष्टयम्॥८६॥

स्वार्थोपायं ततः पृष्टस्तेन स्वीकारसंविदा।
उवाच भागसन्तोषात् किञ्चित्सद्भावमास्थितः॥८७॥

अस्मिन् देवगृहे ते ते प्रसिद्धाः परिपालकाः।
विक्रीतनिजसर्वस्वाः प्रयाता मद्विरोधिनः॥८८॥

भवतोऽद्य तु कर्तव्या स्नेहादुपकृतिर्मया।
कुलाचार्यः स भगवानेको हि गुरुरावयोः ॥८९॥

स्वीकृतैरिह दानेन पञ्चषैश्चक्रिकाशिवैः।
भुज्यते निखिलं देवद्रव्यं भुक्तिश्च पार्षदी ॥९०॥

विक्रीतशेषं यत् किञ्चिद् विद्यते सुरमण्डले।
तन्मतेनैव तत् सर्वं भुज्यते निजवत् त्वया ॥९१॥

तथाहि ताम्रजः पूर्वं महान् नीतो घटो मया।
भक्तितस्तच्छतांशेन कृता घण्टा सुरालये ॥९२॥

कालेन घण्टां विक्रीय तदंशेन कृता घटी।
क्रमेण भक्षिता सापि कृता शेषेण घण्टिका ॥९३॥

चिरं सञ्चूर्णिता सापि कृता सूक्ष्मझिलीमली।
इति कृत्वा ततः स्तोकघण्टांशः परिपालितः ॥९४॥

एवं चतुर्भुजा लुण्ठिः क्रियते शिवपूजया।
सन्ति धान्यसहस्राणि क्रियतां भवतात्र तु ॥९५॥

क्रयविक्रयिका नाम ततो विज्ञप्यसे मया।
इत्युपायशतैस्तैस्तैस्तदुक्तैः परिपालकः।
जरठाखुरिवाक्षोटं शून्यं चक्रे सुरालयम् ॥९६॥

**मार्गपतिः, व्यापारिको वा**

अथान्यराशिप्रवणः प्रवीणः साधुलुण्ठने।
आपत्प्रशमनं प्राप ग्रामः तस्मात् नियोगवित् ॥९७॥

तस्यावस्करसंछन्नमहारौरवसोदरे।
खण्डस्फुटितनासाग्रवारिधानीमहाधने॥९८॥

दामप्रोतजरद्द्वारस्खलत्खडखडारवे।
यस्य स्थितिरभूद् गेहे कुकुटीकोटरोदरे॥९९॥

दग्धकम्बलिकाखण्डकृतमुण्डावगुण्ठनः।
श्वजग्धजीर्णशीर्णाग्रोपानत् खञ्जः शनैर्व्रजन्॥१००॥

कर्पटीतिलमृद्दर्भपवित्रार्घसमुद्गकैः।
दारुपात्रीं वहन् पूर्णां भग्नामाखुविखण्डिताम्॥१०१॥

स्नायी जपोच्चलत्कूर्चः सदाचारपथे स्थितः।
दिनार्धमपठत् स्तोत्रं गत्वा यः सुरमन्दिरम्॥१०२॥

गोप्रदक्षिणकृद् विप्रप्रणतो द्वादशीव्रतः।
ददौ दीनजने मार्गे यत्नेनैककपर्दिकाम्॥१०३॥

तस्यैव दैवादायातकार्यस्याशु नियोगिनः।
उपस्करणभाण्डादिपरिपूर्णमभूद् गृहम्॥१०४॥

शिशिरे यस्य नाङ्गारं प्रददुः प्रातिवेश्मिनः।
अयाचितं ददुस्तस्य वस्त्रालङ्करणेप्सितम्॥१०५॥

ततः सुधाधवलितं तस्य सम्मार्जिताङ्गनम्।
बहुदासमभूद् गेहं सिन्दूरोदरमन्दिरम्॥१०६॥

मिष्टभोजनसञ्जातनवलावण्यसच्छविः।
तस्याभूत्तरुणी भार्या दिनैरप्सरसः समा॥१०७॥

ततोऽपि व्रजतो ग्रामं करण्डशयनादिकम्।
निर्ययौ पुरतश्छत्रं कलशं ताम्रकुण्डकम्॥१०८॥

शक्तिः पतद्ग्रहो घण्टा ताम्रपात्रमुपानहौ।
करिका भगवत्पादा भूर्जभस्त्राथ स्रुक्स्रुवौ॥१०९॥

अक्षसूत्रं मषीभाण्डं दर्पणः स्नानशाटिका।
सम्पुटीटुप्पिकाखड्गाः पादुके मन्त्रपुस्तिका॥११०॥

नक्षत्रपत्रिका खड्गपत्रं लोहितकम्बलः।
पवित्रसूत्रकं तन्त्री सूची कलमकर्तरी॥१११॥

वचा जतुमयी रक्षा क्षुरिका योगपट्टकः।
स्तोत्रमन्त्राणि गङ्गामृद् बिल्वमुच्छिष्टफालकम्॥११२॥

इत्येकीकृत्य तस्याग्रे भाण्डोपस्करणं ययौ।
इतस्ततः समानीतमपुनर्दानचेतसा॥११३॥

उच्चैः कृतलतापाणिर्भाटकानीतघोटकः।
भाङ्कारपार्ष्णिप्रहतिर्वदनेनाञ्चता मुहुः॥११४॥

सन्तर्जयन्निव जनं ज्यो .....र्तमिव कुर्वता।
शिथिलस्थूलवसनः स ययौ पुरमुच्छलन्॥११५॥

प्रविवेश ततो ग्रामं सुधौतसितकर्पटः।
क्षयाय ग्राममत्स्यानां वृद्धो बक इवागतः॥११६॥

अथ भोजनचर्यादिव्यपदेशैः सहस्रशः।
तस्य यक्षेश्वरस्येव निधानान्याययुः पुरः॥११७॥

योगी हरणचिन्तासु प्रयोगी भूर्जयोजने।
वियोगी निजदाराणां भोगी नरकसम्पदाम्॥११८॥

नोपयोगी फलोत्पत्तौ दोषोद्योगी तु केवलम्।
अशोकः सततं रोगी नियोगी जयति प्रभुः॥११९॥

वृक्षारोहसहस्रेषु प्रायः क्लान्तशतेषु च।
ग्रामे तस्य विपत्रेषु नरकप्रतिमाभवत्॥१२०॥

गवां दण्डाय यश्चक्रे निधनावधि बन्धनम्।
का नाम गणना तस्य नृषु सर्वापराधिषु॥१२१॥

सर्वस्वहरणं बन्धो निग्रहो गृहभञ्जनम्।
इति तस्य मुखाद् घोरं न चचाल वचः सदा॥१२२॥

पञ्चषाः सततं तस्य करभा इव भारिकाः।
घृतमाक्षिकदीनारमरिचार्द्रकसैन्धवम्॥१२३॥

मुद्गकम्बलमायूरोपानन्मेषविहङ्गमम्।
बिसद्राक्षामधुघटाक्षोटपर्यङ्कपीठिकम्॥१२४॥

कांस्यताम्रायसानेकगृहोपस्करणादिकम्।
निन्युस्तत् तदविश्रान्ता गृहं यच्छावद्वचः॥१२५॥

दण्डत्याजनलेखांश्च स प्राप्तान् स्वामिनोऽन्तिकात्।
साधिक्षेपं सथूत्कारं चकार तिलशो नखैः॥१२६॥

नित्यं मांसघृताहारः स राजपुरुषे स्थिते।
भुङ्क्ते विलवणं दम्भादेको मुद्गपलद्वयम्॥१२७॥

**ग्रामदिविरः**

निरस्य मूलदिविरं चौर्याणामचिकित्सकम्।
चकार दारिकं सोऽथ चिकित्साचतुरं परम्॥१२८॥

स मुक्तो बन्धनात् तेन क्षिप्रं द्वादशवार्षिकात्।
लिलेख कूटकपटप्रकटाक्षरकोविदः॥१२९॥

कृत्ताङ्गुष्ठः स वामेन पाणिना दिविरो रहः।
खलस्तस्य गृहं गत्वा विदधे भूर्जयोजनम्॥१३०॥

गृहीत्वा मद्यकलशं स जानुयुगलान्तरे।
मुहुर्मुहुः परिमितं पिबन् बहुतरं शनैः॥१३१॥

लिलेख चीरीचीत्कारतारं कलमरेखया।
अन्त्याङ्गुल्या सनिर्घोषं लालयोत्पुंसिताक्षरः॥१३२॥

विलुम्पन् विप्रगोदेवनित्यनैमित्तिकव्ययम्।
श्रीचर्मकारगुरुणा रुग्णनाथेन भाषितम्॥१३३॥

शिवभक्तिभराक्रन्दं मुहुर्गायन् खरस्वरः।
यूकाः पिबन्नखाग्रेण मुहुरुच्चित्य कम्बलात्॥१३४॥

मुहुर्निः श्वस्य निःश्वस्य निन्दन् संसारचेष्टितम्।
व्ययेन स समीकुर्वन् प्रवेशं हर्षनिर्भरः॥१३५॥

आविष्ट इव वेतालश्चकम्पे मद्यघूर्णितः।
उत्सरत्पटलीमिश्रकङ्कावलयमालितः॥१३६॥

स्थूलभूर्जफडत्कारस्फारवाद्यरसाकुलः।
कर्परीच्छिद्रनिर्यातव्यावल्गिवृषणद्वयः॥१३७॥

लुठत्पूर्णमषीभाण्डच्छटाच्छुरितविग्रहः।
ननर्त दिविरः क्षीवो नग्नो भग्नवृसीघटः॥१३८॥

धूसरो मलदिग्धाङ्गः स पिशाच इवोत्थितः।
जनजीवापहारेण ननन्द मदनिर्भरः॥१३९॥

कक्षाकुट्टनसङ्घट्टटाङ्काराराावकारिणः।
स्कन्धवाद्यरसः कोऽपि तस्याभून्निर्जने चिरम्॥१४०॥

कायस्थसुन्दरी

व्यापृतोऽप्यनिशं तेन दिविरेणापहारिणा।
वातेनेवानलः सार्धं जज्वाल जनकाननम्॥१४१॥

अचिरादथ संवृत्ते गृहे तस्य महाधने।
अलङ्कृता माल्यवती ताम्बूलदलनव्रता॥१४२॥

गृहिणी दर्पणपरा राजमार्गावलोकिनी।
बभार तद्विरहिता भूपालललनामदम्॥१४३॥

हारो भारायते हेमताटङ्कं मे न वल्लभम्।
धिग् वणिग्वनितायोग्यां गुर्वीं कनकसूत्रिकाम्॥१४४॥

एकैवैकावली कान्ता ललितेयं प्रिया मम।
इति दर्पगिरा तस्या नाभवत् कस्य विस्मयः॥१४५॥

अहो भगवती कार्यसर्वसिद्धिप्रदा मषी।
अहो प्रबलवान् कोऽपि कलमः कमलाश्रयः॥१४६॥

या पपौ याचितं चामं भग्नस्यूताश्मभाजने।
तयैव पीयते रौप्यपात्रे कस्तूरिकामधु॥१४७॥

इत्यधस्तां समालोक्य हर्म्ये कायस्थसुन्दरीम्।
तत्प्रातिवेश्मिकसुताः कुलीना जगुरङ्गनाः ॥१४८॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां
नर्ममालायां प्रथमः परिहासः ॥

* * * * *

## द्वितीयः परिहासः

**पारदारिकः**

साపि बालकुरङ्गाक्षी यौवनेन प्रमाथिना।
भिद्यमानेव दर्पेण न ददर्श वसुन्धराम्॥१॥

श्वश्रूजनविरुद्धा सा तरुणप्रातिवेश्मिका।
परिहासकथाशीला गीतवाद्यानुरागिणी॥२॥

चारुसौरभलिप्ताङ्गी न सा जग्राह कञ्चुकम्।
दर्शयन्ती स्तनाभोगमर्धस्रस्तशिरोंऽशुका॥३॥

जृम्भमाणा परावृत्य साचीकृतविलोचना।
जनमैक्षत लोलाक्षी वलितत्रिवलीलता॥४॥

अयत्नसाध्यां तां वीक्ष्य विटा ललितलोचनाम्।
बभ्रमुस्तद्गृहोपान्ते निर्व्यापारगतागताः॥५॥

चिरं तदर्थिनश्चित्रवस्त्रवेषविभूषिताः।
सुगन्धितैलताम्बूलधूपादिव्ययकारिणः॥६॥

नियोगिधनबद्धाशाः स्त्रीरत्नप्राप्तिसोत्सुकाः।
सस्मिताक्षिनिकोचादिविकारशतकारिणः॥७॥

तज्ज्ञैरप्यपरिज्ञातपदाश्छिद्रप्रतीक्षिणः।
दंशकामा भुजङ्गास्ते लीलाकुटिलगामिनः॥८॥

शून्यां देवकुटीं गत्वा प्रसिद्धाः पारदारिकाः।
द्वित्रास्तत्सङ्गमोपायं प्रातिवेश्म्या व्यचिन्तयन्॥९॥

एकोऽवदत् तत्र विटः सुलभैषा न संशयः।
खल्वाटं तुन्दिलं वृद्धं स्वपतिं सहते कथम्॥१०॥

नित्यप्रवासिनं लुब्धमीर्ष्यालुं सुरतासहम्।
मत्तच्छागमदामोदं बहलष्ठीविनं शठम्॥११॥

सुतोपरोधो वन्ध्याया नास्या न च वयः क्षयः।
न च दुःखाभिभूतासौ रागदग्धा न लक्ष्यते॥१२॥

एतैर्हि दोषैर्नायान्ति दुःशीला अपि योषितः।
अपरः प्राह भवता साभिप्रायं विचिन्तितम्॥
प्रत्यासत्त्या परिचये किन्तु यत्नो विधीयताम्॥१३॥

विवाहयज्ञतीर्थादिदेवयात्रोत्सवैर्विना।
न लभ्यते परिचयः परदारोपसर्पणे॥१४॥

सुचिरं प्रेक्षणं लोलकुन्तलोत्तालनं मुहुः।
तत्सम्बद्धाः सापदेशाः कथास्त्यागप्रकाशनम्॥१५॥

भोगसौभाग्ययशसां प्रसिद्धिप्रतिपादनम्।
मन्दमन्दं वचः स्वैरः तद्वाक्यश्रवणादरः॥१६॥

तन्मुखन्यस्तनयनं चुम्बनालिङ्गनं शिशोः।
शिल्पसम्पादनं चास्या वस्त्रालङ्करणेप्सितम्॥१७॥

जाते परिचये माल्यताम्बूलादिसमर्पणम्।
भित्तौ निपीडनं गाढं विजने परिचुम्बनम्॥१८॥

गुह्यस्पर्शो रतिश्चेति शीलविध्वंसयुक्तयः।

इत्थं का नाम न मया कृता शीलपराङ्मुखी।
नियोगिभार्या लभ्यैव सर्वदा गमनोन्मुखी॥१९॥

**जीवनदिविरः**

अथावदत् तृतीयोऽपि स्वाधीनं सर्वमेव नः।
किन्त्वत्र विधिवैमुख्याद् विघ्नः समुपलक्ष्यते॥२०॥

योऽयं तीक्ष्णाक्षिपटले चित्रगुप्तविचेष्टितः।
निःशेषजीवनातङ्कविधायी निर्गुणान्तकः॥२१॥

भारकोच्छृङ्खलायासखण्डलेख्यादियुक्तिभिः।
निर्गुणाः प्रापिता येन गोपालपशुपालताम्॥२२॥

न कालो यदि नामासौ तत्किं जीवनहृन्नृणाम्।
पक्षाघातो न रोगश्चेत् तत् किमेकाङ्गनाशनः॥२३॥

कियन्तोऽद्य मृताः कुत्र पृच्छन्निति मुहुर्मुहुः।
मृतजीवी श्वतुल्योऽसौ भुङ्क्ते कापालिकव्रतम्॥२४॥

हरणोद्यतहस्तोऽसौ साधूनामपि वर्तते।
सदोषैर्दीयतेऽस्माभिर्नरकाय तिलाञ्जलिः॥२५॥

यद्यप्यसौ स्नुषाकामी कल्यपालकुलोज्ज्वलः।
तथापि सर्वः सर्वज्ञः परदोषानुदर्शने॥२६॥

अथवास्त्येव मे मित्रं शक्तिमान् राजवल्लभः।
वाङ्मात्रेणैव नः सर्वं संरक्षिष्यति जीवनम्॥२७॥

अगारदाहिनो धेनुस्त्रीशिशुब्राह्मणान्तकाः।
बहवो रक्षितास्तेन दिग्वार्तामात्रसेवकाः॥२८॥

**श्रमणिका**

गृहं नियोगिकान्तायाः प्रविशत्यतिनिर्भरम्।
एषा श्रमणिका नित्यं कुट्टनी वज्रयोगिनी ॥२९॥

या माता वश्ययोगानां जाराणां सिद्धदूतिका।
नरोपपत्तिदीक्षासु स्त्रीणां समयदेवता ॥३०॥

अरुन्धतीमपि क्षिप्रं प्रतारयति लीलया।
पुराणपुंश्चली सा हि जाह्नवीं मन्यते तृणम् ॥३१॥

सा समीहितमस्माकमचिरेण विधास्यति।
इत्युक्त्वा ते ययुर्धूर्ता वृद्धश्रमणिकागृहम् ॥३२॥

**दारकोपाध्यायः**

कदाचिदथ तामेव हर्म्ये हरिणलोचनाम्।
सत्रभोजनपूर्णाङ्गः पुनरायातयौवनः ॥३३॥

निर्दग्धचन्दनस्फारतिलकः पृथुजूटभृत्।
मायूरोपानदामन्दमन्दरारावगर्वितः ॥३४॥

कक्षान्तसंवृतपटो ब्राह्मणानपि न स्पृशन्।
रे रे दासीसुतेत्यादि जनं कोपेन भर्त्सयन् ॥३५॥

मलपत्रं वहन् मूर्खो ददर्श मठदैशिकः।
सहसा विस्मयाविष्टो दष्टो मकरकेतुना ॥३६॥

नियोगिगृहबालानामुपाध्यायमुपेत्य सः।
आययौ माससूल्येन नित्यमक्षरशिक्षकः ॥३७॥

लब्धप्रवेशस्तामेव ध्यायन् धूर्तः पपाठ सः।
जानन्नपि लिपिं सर्वामोङ्कारमलिखच्छनैः॥३८॥

कौतुकाद् गृहनारीभिर्वृतस्तस्थौ तदुन्मुखः।
उपाध्यायोऽपि दीनारगणनां विदधद् धिया॥३९॥

अष्टावतारस्तोत्रेण सर्वज्ञ इव गर्वितः।
दैशिकं पाठयामीति सोऽभूदधिकमुद्धतः॥४०॥

पान्तु नो भगवत्पादा जघन्यजनवत्सलाः।
परलोकस्य हन्तारो गमने क्षेमकारिणः॥४१॥

भाभूतो कुङ्कुमाद्रौ रइनइसदृशौ(?)
...मुसिमुसिलक्षणौ फेनपर्वौ (?)
...मणिकनकधरौ दिव्यगन्धानुलिप्तौ
सङ्ग्रामेण प्रविष्टौ पलुप(?)...नौ लभ्यतां राज्यलक्ष्मीः॥४२॥

गङ्गायमुनयोर्बिल्ववृषभं पूर्णकुम्भयोः।
पञ्चचन्द्रन...ली पट्टबन्धं भविष्यति(?)॥४३॥

इत्यादि दत्त्वा बालानां नित्यं सुफलकेषु सः।
वर्षं तिष्ठति निःशङ्को गणयन् मासवेतनम्॥४४॥

कर्तनं लिखनं सूचीपट्टिकावानमौषधम्(?)।
कुर्वन्नवैति पुरतः स्थितान् नो वा कुमारकान्॥४५॥

उपाध्यायेत्यभिहितो वक्ति क्रोधाग्निना ज्वलन्।
गान्धर्विकश्चर्मकृद् वा किं तवास्मीति निष्ठुरः॥४६॥

**मठदैशिकः**

सस्मितं सस्मितालापं मुहुर्गोष्ठीविधायिनम्।
नियोगिकान्ता पश्यन्ती दैशिकं नाचलत् ततः ॥४७॥

स भाषां बुद्ध्यमानोऽपि तत्तत्स्त्रीभिरुदाहृताम्।
किं भणन्तीति पप्रच्छ प्रोल्लसद्भ्रूलतो मुहुः ॥४८॥

स ताभिर्नर्मसोत्प्राससाधिक्षेपविडम्बनैः।
आयास्यमानो मत्ताभिरभूत् प्रहसिताननः ॥४९॥

नायं किञ्चिन्महाभागो जानाति न च बुध्यते।
इति नो भेजिरे लज्जां विवस्त्रा अपि तस्य ताः ॥५०॥

ऋष्यशृङ्गव्रतः सोऽथ वि.........।
तासां गोष्ठीरसाभिज्ञः स्तनौ पस्पर्श पाणिना ॥५१॥

सबीजाश्व इवोत्सृष्टो वडवामण्डले युवा।
सिषेवे ललनाः सर्वाः प्रोषितस्य नियोगिनः ॥५२॥

भ्रातृजायां स्वसारं च तां च भार्यां मृगीदृशम्।
अन्याश्चास्य सदा स्वैरमकामयत दैशिकः ॥५३॥

तास्तेन जारगुरुणा कृतदीक्षा वराङ्गनाः।
बभूवुः सर्वगामिन्यो निर्विकल्पव्रते स्थिताः ॥५४॥

**सभर्तृका**

तया श्रमणिकादूत्या ततस्तेऽपि कृतोद्यमाः।
धूर्ताः स्वाधीनतां प्राप्तां स्वैरिणीं तां सिषेविरे ॥५५॥

अथाधिकारी तरुणीं सोत्कण्ठस्तां स्मरन् प्रियाम्।
भृतवस्त्रो विवेशाशु मिथ्याग्रामचिकित्सया॥५६॥

स सेवार्थं समानीतघृतमाक्षिकसर्पिषाम्।
भारिकैर्धनिकैर्भीत्या नगरं समपूरयत्॥५७॥

प्राप्तं विलोक्य सुचिरात् तं दृष्टानेककामुका।
पीवरं ग्राम्यमासन्नरोगं पूर्णमिवाम्बुना॥५८॥

तां च मेषघृतामिक्षाकिलाटमधुसम्पदम्।
रुरोदैकेन नेत्रेण जहासान्येन तद्वधूः॥५९॥

इदं सुरुचिरं वस्त्रं क्रीतमाभरणं च ते।
तस्येतिवादिनो दृप्ता सा चक्रे सर्वमश्रुतम्॥६०॥

सा शिरोवेदनाव्याजनिबद्धाभ्यङ्गपट्टिका।
स्तनन्ती सस्वनं पत्युर्नाभवत् पार्श्ववर्तिनी॥६१॥

सा वाचालवाचालमालाकलकलाकुले।
गृहे तस्याभवद् व्यग्रग्रामदासे महोत्सवः॥६२॥

दिनान्ते बहुभक्ताशी लोहितासवदुर्मदः।
नियोगी शयने तस्थौ कुम्भकर्ण इवापरः॥६३॥

अथ कृच्छ्रादिवाभ्येत्य रात्रिशेषे तदङ्गना।
आलिङ्गने समुद्विग्ना चुम्बने वलितानना॥६४॥

रुन्धाना जघनस्पर्शमूरुस्वस्तिकनिश्चला।
गृहव्यापारखिन्नेव निद्रां चक्रे मुधैव सा॥६५॥

ततः प्रभाते प्रसृते भूर्जभाण्डादिके पुरः।
वदन्ती सर्वगात्रेषु शूलं साप्यकरोत् क्लमम्॥६६॥

अथाहूतः परिजनैर्वैद्यो मद्यामिषप्रियः।
निधिं हस्तगतं दैवान्मन्यमानः समाययौ॥६७॥

**वैद्यः**

नमो विद्याविहीनाय वैद्यायावद्यकारिणे।
निहतानेकलोकाय सर्पायेवापमृत्यवे॥६८॥

भ्रान्तो गृहशतं तूर्णं भाराक्रान्त इवोच्छ्वसन्।
ललाटस्वेदसलिलं पाणिना विक्षिपन् मुहुः॥६९॥

वहन्नौषधसङ्केतनामसंयोगचीरिकाम्।
कृतान्ताधिकृतस्याग्राद् यः प्रायस्थ(कायस्थ?) इवागतः॥७०॥

चिकित्सकोऽर्थप्राणानां व्याधीनामचिकित्सकः।
आजीवमीश्वरः शूलीः येन न त्यज्यते जनः॥७१॥

स वैद्यः कालकूटो वा व्यालो वेताल एव वा।
भूयसा याति मांसेन यः क्षिप्रमनुकूलताम्॥७२॥

स वैद्य एव कुपितो वायुरायुःक्षयङ्करः।
हस्तस्पर्शेन त्रिमलक्षालकः क्षपितेन्द्रियः॥७३॥

कृच्छ्रसंन्यासकृत् पुंसां प्राणाचार्यः किमुच्यते।
स्थितं भुक्तं नु पीतं नु वैद्येनेति प्रलापिनः।
योऽर्तिं विधत्ते यत्नेन भिषगार्तोपजीवकः॥७४॥

नगरोत्सवयात्रासु विवाहेष्वतिभोजनात्।
जनता याति यन् मान्द्यं तद् वैद्यस्य शनेः फलम्॥७५॥

गुह्याङ्गस्पर्शकृत् स्त्रीणां बह्वाशी जीवितापहः।
नृणां त्रिदोषकृत् सत्यं वैद्य एव न तु ज्वरः॥७६॥

विद्याविरहिता वैद्याः कायस्थाः प्रभविष्णवः।
दुराचाराश्च गुरवः प्रजानां क्षयहेतवः॥७७॥

उपसृत्य स पस्पर्श स्तनौ तस्याः सुसंहतौ।
कठिनौ सततस्पर्शौ खलः खलतराविव॥७८॥

लङ्घनं सहते नैषा हितं शूले न वृंहणम्।
करोतु मम चिन्तासु सर्वाहारं मया सह॥७९॥

जडा ह्यस्याः स्थिता बुद्धिर्धातुश्च विषमः स्थितः।
तस्मात् स्निग्धं दधि पूर्वमत्र योज्यं सशर्करम्॥८०॥

इत्युक्ते वैद्यनाथेन स्त्रीभिस्तूर्णं ससम्भ्रमम्।
आहूतः पादपतनैर्ज्योतिर्गणक आययौ॥८१॥

**गणकः**

ज्योतिःशास्त्रविदे तस्मै नमोऽस्तु ज्ञानचक्षुषे।
वर्षं पृच्छत्यवर्षं वा धीवरान् यो विनष्टधीः॥८२॥

ग्रहनक्षत्रताराणां संख्यानेऽप्यकृतश्रमः।
अतीतानागतज्ञानदम्भाय मलपत्रभृत्॥८३॥

तव वर्षत्रयीमध्ये कश्चिद् वित्तव्ययो भवेत्।
ज्वरश्च नेत्रपीडा च लाभांशोऽप्यविचिन्तितः॥८४॥

न कश्चिदुपकारं ते मन्यते शत्रवश्च ते।
सन्ति तेभ्यो भयं देहरक्षायां नैव बाधते ॥८५॥

दुर्बलो दृश्यसे भ्रातर्यूषं न कुरुषे कथम्।
अप्यस्ति कामला नूनं तां मन्त्रेण नुदाम्यहम् ॥८६॥

इति साधारणज्ञानमन्त्रवैद्यकमिश्रितम्।
ज्योतिःशास्त्रं विगणयन् यो मुष्णाति जडाशयान् ॥८७॥

प्राङ्नियोगिवधूवृत्तं जानन्नपि जनश्रुतम्।
धूर्तो धूलिपटे चक्रे राशिचक्रं मुधैव सः ॥८८॥

क्षिप्ते नियोगिना तत्र दीनारकुसुमोत्करे।
दम्भस्तब्धश्चिरं तस्थौ स्वाङ्गुलीगणनापरः ॥८९॥

ततोऽवदन् मन्दमन्दं प्रोत्क्षिप्तभ्रूलतो मुहुः।
इयमापाण्डुरमुखी रतिकामेन पीडिता ॥९०॥

दुर्निवारश्च नारीणां पिशाचो रतिरागकृत्।
पुनः शून्यगृहे स्नाता गुह्यकेन निरम्बरा।
गृहीतेत्यत्र पश्यामि चक्रे शुक्रसमागमात् ॥९१॥

**ख्वाशपतिः (?) तूणरक्षको वा**

ततः प्रयाते गणके चिन्तिते शुक्रपूजने।
निर्यत्पलालपूलीकः पादतो धूलिधूसरः ॥९२॥

दामबद्धकटिर्ग्राम्यः शीर्णकम्बलकावृतः।
विसृष्टं तत्सहायेन ददौ लेखं नियोगिनः ॥९३॥

एडिकाव्यपदेशेन गावः पादैर्हृता दश।
तासां मध्यान् मृताः पञ्च पञ्च शेषाः स्थिताः खले॥९४॥

तन्मुक्तये त्वरायाताः सहन्तोऽपि दिनत्रयम्।
तदभावेऽपि लाभस्ते ग्रामे दण्डः पतिष्यति॥९५॥

घृतनाडीनिमित्तेन यश्चासौ बन्धने धृतः।
सोऽपि विप्रो निराहारस्तीक्ष्णः पञ्चत्वमागतः॥९६॥

पादान्तिके च प्रहितं तस्य प्रधनपत्रकम्।
बद्धं मया तत्कलत्रं मुद्रितं सकलं गृहम्॥९७॥

यान् स्कन्धकनिमित्तेन प्रायस्थान् परिपालकः।
प्रददौ मासवृत्त्यैव ते मया तद्गृहे धृताः॥९८॥

धान्यराशिः प्रभूतोऽस्ति तूर्णमागम्यतामिह।
तात्पर्यमिति विज्ञप्ताः पादा ज्येष्ठार्कवासरे॥९९॥

गुरुः

वाचयन्नित्यसौ लेखं तस्य कर्मण्यतां ततः।
प्रशशंस सहायस्य नियोगी हर्षनिर्भरः॥१००॥

सोऽभूत् पूर्वतरं बौद्धस्ततो दम्भाय वैष्णवः।
रक्षार्थमथ भार्याया जातकौलागमादरः॥१०१॥

आनिनाय गुरुं गर्वदम्भलोभनिकेतनम्।
मायाकुहकलौल्यानां दीक्षासमयमण्डलम्॥१०२॥

नमस्ते गुरुनाथाय धनदारापहारिणे।
क्षोभिणे सर्वभक्षाय यक्षायेव क्षपाशिने॥१०३॥

तालुन्यस्तार्धसिन्दूरपत्रिकापुष्पगुच्छिकः ।
बिन्दूपबिन्दुनित्यार्द्रमहालालाटकर्परः ॥१०४॥

कर्णमूलशिखामात्रग्रथितस्वल्पजूटिकः ।
कुङ्कुमाङ्कितकर्णाग्रः काचराक्षो महाहनुः ॥१०५॥

खल्वाटो विरलश्मश्रुर्दीर्घवाक् प्रस्खलन् क्वचित् ।
बिभ्राणो वदनं वृद्धमहिषीभगविभ्रमम् ॥१०६॥

क्षणात् पिबति यो मद्यघटं घटघटारवैः ।
तस्य कण्ठप्रणालस्य स्थौल्यं केनोपमीयताम् ॥१०७॥

मद्यमांसदुरामोदमलिनं योगपट्टकम् ।
दधानः स्तनसम्पूर्णवक्षसा राक्षसाकृतिः ॥१०८॥

सिन्दूरपूर्णगम्भीरनाभिरन्ध्रोपशोभितः ।
लोपिकापूपशफरीमिश्राभृतमहोदरः ॥१०९॥

मधुमांसकृताजीर्णप्रत्यग्रामोददुःसहान् ।
धूमोद्गारगडङ्कारान् मुञ्चन् मेघ इवाकुलः ॥११०॥

गुरुर्गुरुतराविद्यावद्यमद्यमदान्धधीः ।
अहङ्कार इवाकारमागतः प्रत्यदृश्यत ॥१११॥

आकारेण गुरुर्गुरुश्च वचसा कौसीद्यमौर्ख्यैर्गुरु-
र्मेढ्रेणातिगुरुस्तथास्यकुहरश्मश्रूदरस्फिग्गुरुः
वेश्याकामिनियोगिवञ्चनगुरुः सद्वृत्तशून्यो गुरु-
श्चित्रं सर्वगुरुः शिवोदितमहाशिक्षासु नित्यं लघुः ॥११२॥

अपि नाम स जायेत पवित्रचरितः क्षितौ।
अशौचनिधयो येन गुरवो नोपसेविताः॥११३॥

अहंपूर्विकया सर्वे पतितास्तस्य पादयोः।
चक्रुः शिरोभिर्भूकम्पलुठत्पिठिरकभ्रमम्॥११४॥

रक्षायै: निजभार्यायाः सम्पदां च विवृद्धये।
नियोगिना यागविधौ विज्ञप्तो भगवान् गुरुः॥११५॥

लिखित्वा कुङ्कुमेनाशु स्वल्पसम्भारचीरिकाम्।
हृष्टः प्रातः समेष्यामीत्युक्त्वा प्रायान् सहानुगैः॥११६॥

**आस्थानदिविरः**

श्वशुरो यागसम्भारे यत्नाहूतो नियोगिना।
पापाधर्माधिकरणदिविरोऽथ समाययौ॥११७॥

तस्मै नमोऽस्तु नगराचार्यवर्याय भोगिने।
यस्य हस्ते स्थिता भूमिः सशैलवनकानना॥११८॥

करोति प्रश्रयं वक्ति मधुरं दिविरः पुरः।
जरच्छागलशृङ्गाभां न च त्यजति वक्रताम्॥११९॥

कलमाङ्कितकर्णेन भूर्जपत्रकपाणिना।
आस्थानदिविरेणेयं ग्रस्ता भगवती मही॥१२०॥

मिथ्या महावराहेण दैत्येष्वाडम्बरः कृतः।
आस्थानदिविरैर्ग्रस्ता यदियं नोद्धृता क्षितिः॥१२१॥

उत्थाय वेश्याशयनात् प्रभाते मद्यघूर्णितः।
धनार्थी दिविरः शस्तमुखं द्रष्टुं प्रतीक्षते॥१२२॥

नूनं निशि भगापानं करोति दिविरः सदा।
प्रातः प्रातर्मृदा वक्त्रं क्षालयत्यन्यथा कथम्॥१२३॥

स्नातो मृद्दर्भतिलभृत् करोति सुचिरं जपम्।
दिविरः कूटसङ्केतपटीपात्राणि चिन्तयन्॥१२४॥

विप्रं पुरः समयान्तं थूत्कृत्य त्वरितः पुनः।
प्रविश्य गेहं निर्याति शङ्कमानः पराभवम्॥१२५॥

श्रीकामो गोमयभ्रान्त्या वन्दते श्वशकृत् पथि।
पुरश्चाप्तां सिद्धिकामश्चण्डालीं सकरण्डकाम्॥१२६॥

सुप्रभाततरायातैः सकष्टशटिलै?र्वृतः।
आस्थानं याति कलयन् भृष्टमांसं सपानकम्॥१२७॥

भूर्जपीडालडत्क्लिन्नमसीसुभृतभाजनः।
कथयन्निव गन्धेन भाविनीं नरकस्थितिम्॥१२८॥

मषीविषार्द्रया निघ्नन् साधून् कलमदंष्ट्रया।
आस्थानजलधेरन्तर्दिविरो मकरायते॥१२९॥

तन् मषीविप्रुषस्तस्य दृश्यन्ते कलमच्युताः।
भुवो विलुण्ठ्यमानायाः साञ्जनाश्रुकणा इव॥१३०॥

अधोमुखा विमानेभ्यः पतन्तो दिवि रोदनम्।
कुर्वन्ति पितरस्तस्य यो भुङ्क्ते दिविरौदनम्॥१३१॥

जामातुः श्रीमतो दृष्ट्वा स गृहं हर्षनिर्भरः।
अचिन्तयत् कदास्यापि शटिर्दैवाद् भवेदिति॥१३२॥

### अधिकरणभट्टा, सात्रिका वा

तत्सङ्गत्याप्यदृश्यन्त भूर्जभट्टा भयङ्कराः।
तद्गृहे कलयन्तोऽन्तस्तस्य स्थावरविप्लवम्॥१३३॥

संहरन्ति सदा लोकान् ये सस्थावरजङ्गमान्।
तेभ्यः प्रलयकारिभ्यो भट्टेभ्योऽस्तु नमो नमः॥१३४॥

शटीपाशसमाकृष्टः प्राप्तोऽधिकरणं भयात्।
साधुर्निगीर्यते भट्टैर्मत्स्यैरिव जले बलिः॥१३५॥

भट्टैर्भट्टैः सदिविरैः शटीनिपतितो जनः।
मुच्यते नास्थिशेषोऽपि रक्तक्षीवैरिव श्वभिः॥१३६॥

ब्राह्मण्याद् ये हता नैव रामेण ब्रह्मराक्षसाः।
आस्थानभट्टास्ते मन्ये सदा खादन्ति मानुषान्॥१३७॥

कृतः पराजितो जेता जयी यैश्च पराजितः।
तेषां स्वतन्त्रवचसां वचसा केन जीव्यते॥१३८॥

अन्ते नरकपालैर्ये वृता वेतालतां गताः।
शट्यन्तः कृतहृद्घण्टा भट्टास्ते कस्य नान्तकाः॥१३९॥

पश्यन्नन्धो वदन् मूकः शृण्वंश्च बधिरोऽधमः।
उत्कोचेन विना भट्टश्चिरं निद्रायते शठः॥१४०॥

उत्कोचभक्षणं छिद्रशिक्षणं साधुतक्षणम्।
शटिसन्धुक्षणं कूटरक्षणं भट्टलक्षणम्॥१४१॥

चर्मकृन्नर्तकीभ्राता सङ्गत्या नर्तकोऽभवत्।
सोऽथ गारुडकल्पज्ञः प्रयातः सस्यपालताम्॥१४२॥

सोऽपि ग्रामगणेशस्य प्राप्तः प्रासादपालताम्।
सन्धिविग्रहकायस्थचक्रिकासेवकोऽधमः ॥१४३॥

भट्टत्वमाप्तवान् दूतो द्र(व)ङ्गदेशगतागतात्।
तस्य पुत्राश्च पौत्राश्च सर्वेऽधिकरणद्विजाः ॥१४४॥

कुतोऽन्यथा भवत्येषां वचश्चर्मकृतामिव।
कक्षे सुमहती भस्त्रा शटिदीनारभाजनम्॥१४५॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां
नर्ममालायां द्वितीयः परिहासः ।।

* * * * *

## तृतीयः परिहासः

**गुरुभटाः**

अथ यागोत्सवे तस्मिन् सर्वे दिविरबान्धवाः।
अलङ्कृताश्च ललना नियोगिगृहमाययुः ॥१॥

खटिका करणी हैमी पारतो रत्नमूटिका।
सिन्दूराद्या रजोभेदाः पञ्चरङ्गकसूत्रकम् ॥२॥

शालिचूर्णं सितच्छत्रं श्वेतवस्त्रं वितानकम्।
नाराचाः क्षुरिका सूत्रं दर्पणं वीरकर्तरी ॥३॥

पताका व्यजनं कूर्चः पुष्पलक्षाणि षोडश।
वार्धानीकलशौ ताम्रौ तिलास्तैलं मृगाजिनम् ॥४॥

स्रुक्स्रुवौ समिधो दर्भा लाजाः सिद्धार्थका घृतम्।
बिल्वपूगफलाक्षोटजातीफलयवाक्षतम् ॥५॥

धूपकुङकुमकर्पूरकौतुकौषधिचन्दनम्।
पादुकापीठपर्यङ्कघण्टिकाघटकुण्डकम् ॥६॥

मद्यमांससुरायूषपलाण्डुशफरौदनम्।
पिष्टभृष्टरसस्वच्छभक्ष्यरोचकमोदकम् ॥७॥

चटिकापूर्णपात्राणि क्षीरिणी कृसरा दधि।
दश कृष्णा दश श्वेताश्छागा मेषाश्चतुर्दश ॥८॥

भस्त्रा चेत्यादिसम्भारश्चीरिकालिखितः क्षणात्।
सज्जीकृतः श्रीसचिवैर्भोगमित्रैर्नियोगिनः ॥९॥

ततो नित्यावधानेन भगलिङ्गविभूषितम्।
चकारः मण्डलं शिष्यः सिन्दूरान्तरितान्तरम्॥१०॥

अथात्मारामतादम्भमीलिताघूर्णितेक्षणः।
गुरुर्गृहीतः शिष्याभ्यां सव्यदक्षिणहस्तयोः॥११॥

शतमात्रेणानुयातः शिष्याणामाययौ शनैः।
लुण्ठिं कर्तुमिवात्युग्रो नगराधिपतिः स्वयम्॥१२॥

चर्मकृत् सौनिकश्चक्री धीवरो हट्टतापसः।
वृद्धवेश्या कल्यपालो मद्यभट्टो जरद्विटः॥१३॥

पञ्च नारङ्गका रुग्णास्त्रिटाङ्कारोऽथ पाचकः।
गोभक्षो भैरवाचार्यः कुलाचार्योऽथ वायकः॥१४॥

चूलिकाकृतरुद्राक्षो घटिलश्छिन्ननासिकः।
महाव्रती भगमुखः शैवाचार्यस्त्रिघण्टिकः॥१५॥

नग्नो वेलाव्रती मौनी स्तोत्रकृज्जानुघण्टिकः।
द्वित्राश्चोन्मत्तवनिताः श्वभिः परिवृतास्तथा॥१६॥

गूथलिप्तस्तथोन्मत्तो मन्त्रवादी रसायनी।
इन्द्रजाली लतावेशी विज्ञानी कामतात्विकः॥१७॥

भट्टाश्चान्ये गुरोर्धूर्ताः पानभोजनसेवकाः।
विविशुः स्विन्ननैवेद्यामोदमत्तोदकाकुलाः॥१८॥

अथामपक्वसंहारकारिणः सर्वहारिणः।
मत्ता गुरुभटाश्चक्रुस्तिलधूपघृतक्षयम्॥१८॥

एको द्वौ बहवः पश्चान्निन्युस्ते भस्त्रया तथा।
शालिचूर्णयवाक्षोटबिल्वार्धधृतचन्दनम्॥२०॥

रण्डा

ततः स्वभगिनी रण्डा बालैव व्रतशालिनी।
धृता नियोगिना यागपरिचर्याविधौ गुरोः॥२१॥

जयत्यखण्डशीतांशुमण्डलद्युतितस्करी।
पुण्डरीकमुखी रण्डा नवयौवनमण्डिता॥२२॥

मदशौण्डं समुद्दण्डचण्डं मुखकरण्डकम्।
विना चण्डतरोद्घृष्टं रण्डा खण्डितमानसा॥२३॥

विस्तीर्णश्रोणिपुलिना पीवरोरुकुचस्थली।
हरिणीहारिनयना रण्डा नेत्ररसायनम्॥२४॥

रण्डा स्कन्धद्वयासक्तमुक्तकेशी विराजते।
नेत्रोत्पलमुखाम्भोजभृङ्गव्याप्तेव पद्मिनी॥२५॥

निःसूत्ररुचिरः कण्ठः सुवर्णसुभगो भगाः।
रण्डायाः कर्णपाशौ च निराभरणसुन्दरौ॥२६॥

पुष्पताम्बूलरहिता रण्डा सन्त्यक्तभूषणा।
लावण्येनातिमात्रेण संविभक्तेव वेधसा॥२७॥

हारेण किं सुमध्यायाः सुकेश्याः कुसुमेन किम्।
किमञ्जनेनायताक्ष्या रण्डाया मण्डनेन किम्॥२८॥

किं धर्मो यत्र नो रण्डा धिक् सुखं रण्डया विना।
रण्डाहीनोऽस्तु मा मोक्षः प्रौढैरित्युदितं विटैः॥२९॥

रण्डा विलोक्य तरुणं करोति भ्रुकुटिं मृषा।
कण्ठग्रहं चिन्तयन्ती मनसा तु प्रहृष्यति॥३०॥

संस्मरन्ती रतिसुखं पीवरोरुकुचस्थली।
रण्डा भगस्थलीं रात्रौ मृद्नात्युच्छ्वासिनी सदा॥३१॥

वीक्षते तरुणं तिर्यक् कान्तं सुभगमानता।
स्रवन्ती निर्भरं रेतो रण्डा धेनुः पयो यथा॥३२॥

गौरः सुपीवरो धत्ते रण्डाया मुण्डितो भगः।
मेरोरर्कहयोल्लीढशष्पहेमतटभ्रमम्॥३३॥

तुरगाद्याचितानीतस्तब्धदीर्घध्वजो नरः।
यदि नाम रते शक्तो रण्डां तोषयितुं न वा॥३४॥

श्राद्धेषु मुग्धविप्राणां जटिनां च तपस्विनाम्।
वशे पतति धन्यानां रण्डा रसतरङ्गिणी॥३५॥

चूलिकान्यस्तकुसुमः कर्णे कृतपवित्रकः।
युवा रण्डाप्रियो विप्रः कन्दर्पेणोपमीयते॥३६॥

उदञ्चद्गुरुदण्डस्य चण्डस्य ब्रह्मचारिणः।
रण्डा ददाति सततं श्रद्धया मृतभोजनम्॥३७॥

तमेव तीर्थयात्रासु पश्चान् नयति सर्वदा।
वहन्ती खड्गपात्रेण बलिधूपसमुद्गिकाम्॥३८॥

परस्परप्रार्थनया सुमुण्डितभगध्वजौ।
भूकम्पकारिणौ रात्रौ तौ रण्डाब्रह्मचारिणौ॥३९॥

दिवा दम्भनिधानाय नमस्तीर्थोपसेविने।
रात्रौ रण्डाभगापानक्षीबाय ब्रह्मचारिणे॥४०॥

रण्डा जटाभृतां भीत्या गौडलाटतपस्विनाम्।
ददाति…र्जितां प्रीत्या तल्लिप्तोरु..वासकृत्॥४१॥

गत्वा गुरुगृहं रण्डा पत्युः पर्वदिने सती।
कषन्ती कटिमाभीक्ष्ण्याद् रण्डा निर्दयमेहनैः॥४२॥

रण्डा तत्तन्मृतोद्धारदीक्षादिव्रतकारिणी।
ददाति निशि निःशङ्का कामसत्रं तपस्विनाम्॥४३॥

लिङ्गार्चनापदेशेन दत्त्वा वेश्मनि तालकम्।
करोति चर्मलिङ्गेन रण्डा कण्डूविखण्डनम्॥४४॥

तयोपचर्यमाणोऽथ मृगाक्ष्या गुरुराकुलः।
शिष्याश्च तां पपुर्नेत्रैः क्षुधार्ताः क्षीरिणीमिव॥४५॥

**गुरुकृत्यमहत्तमः**

ततः प्रविविशुस्ते ते दीक्षासमयिनो नराः।
बद्धनेत्रपटा मिथ्या मोहेनेवान्धकारिताः॥४६॥

अथ व्यजिज्ञपद् भूमिन्यस्तजानुः कृताञ्जलिः।
गुरुं नियोगिनः श्रद्धाशुद्धान्तं हट्टतापसः॥४७॥

इहैव सुचिरं नाथ यागव्यग्रे त्वयि स्थिते।
प्रतीक्षन्ते परे शिष्या यागोत्सवसमुत्सुकाः॥४८॥

य एष प्रथितो लोके गृहकृत्ये महत्तमः।
कृतयागसमारम्भः स भवन्तमुदीक्षते॥४९॥

ब्रह्महत्यादि पापं यन्निःसंख्यं तस्य विद्यते।
एकघण्टाटनत्कारमात्रेण भवता हृतम्॥५०॥

मन्यते स तृणं सर्वं सर्वसंहारपातकम्।
यतो मूर्ध्नि त्वया हस्तस्तस्य पञ्चफणो धृतः॥५१॥

त्वत्प्रसादात् समुत्तीर्णां स कामपि दशां श्रितः।
शङ्करायतनेभ्योऽपि शैवः सर्वं जहार यत्॥५२॥

सर्वस्वहरणं धर्मसत्कार्यं ब्राह्मणक्षयः।
यत् तस्य निर्विकल्पस्य तत् तवैव विजृम्भितम्॥५३॥

*वेश्या*

त्वामियं नाथ गणिका निमन्त्रयितुमागता।
घटीप्रतिष्ठा गेहेऽस्याः क्रियतां शिष्यवत्सल॥५४॥

वितीर्णैर्भवता नित्यं वशीकरणचूर्णकैः।
अस्थिशेषाः कृतास्ते ते यया धनिककामुकाः॥५५॥

श्मशानकोशशपथैः क्षीणजिह्वाकराधरा।
त्वद्रक्षारक्षितैवैषा कामुकच्छद्मचारिणी॥५६॥

तैलोन्मृष्टे मनाक् स्नेहो वदने न तु चक्षुषि।
वेश्यायाः क्षीणवित्तेषु सङ्कोचो नान्त्यजातिषु॥५७॥

यदि सद्भाविनी वेश्या यदि कालः कृपापरः।
अचौरो यदि कायस्थस्तद्वेश्याप्यनुरागिणी॥५८॥

## चक्षुर्वैद्यः

चक्षुर्वैद्योऽयमायातस्तपस्वी सर्वसंश्रयः।
किंशारुवर्तिभिर्येन सर्वमन्धीकृतं जगत्॥५९॥

ग्रीष्मेऽक्षिकोपबाहुल्यादस्य लग्ने शरत्फले।
सम्पूर्णः क्रियतां यागः पाण्डुवल्लीनिरन्तरः॥६०॥

## शल्यहर्ता

नापितः शल्यहर्तायं नृणां येनोपजीविना।
नीतान्यण्डानि दुर्लेपैः स्थूलस्थालीप्रमाणताम्॥ ६१॥

प्राक् प्रतिष्ठापिता येन चामुण्डा मण्डकार्थिना।
यासौ तस्यास्त्वया वर्षदिने यागं समीहते॥६२॥

मूल्येन महता धीमान् नासासंश्लेषणाय यः।
मांसपेषीमपि च्छित्त्वा ददाति स्ववधूभगात्॥६३॥

## वृद्धवणिक्

अयं च तरुणीभार्यो वणिग् वृद्धो महाधनः।
मैथुने शक्तिदारिद्र्याद् वाजीकरणमिच्छति॥६४॥

लालिना स्रुतनेत्रेण वृद्धेन श्वासकासिना।
श्लथप्रलम्बशिश्नेन तरुणी रमते कथम्॥६५॥

आरुढोऽपि रते यत्नादुत्थानोपहतध्वजः।
वृद्धः प्राप्नोति नो निद्रामृणं ध्यायन्निवाधनः॥६६॥

निष्पीडितान्त्रसङ्काशशिश्नोऽपि सुरतोत्सुकः।
हस्तं दत्त्वा भगे वृद्धो निधानमिव रक्षति ॥६७॥

मांसक्षीरघृताहारं कृत्वा वृद्धो रताशया।
रात्रौ वमति तत् सर्वं भजते वा विषूचिकाम् ॥६८॥

शुष्कचर्मोपमं वृद्धं मधुपर्के क्षणं पतिम्।
सजने तरुणी दृष्ट्वा ह्रीता याति रसातलम् ॥६९॥

एतेन वृद्धवणिजा द्रव्यैर्वृद्धविटोदितैः।
लिप्तलिङ्गेन सततं दग्धेवायासिता वधूः ॥ ७० ॥

स एष बहुनिक्षेपसंभक्षणकृतक्षणः।
द्रविणावस्करक्षेत्रं वणिग् वासरतस्करः ॥७१॥

नृत्यति व्याधिकालेषु कुटिलः कलिपन्नगः।
अज्ञाततृणकाष्ठादिविक्रयी द्रव्यनामभिः ॥७२॥

तरुणाकाङ्क्षिणीं वृद्धः प्रियामविचलेक्षणः।
सोऽयं निरीक्षते दूरान् मिष्टं भोज्यमिवातुरः ॥७३॥

तस्मात् पौष्पिकमासाद्य क्रियन्तां मन्त्रसम्पदः।
गृहिणी रागिणी येन लब्धशक्तिः प्रजायते ॥७४॥

इत्यादि शिष्यस्याख्यानं श्रुत्वा तेन निवेदितम्।
सर्वं करोमीत्यवदद् भ्रूविकाराकुलो गुरुः ॥७५॥

ततो दिनान्ते विपुलां कृत्वाग्रे शिवकुण्डिकाम्।
गुरुणा सह ते शिष्याः पपुर्भुक्तोत्तरं चिरम् ॥७६॥

नियोगिललनाः सर्वास्ते च तन्मित्रबान्धवाः।
कपालेषु तदुच्छिष्टं वन्दित्वा बहुशः पपुः ॥७७॥

कश्चिद् गातुं प्रवृत्तोऽथ कश्चिद् रोदिति सस्वनम्।
कश्चिद् व्याघूर्णते कश्चित् प्लवते कृतशूत्कृतिः ॥७८॥

कश्चिदत्यन्तवैकल्यं नाटयन् भक्तिसम्भवम्।
निश्चेष्टस्तिष्ठति चिरं संप्राप्तः शवतामिव ॥७९॥

कश्चिद् विलोलस्रग्दामभूषितो मदनिर्भरः।
कृतकण्ठग्रहः पुंसां चुचुम्ब ललना अपि ॥८०॥

ततः क्षीबो गुरुः किञ्चित् स्वकाव्यं देशभाषया।
वीणावंशरवोदग्रं कोच्छिकावाद्यकृज् जगौ ॥८१॥

अथैकभुजमानन्दादुद्यम्यैकेन पाणिना।
गुरुर्ननर्त द्वाभ्यां च शनैरुत्थाय चासनात् ॥८२॥

ततः शिष्याः समुत्तस्थुरट्टहासनिनादिनः।
कृताङ्गनापरिष्वङ्गा विस्रस्तकटिकर्पटाः ॥८३॥

शनैः प्रयाते रात्र्यर्धे विनष्टे दीपमण्डले।
निर्विभागोऽभवत् तेषां रतिचक्रमहोत्सवः ॥८४॥

प्रभाते गुरुरुत्थाय त्वरया कलशप्रदः।
कृतवद् विदधे सर्वं शिष्यैरन्यैर्निमन्त्रितः ॥८५॥

ज्वरादिकाले वैद्यानां शरत्काले नियोगिनाम्।
पुष्पकाले गुरूणां च हेमपूर्णा वसुन्धरा ॥८६॥

अथाविशत् पृथुश्वासः कम्पमानः स्फुटन्निव।
पार्श्वावलोकी पुरुषः परमाप्तो नियोगिनः ॥८७॥

सोऽब्रवीदद्य रात्र्यर्धे गृहकृत्यमहत्तमः।
राजराशिधनं भूरि हृत्वा यातः सहानुगः ॥८८॥

अनुक्त्वापसृते तस्मिंस्तत्सम्बन्धिनियोगिनाम्।
पलायनव्यतिकरः कोऽपि जातो गृहे गृहे ॥८९॥

चपेटोत्स्फोटितमुखस्त्वत्स्वामी बन्धनं भटैः।
नीतः पतत्पुरीषोऽग्रे स तावत् परिपालकः ॥९०॥

यावन्नोल्लुण्ठितश्मश्रुर्बद्ध्वा त्वमपि नीयसे।
तावद् राजभये घोरे नीतिरस्मिन् विधीयताम् ॥९१॥

इति ब्रुवाणे तन्मित्रे तैः शिष्यैः सहिते गुरौ।
तूर्णं प्रयाते निःश्वस्य नियोगी दुःखितोऽवदत् ॥९२॥

अहो नु कालदौरात्म्याद् घोरता कियती कलेः।
साधवः सर्वथा नष्टाः कष्टं धर्मोऽस्तमागतः ॥९३॥

इत्युक्त्वा सानुगो यावत् पलायनकृतोद्यमः।
स सुस्राव भयान् मूत्रं तावदेत्य भटैर्वृतः ॥९४॥

स राज्ञा हृतसर्वस्वः प्रक्लिन्नो बन्धने चिरम्।
धनेन वेश्यया स्वस्रा मोचितो निरगात् ततः ॥९५॥

ततो विभवहीनोऽसौ जापी स्वप्ननिरीक्षकः।
बभूव सर्वप्रणतश्चाटुकारः प्रियंवदः ॥९६॥

योऽभूदभ्युत्थितस्तब्धो नियोगी लिङ्गसन्निभः।
अधिकारपरिभ्रंशात् स वृद्धवृषणायते॥९७॥

अधिकारमदान्धानां दृष्टिकोपवतां सदा।
नेत्रनैर्मल्यजननं बन्धनं परमाञ्जनम्॥९८॥

यः पादपतितानार्तान् पूज्यानप्यवमन्यते।
भ्रष्टाधिकारश्चरणौ शकृल्लिप्तौ स वन्दते॥९९॥

अहो बत मुहूर्तेन भवन्ति न भवन्ति च।
पलालदहनज्वालाचपला दिविरश्रियः॥१००॥

स्वयमुत्थाय यातायां जायायां निर्धनोऽथ सः।
बभ्राम लौल्यनिलयः पिण्डार्थी बन्धुवेश्मसु॥१०१॥

रूक्षः कृशोऽतिमलिनः स्यूतदग्धपटच्चरः।
पिशाच इव दुष्प्रेक्ष्यो दिनैरेव बभूव सः॥१०२॥

तुषाग्निकुण्डिकातापदग्धस्फिग्वृषणोदरः।
वातशूलापनोदाय जानुग्रथितदामकः॥१०३॥

देवद्विजघनग्रामजातकोष्ठगलग्रहः।
क्षुत्क्षामकुक्षिः शुष्कास्यः पतितोऽवस्करे भ्रमन्॥१०४॥

श्वजग्धजानुचरणः प्रस्रवद्भूरिशोणितः।
कृपार्द्रोच्छिष्टभुग् दत्तभक्तगोलकनिर्वृतः॥१०५॥

दग्धार्धकर्पटीनिर्यत्सकेशवृषणद्वयः।
भस्मप्रलिप्तशीर्षांसवक्षःपार्श्वो गतत्रपः॥१०६॥

प्रलपन् काञ्चिकाकाङ्क्षी केनचिद् दत्तमण्डकः।
प्रपापालिकया डोम्बभ्रान्त्या पाने तिरस्कृतः ॥१०७॥

रजस्वलापलालेन च्छन्नाङ्गस्तुहिनागमे।
शरावकर्परादानकलहे याचकार्भकैः ॥१०८॥

वह्निपात्रप्रहारेण दग्धभ्रूश्मश्रुलोचनः।
चण्डालैः प्रेतकार्येषु लगुडैराहतः सकृत् ॥१०९॥

पङ्कशायी स चुक्रोश सत्रतीर्थाग्रवर्त्मसु।
नृपुरीषप्रणालेऽथ पतितोऽसावधोमुखः ॥११०॥

उच्चैः कृतकटिः प्राणानुत्ससर्ज नराधमः।
इति दौर्गत्यतपसा प्रयातः सोऽस्थिशेषताम्
सशरीरः स्वयं प्राप्तो नरकं नरकण्टकः ॥१११॥

एवं क्रमेण शान्तेषु नियोगिदिविराग्निषु।
मोदते गतसन्तापः सन्तोषसुभगो जनः ॥११२॥

इति दिविरनियोगिव्रातदुश्चेष्टितानां
कुसृतिचरितचर्चा नर्ममाला कृतेयम्।
अपि सुजनविनोदायोम्भिता हास्यसिद्ध्यै
कथयति फलभूतं सर्वलोकोपदेशम् ॥११३॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां**
**नर्ममालायां तृतीयः परिहासः**
**॥ समाप्तेयं नर्ममाला ॥**

* * * * *

# ५. शृङ्गारकाव्यम्

## (१) समयमातृका

### प्रथमः समयः - चिन्तापरिप्रश्नः

अनङ्गवातलास्त्रेण जिता येन जगत्त्रयी।
विचित्रशक्तये तस्मै नमः कुसुमधन्वने ॥१॥

यस्या दुर्धरघोरवक्त्रकुहरे विश्वक्षये लक्ष्यते
क्षुब्धाब्धाविव लोलबालशफरी कुत्रापि लोकत्रयी।
तामज्ञातविशालकालकलनां तैस्तैः पुराणैरपि
प्रौढां देहिसमूहमोहनमयीं कालीं करालां नुमः ॥२॥

क्षेमेन्द्रेण रहस्यार्थमन्त्रतन्त्रोपयोगिनी।
क्रियते वाररामाणामियं समयमातृका ॥३॥

अस्ति स्वस्तिमतां विलासवसतेः सम्भोगभङ्गीभुवः
केलिप्राङ्गणमङ्गनाकुलगुरोर्देवस्य शृङ्गारिणः।
काश्मीरेषु पुरं परं प्रवरतालब्धाभिधाविश्रुतं
सौभाग्याभरणं महीवरतनोः सङ्केतसद्म श्रियः ॥४॥

यत्र त्रिनेत्रनेत्राग्नित्रस्तस्त्यक्त्वा जगत्त्रयीम्।
पौरस्त्रीत्रिवलीकूले वसत्यसमसायकः ॥५॥

तत्राभूदभिभूतेन्दुद्युतिः कन्दर्पदर्पभूः।
कान्ता कलावती नाम वेश्या वश्याञ्जनं दृशोः ॥६॥

कुचयोः कठिनत्वेन कुटिलत्वेन या भ्रुवोः।
नेत्रयोः श्यामलत्वेन वेश्यावृत्तमदर्शयत् ॥७॥

सा हर्म्यशिखरारूढा कदाचिद् गणिकागुरुम्।
कामिनां नर्मसुहृदं ददर्श पथि नापितम् ॥८॥

श्मश्रुराशीचितमुखं काचकाचरलोचनम्।
पीवरं तीरमण्डूकैर्मार्जारमिव शारदम् ॥९॥

विटानां केलिपटहं तप्तताम्रघटोपमम्।
दधानं रोममालान्तं स्थूलखल्वाटकर्परम् ॥१०॥

ताम्बूलष्ठीवनत्रासादुपरि क्षिप्तचक्षुषम्।
आनिनाय तमाहूय सा नेत्राञ्चलसंज्ञया ॥११॥

स समभ्येत्य तां दृष्ट्वा चिन्तानिश्चललोचनाम्।
पप्रच्छ विस्मितः कृत्वा नर्मप्रणयसंवृतिम् ॥१२॥

ध्यानालम्बनमाननं करतले व्यालम्बमानालकं
लुप्तव्यञ्जनमञ्जनं नयनयोर्निःश्वासतान्तोऽधरः।
मौनक्लीबनिलीनकेलिविहगं निद्रायमाणं गृहं
वेषः प्रोषितयोषितां समुचितः कस्मादकस्मात् तव ॥१३॥

किं मेखला मदनबन्दिवधूर्नितम्बे
सुश्रोणि नैव बत गायति मङ्गलानि।

अङ्गं कृशाङ्गि किमनङ्गयशः प्रभेण
कर्पूरचन्दनरसेन न लिप्तमेतत् ॥१४॥

प्राप्तं पुरः प्रचुरलाभमसंस्पृशन्ती
भाविप्रभूतविभवाय कृताभियोगा।
किं केनचित् सुचिरसेवननिष्फलेन
मिथ्योपचारवचनेन न वञ्चितासि ॥१५॥

लोभाद् गृहीतमविभाव्य भयं भवत्या
दर्पात् प्रदर्शितमशङ्कितया सखीभिः।
दत्तं तवाप्रतिममाभरणं नृपार्हं
चौरेण किं प्रलपितं नगराधिपाग्रे ॥१६॥

दानोद्यतेन धनिकेन विशेषसङ्गात्
सक्तोऽयमित्यथ शनैरवसायितेन।
लब्धान्तरस्वजनमित्रविरोधितेन
किं त्वन्निकारकुपितेन कृतो विवाहः ॥१७॥

दत्वा सकृत् तनुविभूषणमंशुकं वा
यद् वानुबन्धविरलीकृतकामुकेन।
यक्षेण सर्वजनतासुखभूः प्रपेव
तीक्ष्णेन भीरु किमु केनचिदावृतासि ॥१८॥

वित्तप्रदानविफलेन पलायमाना कौटिल्यचारुचटुला शफरीव तोये।
गूढं वशीकरचूर्णमुचा कचेषु किं केनचिन् न कुहकेन वशीकृतासि ॥१९॥

निष्कासितुं हृदयसञ्चिततीव्रवैरे
सन्दर्शितप्रकटकूटधनोपचारे।
लोभात् त्वयानपचयैः पुनरावृतेव(?)
प्राप्तः किमु प्रसभमर्थवशादनर्थः ॥२०॥

कैर्नित्यसंभवनिजं वणिजं त्यजन्त्या
यान्त्या तृणज्वलनदीप्तिनियोगलक्ष्मीम्।
नष्टे...वस्त्रविभवे विरते पुराणे
जातस्तव स्तबकितोभयलाभभङ्गः(?)॥२१॥

सिद्धः प्रयत्नविभवैः परितोषितस्य
दातुं समुद्यतमतिः स्वयमर्थजातम्।
नीतस्तव प्रचुरमत्सरयान्यया किं
गेहान् निधिर्बहुधनः स्वसखीमुखेन॥२२॥

किं वावसादपदवीमतिवाह्य कष्टां
लब्धा विकारविभवेन विवर्जितासि।
किं मूर्च्छितासि विरतासि सुखोज्झितासि
ध्यानावधानबधिरासि निमीलितासि॥२३॥

अप्युद्दामव्यसनसरणेः सङ्गमे कामुकानां
भद्रं भद्रे भुवनजयिनस्त्वत्कलाकौशलस्य।
अप्युत्साहप्रचुरसुहृदः कामकेलीनिवासाः
प्रौढोत्साहास्तव सुवदने स्वस्तिमन्तो विलासाः॥२४॥

इत्यादि तेन हितसन्निहितेन पृष्टा
स्पृष्टा भृशं विभवभङ्गभयोद्भवेन।

सा तं जगाद सुखदुःखसहायभूतं
चिन्ताविशेषविवशा बहुशः श्वसन्ती ॥२५॥

शृणु कङ्क ममानन्तां चिन्तां सन्तापकारिणीम्।
ययाहमवसीदामि ग्रीष्मग्लानेव मञ्जरी ॥२६॥

सा सखे करभग्रीवा मातुर्माता स्थिरस्थितिः।
व्याली गृहनिधानस्य हता वैद्याधमेन मे ॥२७॥

योऽसाववद्यविद्याविद् वैद्यः सद्यः क्षयोद्यतः।
दर्पादातुरवित्तेन वृद्धोऽपि तरुणायते ॥२८॥

तेन रोगधराख्येन दत्ता रसवती मम।
त्रिभागशेषतां नीता लौल्यलोभोद्भवात् तया ॥२९॥

प्रपञ्चवञ्चनावैरात् सा तेनातुरतां गता।
काञ्चन्या पञ्चतां नीता पश्यन्ती काञ्चनं जगत् ॥३०॥

हिरण्यवर्णां वसुधा तस्मिन्नन्तक्षणेऽपि सा।
दृष्ट्वा मामब्रवीद् वत्से गृह्यतां गृह्यतामिति ॥३१॥

ततस्तस्यामतीतायां गृहं मे शून्यतां गतम्।
पराभवास्पदीभूतं कामुकैः स्वेच्छया वृतम् ॥३२॥

रिक्तः शक्तो न निर्याति नाप्नोत्यवसरं धनी।
शून्यशालेव पथिकैर्निरुद्धा कामुकैरहम् ॥३३॥

तस्माद् विदेशं गच्छामि नेच्छाम्युच्छृङ्खलां स्थितिम्।
कथं रक्तविरक्तानां तुल्या स्वायत्ततां सहे ॥३४॥

इत्युद्बाष्पदृशस्तस्याः प्रलापं वृद्धनापितः।
आकर्ण्य तां समाश्वास्य सोच्छ्वासं प्रत्यभाषत॥३५॥

भवत्या वित्तलोभेन निर्विचारतया परम्।
भिषग् दुष्टभुजङ्गोऽसौ स्वयमेव प्रवेशितः॥३६॥

जनन्यो हि हतास्तेन वेश्यानां पथ्ययुक्तिभिः।
किं कुट्टनीकृतान्तोऽसौ वैद्यो न विदितस्तव॥३७॥

स रोगिमृगवर्गाणां मृगयानिर्गतः पथि।
इत्यादिभिः स्तुतिपदैर्विटचेटैः प्रणम्यते॥३८॥

यमाय धर्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्वप्राणहराय च॥३९॥

अधुना दुःखमुत्सृज्य मनः स्थित्यै विधीयताम्।
कृत्रिमः क्रियतां गेहे रक्षायै जननीजनः॥४०॥

व्याघ्रीव कुट्टनी यत्र रक्तपानामिषैषिणी।
नास्ते तत्र प्रगल्भन्ते जम्बुका इव कामुकाः॥४१॥

यत्र तत्र निमग्नानां वेश्यानां जननीं विना।
संध्ययोर्दिवसस्यापि मुहूर्तार्धस्य न क्षणः॥४२॥

न भवत्येव धूर्तस्य वेश्यावेश्मन्यमातृके।
चुल्लीसुप्तस्य हेमन्ते मार्जारस्येव निर्गमः॥४३॥

प्रविष्टा कुट्टनीहीनगृहं क्षीणपटा विटाः।
गाथाः पठन्ति गायन्ति व्ययद्रविणमर्थिताः॥४४॥

अकण्टका पुष्पमही वेशयोषिदमातृका।
मन्त्रिहीना च राज्यश्रीर्भुज्यते विटचेटकैः ॥४५॥

अयं पीनस्तनाभोगसौभाग्यविभवोचितः।
द्रविणोपार्जनस्यैव कालः कुवलयेक्षणे ॥४६॥

खला इवातिचपलाः कृतालिङ्गनसङ्गमाः।
न गताः पुनरायान्ति बाले यौवनवासराः ॥४७॥

प्रथम ..............................।
............ नां पुष्पवतीनां लतानां च ॥४८॥

तस्मान् मानिनि कापि हेमकुसुमारामोच्चयाय त्वया
माता तावदनेककूटकुटिला काचित् समन्विष्यताम्।
एताः सुभ्रु भवन्ति यौवनभरारम्भे विजृम्भाभुवो
वेश्यानां हि नियोगिनामिव शरत्काले घनाः संपदः ॥४९॥

अस्त्येव सा बहुतराङ्कवती तुलेव
कालस्य सर्वजनपण्यपरिग्रहेषु।
क्षिप्रप्रकृष्टपलकल्पनया ययासौ
भगीकृतः परिमितत्वमुपैति मेरुः ॥५०॥

यासौ रामामलयजलतागाढसंरोधलीला
निर्यन्त्राणां नियमजननी भोगिनां मन्त्रमुद्रा।
विश्वं यस्याः फलकलनया लक्ष्यतामेति पाणौ
तस्या जन्मक्रमपरिगतं श्रूयतां वृत्तमेतत् ॥५१॥

तद्वृत्तमात्रश्रवणेन कोऽपि सञ्जायते बुद्धिविशेषलाभः।
तयोपदेशे स्वयमेव दत्ते भवत्यसौ हस्तगता त्रिलोकी॥५२॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रनिर्मितायां समयमातृकायां
चिन्तापरिप्रश्नो नाम प्रथमः समयः॥

* * * * *

## द्वितीयः समयः - चरितोपन्यासः

अथ दत्तावधानायां कलावत्यां यथाविधि।
कथामकथयत् कङ्कः कुट्टन्याः कपटाश्रयाम्॥१॥

सर्वभक्षां नमस्कृत्य तामेव भवभैरवीम्।
वदामि चरितं तस्याः कुक्षौ यस्या जगत्त्रयी॥२॥

परिहासपुरे पूर्वपान्थावसथपालिका।
बभूव भूमिका नाम...........॥३॥

........................... कन्यका।
जाता घरट्टमालायामर्धघर्घटिकाभिधा॥४॥

सा वर्धमाना सुमुखी पौरैः पर्वसु पूजिता।
तद्गृहेष्वकरोच् चौरी पूजाभाजनसंक्षयम्॥५॥

सप्तवर्षैव सा लोभाद् वाक्प्रौढा हट्टतोरणे।
जनन्या पण्यतां नीता लोके जालवधाभिधाम्॥६॥

सुवृत्तशङ्खलतिका सकूटकुचकञ्चुका।
कामुकाराधनं चक्रे चुम्बनालिङ्गनेन सा॥७॥

कुङ्कुमार्थी वणिक्सूनुरथ तेनाययौ युवा।
सुन्दरः पूर्णिको नाम पूर्णवर्णसुवर्णवान्॥८॥

सभायां नेत्रवलनालोलभ्रूलास्यविभ्रमैः।
कृष्टः कौतुकवान् भेजे चपलासङ्गमं निशि॥९॥

सा तस्य क्षैब्यसुप्तस्य निशि कण्ठावलम्बिनी।
निगीर्य शनकैः सर्वं कर्णाभरणकाञ्चनम्॥१०॥

अङ्गुलीभ्यः समाकृष्य हेमवालकवालिकाः।
चौरग्रस्तेव चुक्रोश हा हतास्मीति सस्वनम्॥११॥

प्रतिबुद्धोऽथ सहसा स तया मुषितो वणिक्।
वाससाच्छादितशिरा ययौ स्वजनलज्जितः॥१२॥

ततः सा यौवनवती रुचिराभरणाम्बरा।
उवास शङ्करपुरे मह्लणेति कृताभिधा॥१३॥

भूरिभाग्यभरैः सक्ता सा कामिकुसुमोच्चये।
लेभे सम्भोगविश्रान्तिं न रजन्यां न वासरे॥१४॥

निर्गच्छतां प्रविशतां प्रतिपालयतां बहिः।
बभूव तद्गृहे संख्या न शुनामिव कामिनाम्॥१५॥

कूपे प्रपायामुद्याने सूदपौष्पिकवेश्मसु।
सखीगृहे च तुल्याप्तान् सा सिषेवेऽह्नि कामुकान्॥१६॥

क्षपारम्भे क्षीबं शिशुकमिव निक्षिप्य शयने
जगामान्यं तस्मिन् सुरतघननिद्रापरमपि।
निशाशेषे शूलाकुलनिजसखीवेश्मगमना-
पदेशेनान्यं सा सततमगमत् स्वक्रयभरे॥१७॥

नानावहारकुपितैः सान्विष्टा सुभगैर्भृशम्।
पलायमाना गुप्तेषु तस्थौ कामुकवेश्मसु॥१८॥

ततः प्रासादपालेन नन्दिसोमेन सा निशि।
गौरीगर्भगृहं रात्रौ रागान्धेन प्रवेशिता॥१९॥

निःश्वासनिद्रया तस्मिन् प्रयाते काष्ठभूतताम्।
देवालङ्करणं सर्वं सा गृहीत्वा ययौ जवात्॥२०॥

ततः समरसिंहस्य डामरस्यावरुद्धिका।
भूत्वा नागारिका नाम प्रतापपुरवासिनः॥२१॥

प्रभूतपिशिताहारसम्भारैः स्थूलतां गता।
सा तस्य भीमसेनस्य हिडिम्बेवाभवत् प्रिया॥२२॥

सर्वस्वस्वामिभावं सा सम्प्राप्ता तस्य रागिणः।
प्रेरणं बन्धुयुद्धेषु विदधे निधनैषिणी॥२३॥

हते पितृव्रजे तस्मिन् बद्धमूला परं गृहे।
साभूदपरपुत्रस्य श्रीसिंहस्यावरुद्धिका॥२४॥

विगलद्यौवना यूनः सा सपत्नीजिगीषया।
चकार तस्य स्वीकारं वशीकरणमूलकैः॥२५॥

मत्स्ययूषघृतक्षीरपलाण्डुलशुनादिभिः।
प्रत्यायनप्रसक्ताभूद् यौवनस्य प्रियस्य सा॥२६॥

अथ भूपभयात् तस्य प्रत्यासत्तेऽथ भूतपे (?)।
भूरि द्रविणमादाय साविशन् नगरान्तरम्॥२७॥

ततस्तनुतरस्वच्छवसना विनतानना।
रण्डा मृगवती नाम साभूत् स्पर्शस्पृहामही॥२८॥

सदा सुरेश्वरीं गत्वा शतधारातटे चिरम्।
तिलवालुकदर्भाङ्का सा चक्रे पितृतर्पणम्॥२९॥

तत्र बन्धुरसाराख्यमश्वारोहं महाधनम्।
तीर्थस्थिता सा जग्राह मत्स्यं बकवधूरिव॥३०॥

गृहं मुष्ट्वा गृहीत्वेव चित्तग्रहणकोविदा।
सर्वायव्ययकार्येषु सैव तस्याभवद् विभुः॥३१॥

मासेन सा गते तस्मिन् पञ्चतां बहुसंचये।
तस्थौ पादाववष्टभ्य तस्यानुगमनोद्यता॥३२॥

तद्बान्धवैर्वार्यमाणा मिथ्यैवारब्धदुर्ग्रहा।
धैर्यावष्टम्भगम्भीरमुवाचार्याङ्गनेव सा॥३३॥

कुले महति वैधव्यं वैधव्ये शीलविप्लवः।
शीलभ्रंशे वियोगोऽयं वह्निना मम यास्यति॥३४॥

इत्युक्त्वा तीव्रसङ्कल्पनिश्चलाश्ममयीव सा।
तद्वित्तावाप्तहर्षेण सत्त्वव्यक्तिमिवावहत्॥३५॥

ततस्तद्द्रविणस्वाम्यं राजादेशादवाप्य सा।
प्रार्थिता राजपुरुषैस्तस्थौ लीलावलम्बिनी॥३६॥

अथाश्वशालादिविरं स्वीकृत्य रतिवाडवम्।
सा चक्रे जीवलोकस्य स्वनामपरिवर्तनम्॥३७॥

तल्लाभसेवया नित्यं सा तस्य स्नानकोष्ठके।
विलासस्खलितालापैर्दिविरस्याहरन् मनः॥३८॥

कृत्वा लुण्ठिं दिवसमखिलं भूरिभूर्जप्रयोगै-
र्भुक्त्वा पीत्वा निशि बहुतरं कुम्भकर्णायमानः।

प्रातः स्नानव्यतिकरकलादम्भसम्भावनाभू-
र्मांद्यं दाहं नयति दिविरः शान्तिमन्तर्जलेन ॥३९॥

प्रवृद्धापरपुत्राथ दिविराराधनव्रता।
निखिलं जीवलोकं सा विक्रीय धनमाददे ॥४०॥

सा वेश्मविक्रयादाने पुत्रैराकृष्य वारिते।
गत्वाधिकरणं चक्रे मठिभट्टोपसेवनम् ॥४१॥

उत्कोचारब्धसङ्घट्टैर्भट्टैः कूटरथादिभिः।
सादिष्टाभीष्टसंपत्तिर्जग्राह जयपट्टकम् ॥४२॥

गृहं विक्रीय सर्वस्वं गृहीत्वा पुत्रशङ्किनी।
सा चित्रवेषप्रच्छन्ना ययौ शाक्तमठाश्रयम् ॥४३॥

कृष्णीकृतश्वेतकचा रङ्गाभ्यङ्गेन भूयसा।
......र्जलेन सा तत्र नवपण्याङ्गनाभवत् ॥४४॥

चलित्वाभ्यागता............वणिग्वधूः।
इति तस्याः प्रवादेन बभूवाधिकविक्रयः ॥४५॥

सत्यासत्यकथातत्त्वमविचार्यैव धावति।
गतानुगतिकत्वेन प्रवादप्रणयी जनः ॥४६॥

क्षीणजिह्वाधरकरा कोषपानेन कामिनाम्।
छिन्नाङ्गुलिः सा जग्राह रागवेलां पुनः पुनः ॥४७॥

सा चौरद्रविणादानाद् गृहीता शठचेटकैः।
प्रत्यक्षापह्नववती सुबद्धा बन्धने धृता ॥४८॥

तत्र बन्धनपालेन भुजङ्गाख्येन सङ्गता।
निर्विकल्पसुखा चक्रे मत्स्यापूपमधुक्षयम्॥४९॥

साथ बन्धनपालस्य गाढालिङ्गनसङ्गमे।
क्षीबस्य चुम्बनासक्ता जिह्वां चिच्छेद मुक्तये॥५०॥

सा जिह्वाच्छेदनिःसंज्ञं तमाक्रन्दविवर्जितम्।
स्त्रीवेषं स्वांशुकैः कृत्वा जगामोत्क्षिप्तशृङ्खला॥५१॥

सा भग्ननिगडा प्राप्य रजन्यां विजयेश्वरम्।
महामात्यसुतास्मीति जगादानुपमाभिधाम्॥५२॥

सा तत्र भोगमित्रस्य प्रीत्या रत्नैरवाकिरत्।
पुराणचित्ररूपस्य यौवनस्याल्पशेषताम्॥५३॥

यत्नोत्क्षिप्तकुचा ........ कचायततया करे
बद्धापाटलपट्टकेन सरलस्थूलाञ्जनव्यञ्जना।
नासार्धावधिवाससा च वदनं संछाद्य विद्याधरी
केयं नूतननिर्गतेति विदधे सा मुग्धसंमोहनम्॥५४॥

तामेकवारं दृष्ट्वैव नग्नां प्रथमकौतुकात्।
पथापि तेन वैरस्यान् न कश्चित् पुनराययौ॥५५॥

शीतशालेव शिशिरे दीपमालेव वासरे।
जीर्णा निर्माल्यमालेव वेश्या कस्योपयुज्यते॥५६॥

सा तत्र ग्राहकाभावान् मृष्यन्ती पथिकांश्चलान्।
संध्यायामञ्चलाकर्षैः स्वल्पभाटीमयाचत॥५७॥

तपस्विनी शिखाख्या सा सङ्गं चक्रे तपस्विना।
तत्र भैरवसोमेन भिक्षाभक्तार्धदायिना॥५८॥

भस्मस्मेरशरीरसञ्चितरुचिर्दत्ताक्षिजीवाञ्जना
विभ्राणा स्फटिकाक्षसूत्रममलं वैचित्र्यमित्रं गले।
निःसङ्कोचनिलीनकञ्चुककचत्सुस्तब्धबाहुस्तनी
साभूत् क्षोभविधीयिनी हतधियां भिक्षाक्षणे निर्गता॥५९॥

जाते तत्राथ दुर्भिक्षे भिक्षाभक्तेऽतिदुर्लभे।
सा रात्रौ देवमात्रादि ययौ हृत्वा तपस्विनः॥६०॥

सा कृत्याश्रमकं गत्वा विहारं हारितस्थितिः।
भिक्षुकी वज्रघण्टाख्या बभूव ध्याननिश्चला॥६१॥

पात्रं तत्र गुणोचितं करतले कृत्वाथ भिक्षास्पदं
जीर्णं कामुककूटरागसदृशं काषायमादाय सा।
चक्रे मुण्डनमण्डनं परिणमत्कूष्माण्डखण्डोपमं
पिण्डाप्त्यै विटटक्कनापरिचयश्रेणीविहारं शिरः॥६२॥

पट्वी मण्डलशिक्षायै प्रणतानां सदैव सा।
गृहे गृहे कुलस्त्रीणां ददौ दौःशील्यदेशनाम्॥६३॥

वश्यप्रयोगैर्वेश्यानां वणिजामृद्धिवर्धनैः।
मन्त्रवादेन मुर्खाणां सा परं पूज्यतां ययौ॥६४॥

तत्रोपासकदासेन मङ्गलाख्येन सङ्गता।
सा गर्भं दम्भभोगानां मूर्तं विघ्नमिवादधे॥६५॥

विच्छिन्ने पिण्डपाते सा लम्बमानमहोदरी।
प्रसूता धर्ममुत्सृज्य जगाम नगरं पुनः ॥६६॥

कूटकेशवती तत्र चित्रसेनस्य मन्त्रिणः।
पुत्रजन्मनि सा पुण्यैः पत्न्या धात्री प्रवेशिता ॥६७॥

सार्धक्षीराभिधा धात्री सिंहपादवृसीस्थिता।
बालोत्सङ्गा गृहं सर्वं ग्रासीकर्तुमिवैक्षत ॥६८॥

क्षीरसंक्षयरक्षायै संप्राप्तसरसाशना।
सा मन्त्रिभवने धात्रा धात्री पात्रीकृता श्रियः ॥६९॥

कण्ठे विद्रुममालिका श्रवणयोस्ताडीयुगं राजतं
स्थूलस्थूलविभक्तिसक्तवटकप्राग्भारभाजौ भुजौ।
गुल्फास्फालविलम्बिकम्बलघनारम्भा नितम्बस्थली
धात्र्याः संभृतभोजनैरभिनवीभूतं पुराणां वपुः ॥७०॥

ततस्तदपचारेण शिशौ जातज्वरे व्यधात्।
वैद्यदत्तोपवासा सा मत्स्यसूपपरिक्षयम् ॥७१॥

पानीयं विनिवारणीयमहितं भक्तस्य वार्तैव का
द्वित्राण्येव दिनानि धात्रि दयया धात्रीरसः पीयताम्।
जीवत्वेष शिशुर्भजस्व विविधैरस्योत्सवैः संपदं
वैद्येनेति निवेद्यमानमकरोत् सा सर्वमेवाश्रुतम् ॥७२॥

दृष्ट्वा तत्रातुरं बालं तृणवत् सुतरागिणी।
सा ययौ निर्दया रात्रौ गृहीत्वा हेमसूत्रिकाम् ॥७३॥

ततः प्रत्यन्तविषये प्रभूतच्छागगोचरा।
ख्याता धनवती नाम स्फीतां चक्रे गृहस्थितिम् ॥७४॥

साथ मेघापघातेन तस्मिन् पशुधने वने।
स्वकाय इव सापाये याते चर्मावशेषताम् ॥७५॥

गृहीत्वा पशुपालस्य स्थूलं निक्षेपकम्बलम्।
गत्वावन्तिपुरं चक्रे ताराख्यापूपविक्रयम् ॥ ७६॥

क्रीत्वा गणेशनैवेद्यमण्डकानां करण्डकम्।
पुनः पाकोष्मणा नित्यमकरोद् विक्रयं पथि ॥७७॥

साभुङ्क्त गृहनारीणां प्रभूतोज्जामतण्डुलम्।
प्रभूतलाभलुब्धानां मूलस्यापि परिक्षयः ॥७८॥

पान्थकन्यां घृताभ्यक्तां कृत्वा कुशलिकाभिधा।
मिथ्यासन्नविवाहार्थमयाचत गृहे गृहे ॥७९॥

ततः सा पञ्जिका नाम द्यूतशालापुरः स्थिता।
कपटाक्षशलाकानामकरोद् गूढविक्रयम् ॥८०॥

सा पौष्टिकी मुकुलिका कृत्वा निर्माल्यविक्रयम्।
देवप्रासादपालानां मूल्यं भुक्त्वा ययौ निशि ॥८१॥

ग्रामयात्रासु सा वारिसत्रदात्री हिमाभिधा।
रङ्गप्रेक्षणबालानां निनाय वलयादिकम् ॥८२॥

सा नक्षत्रपरावृत्तिं कृत्वा षट्काष्टकेष्वपि।
विवाहेष्वकरोद् यत्नं वर्णाख्या कूटवर्णनैः ॥८३॥

गणविज्ञानिका मुग्धप्रत्ययैः ख्यातिमाययौ ।
नामाभिज्ञानमात्रज्ञा न तु चौरान् विवेद सा ॥८४॥

भावसिद्ध्यभिधाना सा देवतावेशधारिणी।
उपहारान् प्रयच्छेति वदन्ती नावदत् परम् ॥८५॥

तत उन्मत्तिका भूत्वा सा नग्नालिङ्गिता श्वभिः।
कुम्भादेवीति विख्याता प्राप पूजापरम्पराम् ॥८६॥

क्षिप्रोपदेशलुब्धेन कुलदासेन मन्त्रिणा।
सार्चिता प्रययौ हृत्वा पूजाराजतभाजनम् ॥८७॥

साथ तक्षकयात्रायां चलहण्ठा दिनत्रयम्।
कल्पपाली कला नाम विदधे मद्यविक्रयम् ॥८८॥

कटिघण्टाभिधानस्य सा क्षीबस्य तपस्विनः।
रात्रौ तत्र प्रसुप्तस्य घण्टाः सप्त समाददे ॥८९॥

ततः सा भूरिधत्तूरमधुना नष्टचेतसाम्।
पान्थानां सर्वमादाय निशि शूरपुरं ययौ ॥९०॥

एवं कृत्वा लवणसरणौ भारिकं भर्तृसंज्ञं
तस्मिन् निद्रावशमुपगते रात्रिमन्यैः क्षिपन्ती।
प्रातर्बद्ध्वा पृथुकटितटं सङ्कटे दीर्घदाम्ना
मूर्ध्ना भारं दिवसमखिलं सा विलासैरुवाह ॥९१॥

निःशुष्कैरतटैर्महाहिमपथैरुल्लङ्घ्य घोरान् गिरीन्
बम्बा नाम दिनावसानसमये मान्याङ्गनारूपिणी।

हेमन्ते वसनावगुण्ठितमुखी पश्चालधारामठे
शीतार्ता घनलम्बकम्बलवती चक्रे स्पृहां कातरा॥९२॥

साथ सत्यवती नाम वृद्धा ब्राह्मण्यवादिनी।
बभ्राम सागरद्वीपरशनाभरणां भुवम्॥९३॥

क्वचिद् योगकथाभिज्ञा क्वचिन् मासोपवासिनी।
क्वचित् तीर्थार्थिनी मिथ्या सा परं पूज्यतां ययौ॥९४॥

वेधधूननधूपेन मूर्खश्रद्धाविधायिनी।
महती प्रतिपतिं सा लेभे भूपतिवेश्मसु॥९५॥

सेनास्तम्भं करिष्यामि राज्ञां कृत्वेति वर्णनम्।
भुक्त्वा हेम ययौ रात्रौ प्रत्यासन्ने रणोद्यमे॥९६॥

केदाराम्बुगयाश्राद्धगङ्गास्नानादिवादिनी।
तत्फलं बन्धमाधाय सार्थेभ्यः साग्रहीद् धनम्॥९७॥

नष्टच्छायोपदेशार्थं सार्थिता पथि दस्युभिः।
रूढा शिविकया वर्षं प्रपलाय्य ययौ ततः॥९८॥

चीनानकानामण्डानि साथ रुद्राक्षसंज्ञया।
ददौ मूल्येन शिष्याणां रुद्राक्षाधिक्यवादिनी॥९९॥

बिलसिद्धिधृतश्रद्धागृहीताभरणाम्बरान्।
सा चिक्षेपान्धकूपेषु पातालललनोत्सुकान्॥१००॥

अङ्गविद्धविषास्मीति सुस्निग्धविषगण्डकैः।
सा बबन्ध गले मालां विषजाङ्गुलिकाभिधा॥१०१॥

शुल्कस्थानेषु सर्वेषु शौल्किकेभ्यः स्वभावतः।
मुहूर्तमोहनं पुष्पं सा दत्त्वा स्वेच्छया ययौ॥१०२॥

वर्षाणां मे सहस्रं गतमधिकतरं वेद्म्यहं धातुवादं
सिद्धो मे वाक्प्रपञ्चः करतलकलितं त्रैपुरं कामतत्त्वम्।
उर्वर्यां गर्वखर्वीकृतसकलगुरुग्रामभक्त्या तयास्या-
मित्याख्यानेन नीताश्चरणतललिहष्ठाक्कुराः कुक्कुरत्वम्॥१०३॥

पूजासज्जा भजन्ते जयनुतिषु नतिं दिक्षु काम्बोजभोजाः
सेवाशुष्कास्तुरुष्काः परिचरणरसे किं च चीनाः प्रलीनाः।
उत्कण्ठार्तास्त्रिगर्ताः परिचरणविधौ पीडयन्त्येव गौडा
दम्भारम्भेण तस्या विदधति कुसुमोत्सङ्गतामङ्गवङ्गाः॥१०४॥

भ्रान्त्वा महीं जलनिधिप्रथितामशेषां
मायाविनीतिविदिताविरतोन्नतिः सा।
प्राप्ता पुनर्निजपदं तनुचीरशेषा
क्षीणोऽपि देहमिव कस्त्यजति स्वदेशम्॥१०५॥

सा सर्वदेशपरिशीलितवेषभाषा
प्रभ्रष्टभूपतिसुताहमिति ब्रुवाणा।
छिन्नाङ्गुलिर्दशनखण्डितनासिकाग्रा
लालाटनीलतिलकैर्विदिता ममैव॥१०६॥

सा चेत् प्रकीर्णधनगेहनिधानसर्पी
गृह्णाति लोभजननी जननीपदं ते।
तत्कामिलोकसकलार्थसमृद्धिमेतां
यत्नाद् विना सुतनु हस्तगतामवेहि॥१०७॥

तस्मात्तामहमेव कूटकुटिलां गत्वा स्वयं त्वत्कृते
सर्वज्ञां सकलार्थसार्थसरणेः सिद्ध्यै समभ्यर्थये ।
किं किं वा कथयामि सैव जगतीं जानाति जेतुं धिया
नास्त्यन्या गतिरित्युदीर्य हितकृत् तूर्णं ययौ नापितः ॥१०८॥

**इति श्रीव्यासदासापराख्यक्षेमेन्द्रनिर्मितायां समयमातृकायां चरितोपन्यासो नाम द्वितीयः समयः ॥**

* * * * *

## तृतीयः समयः

### प्रदोषवेश्यालापवर्णनम्

अथ सर्वार्थजननीं जननीं वेशयोषिताम्।
मित्रे स्वभावमलिनामानेतुं गन्तुमुद्यते ॥१॥

सङ्कोचक्लेशसञ्जातां शूरतामिव रागिणाम्।
आसन्नश्रीवियोगानां स्वापग्लानिरजायत ॥२॥

शनैर्दिनधने क्षीणे स्वल्पशेषाम्बरः परम्।
अलम्बत क्षणं रागी सन्ध्याधाम्नि दिनेश्वरः ॥३॥

सन्ध्यया क्षिप्ररागिण्या निरस्तः परितापवान्।
नीरागः सागरजले चिक्षेप तपनस्तनुम् ॥४॥

ततस्तिमिरसम्भारैर्वाररामाप्रसाधने।
कृष्णागुरुभरोद्भूतधूपधूमोद्गमायितम् ॥५॥

यामिनीकामिनीकीर्णकेशपाशोपमं तमः।
दीपचम्पकमालाभिर्विश्रान्तिनियमं ययौ ॥६॥

अथ स्ववेशवनितासापत्न्यकलहच्युतम्।
अदृश्यत शशाङ्कार्धं दन्तपत्रमिवाम्बरे ॥७॥

रजनीरमणीकान्ते दिनान्ते तुहिनत्विषि।
उदिते मुदिते लोके बभूव मदनोत्सवः ॥८॥

भुक्तां सहस्रकरसम्पदमम्बरश्रीः
कृत्वा जनस्मरणमात्रदशावशेषाम्।

वेश्येव काममनपेक्षितपक्षपाता
क्षिप्रं शशाङ्कविभवाभरणां बभूव॥९॥

ततः कर्तुं प्रवृत्तेषु वेश्यावेशमाग्रवर्त्मसु।
विटेषु मधुलुब्धेषु निर्व्यापारं गतागतम्॥१०॥

द्वाराग्रदत्तकर्णासु ग्रहणग्रहणेप्सया।
कुट्टनीषु तृणापातेऽप्युन्मुखीषु मुहुर्मुहुः॥११॥

दिनकामुकनिर्माल्यमाल्यताम्बूलिनीं भुवम्।
सम्मृज्य सज्जशय्यासु वेश्यास्वन्यप्रतीक्षया॥१२॥

आस्तीर्यमाणखट्वान्तः किङ्किणीक्वाणसंज्ञया।
पारावतेषु विरुतैर्व्रजत्सु स्मरवन्दिताम्॥१३॥

गृहीतस्योपरि कथं गृह्यते ग्रहणं पुनः।
पूर्वं किं नागतोऽसीति वदन्तीष्वपरासु च॥१४॥

उदराबद्धवसनैर्जटाग्रन्थिनिपीडनम्।
कुर्वाणैर्वारकलहे प्रारब्धे शठदेशिकैः॥१५॥

स्वयं मात्रा च युगपद् गृहीते ग्रहणद्वये।
वारे प्राप्ते तृतीये च यान्तीष्वन्यास्वदर्शनम्॥१६॥

अनायाते परिचिते प्रत्याख्याते नवागते।
उभयभ्रंशशोकेन सीदन्तीष्वपरासु च॥१७॥

भुक्तोज्झितानामन्यासु पुनः प्राप्तार्थसम्पदाम्।
जननीं दुर्जनीकृत्य कुर्वाणासु प्रसादनम्॥१८॥

यदि त्वां सा सुजननी न जानीयात् सुधामयम्।
अभविष्यदुपायो मे तत् कोऽसौ प्राणधारणे॥१९॥

नित्यावहारकुपितं सर्वार्थैरुपकारिणम्।
ऋजुमावर्जयन्तीषु विदग्धासु तवैरिषु (?)॥२०॥

अन्यनाम्ना प्रविष्टानां कलहे कूटकामिनाम्।
कुट्टनीषु रटन्तीषु घण्टारणरणोत्कटम्॥२१॥

प्रसुप्तकटकक्षीबक्षीणक्षुद्राभृते गृहे।
सखीभवनमन्यासु यान्तीष्वादाय कामुकम्॥२२॥

बालमार्जारिकाह्वानव्याजेनान्यासु वर्त्मनि।
कटाक्षैः कलयन्तीषु दूरात् कामुकमामिषम्॥२३॥

एकः स्थितोऽन्तः प्राप्तोऽन्यः परस्याद्यैव दुर्ग्रहः।
किं करोमीति जननीं पृच्छन्तीष्वपरासु च॥२४॥

निशा दीर्घा नवः कामी तनयेयं कनीयसी।
व्यग्रेति कालहाराय वृद्धावर्गे कथोद्यते॥२५॥

नाज्ञाताद् गृह्यते भाटी चरन्ति म्लेच्छगायनाः।
इत्यन्यासु वदन्तीषु शून्यशय्यासु लज्जया॥२६॥

आयाते वार्यमाणेऽपि निर्माने क्षीणकामुके।
व्याजकुक्षिशिरः शूलाक्रन्दिनीषु परासु च॥२७॥

मुग्धकामुकमित्राणां स्वेच्छया व्ययकारिणाम्।
प्रस्तुते स्थिरलाभाय कुट्टनीभिर्गुणस्तवे॥२८॥

लज्जामहे वयं स्वल्पधनेनेति विभाविनि।
गण्यमाने दशगुणे धूर्तैः प्रथमकामिनाम्॥२९॥

प्रवाससक्तेरधिकारिसूनोः स्थितावरुद्धा तनया ममेति।
काचिद् वदन्ती विजने विगूह्य जग्राह भाटीं त्रिगुणां समृद्धात्॥३०॥

अल्पं ममैतद् दुहितुर्न योग्यं न च क्षणोऽस्ति त्वमदृष्टपूर्वः।
इति ब्रुवाणापि विटं पटान्ते गाढं गृहीत्वा न मुमोच काचित्॥३१॥

अमात्यपुत्रेण सुताद्य नीता
क्षमस्व रात्रिं प्रणयान् ममैकाम्।
उक्त्वेति काचित् जरती चकार
रिक्तस्य सक्तस्य च विप्रलम्भम्॥३२॥

दातव्यं न ददाति वारविरहे टक्कोऽद्य लब्धस्थलः
क्रूरः सैन्यपतिः प्रयाति रिपुतामद्यैव वारं विना।
वृत्तिर्देवगृहात् कथं नु दिविरे वारोज्झिते लभ्यते
वाटीपेटकवारतां गतवती प्रोवाच काचित् सखीम्॥३३॥

अन्यास्ताः सखि कूटपाशनिचयैराकृष्टमुग्धश्रियः
कुर्मः किं वयमेव वञ्चनकलां जात्या न जानीमहे।
सद्भावे सततं स्वभावविमुखः सर्वाभिशङ्की जनो
वाक्यैः काचिदिति प्रकाशमकरोत् सक्तार्जवावर्जनम्॥३४॥

......सकलैव सा रसवती नीता क्षणेन क्षपा
पापेन क्षपितं दिनं निशि तया शय्यावहारः कृतः।

इत्युद्वेगपरिग्रहग्लपितधीः पृष्टः सहासैर्विटै-
र्व्याचष्टे कटुकुट्टनीकुटिलतामक्लिष्टकूटां विटः ॥३५॥

नास्मद्गेहप्रवेशः सगुणजनकथाकेलिमात्रोपचारै-
र्व्यापारारम्भसारप्रवसदवसरे वासरे कामुकानाम्।
वृत्तिर्वृत्तानुरोधात् कथमपि विदिताद् गृह्यते यामवत्या
इत्युच्चैः काचिदूचे बहुगतगणिकावर्गगर्वोपशान्त्यै ॥३६॥

कुरु तरलिके हारं कण्ठे गृहाण मनोहरे
वलययुगलं लीले लोलां विलोकय मेखलाम्।
भज मलयजं चित्रे रात्रिः प्रयाति कठोरता-
मिति चतुरताचार्यस्तासां बभूव सखीजनः ॥३७॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रनिर्मितायां समयमातृकायां प्रदोषवेश्यालापवर्णनं नाम तृतीयः समयः ॥

* * * * *

## चतुर्थः समयः - पूजाधरोपन्यासः

अस्मिन्नवसरे धूर्तवार्तालीना सुकुट्टनी।
नापिताख्येन तमसा रजनीव सहाययौ॥१॥

अस्थियन्त्रशिरातन्त्री लीनान्त्रोदरकृत्तिका।
शुष्ककायकरङ्काङ्कावृतेव कटपूतना॥२॥

वहन्ती सुबहुच्छिद्रं शरीरं चर्मबन्धनम्।
अन्तर्गतजगद्व्याजशिक्षाशकुनिपञ्जरम्॥३॥

सर्वस्वग्रहणेनापि लम्बमानमुखी सदा।
तुलेवाङ्कसहस्राङ्का त्रैलोक्यतुलने कलेः॥४॥

समा समधने पापे सपापाधमगाधमे।
धात्रा कृत्रिमरागस्य स्वरमालेव निर्मिता॥५॥

सुस्पष्टदृष्टदीर्घोग्रदशना भीषणाकृतिः।
प्रसवक्रूरकोपेन संस्थितास्थिरता शुनी॥६॥

उलूकवदना काकग्रीवा मार्जारलोचना।
निर्मिता प्राणिनामङ्गैरिव नित्यविरोधिनाम्॥७॥

वेश्यावनैकपालिन्या यया रागमहाव्रते।
कृता कामुकलोकस्य खट्वाङ्गशरणा तनुः॥८॥

सक्ताश्रुपातजननीं तां विलोक्य कलावती।
अभिचारहुतस्याग्नेः कालीं धूमशिखामिव॥९॥

ससम्भ्रमोत्थिता तस्याः कृत्वा चरणवन्दनम्।
दत्त्वा निजासनं चक्रे स्तुतिं पूजापुरःसराम्॥१०॥

वेश्योपदेशविषये चतुराननत्वान्
मायाप्रपञ्चनिचयेन जनार्दनत्वात्।
रिक्तप्रसक्तकलहैरतिभैरवत्वात्
सर्गस्थितिक्षयविधातृगुणा त्वमेव॥११॥

उद्भिन्नयौवनमनोहररूपशोभा-
सम्भाविताभिनवभोगमनोभवानाम्।
एणीदृशां त्वदुपदेशविवर्जितानां
मातर्भवन्ति न हि नाम समीहितार्थाः॥१२॥

तस्माद् भजस्व परिकल्पितपुत्रिकां मां
भक्तामनन्यशरणां शरणं प्रपन्नाम्।
आत्मार्पणप्रणयिनां नवदर्शनेऽपि
जात्यैव पेशलधियः सदया भवन्ति॥१३॥

इत्यर्थिता कलावत्या प्रत्यासन्नसुखस्थितिः।
मनुष्यामिषकङ्काली कङ्काली तामभाषत॥१४॥

सङ्क्रान्तहृदयस्नेहा निःशूलप्रसवोद्भवा।
गर्भभारं विना पुत्रि त्वं सुताभिमता मम॥१५॥

कङ्केन जन्मसुहृदा त्वदर्थमहमर्थिता।
स्यूतेयं मे विटच्छिन्ना नासा येन पुनः पुनः॥१६॥

पात्रं मदुपदेशस्य त्वमेव त्रिदशोचिता।
सद्भित्तिलिखितं चित्रं चित्रतामेति नेत्रयोः॥१७॥

श्रूयतां प्रथमं पुत्रि भूत्यै यत् कथयाम्यहम्।
कलाकोषं तु कालेन नित्याभ्यासादवाप्स्यसि॥१८॥

न कुलेन न शीलेन न रूपेण न विद्यया।
जीविताभ्यधिकं बुद्धिलभ्यं धनमवाप्यते॥१९॥

प्रायेण जगति प्रज्ञा नाना.....स्ति कस्यचित्।
इयतीं जगतीं वेद्मि पूर्णामूर्णायुभिर्जडैः॥२०॥

अज्ञातकालोचितकर्मयोगा रोगा इवाहर्निशपच्यमानाः।
जगत्त्रये देवमनुष्यनागाः प्रज्ञादरिद्राः खलुः सर्व एव॥२१॥

ज्येष्ठेन तावत् परमेष्ठिनैव विचारशून्येन कृतं किमेतत्।
यत् कामिनीपीनपयोधराणां विद्युद्विलोला किल यौवनश्रीः॥२२॥

का नाम बुद्धिहीनस्य विधेरस्ति विदग्धता।
कूष्माण्डानां न यश्चक्रे तैलमूर्णां च दन्तिनाम्॥२३॥

रत्नार्थिना जलनिधौ मधुसूदनेन
क्लेशः किलाद्रिवलनप्रभवोऽनुभूतः।
किं सैव पूर्वमखिलार्थविलुण्ठनाय
कान्ताकृतिः कपटकाममयी न सृष्टा॥२४॥

निद्रा महीभारपरिग्रहश्च श्रीसंश्रयत्वं परयाचनं च।
अत्युन्नतत्वं गुणहीनता च किं युक्तमेतत् पुरुषोत्तमस्य॥२५॥

कृशः शशी गणा नग्ना भार्या वस्त्रार्धहारिणी।
शम्भोर्धनपतिप्रीतिर्न विद्मः क्वोपयुज्यते॥२६॥

भस्माङ्गः प्रकटं बिभर्ति ललनां योऽङ्गे स किं युक्तकृन्
निःसङ्गः सततं गणेषु रमते यः किं स सत्यव्रतः।
यः सक्तः परमेश्वरोऽपि वृषभृद्वर्गे स किं नीतिमान्।
गोप्यां यः कुटिलां कलां स्फुटतया धत्ते स किं धीधनः॥२७॥

किं कामिनीप्रणयिना दिननायकेन
संशातितं भ्रमकृता कृतिना स्वतेजः।
अर्थेन किं न विहिताभिमुखा मृगाक्षी
वित्तेन तीक्ष्णतरमप्यबला सहेत॥२८॥

चन्द्रस्येश्वरसेवया कृशतनोः क्षैण्यं न निर्मूलितं
मानी मूर्ध्नि जडः स्थितः कथमिव प्राप्नोति सम्पूर्णताम्।
वृद्ध्यर्थी यदि किं करोति चरणोपान्ते न तस्यास्पदं
हन्त्येव स्वसमीहितं गुणमदादुच्चैः स्थितिः सेवकः॥२९॥

यातः प्रतारयितुमीश्वरमङ्गनायां
मारः पुरा किमिति कार्मुकबाणपाणिः।
नाग्रे ततान वनितागुणवर्णनानां
यत् सौ...तेन नियतं विननाश मूर्खः॥३०॥

रक्तोऽप्यशोकविटपी परपुष्टबन्धोः
प्राप्नोति यस्य विभवे चरणप्रहारम्।
तस्मै समृद्धिसचिवैर्मधुपैर्निपत्य
घूर्तैर्निपीतमधवे मधवे नमोऽस्तु॥३१॥

स्वाम्यं सर्वजगत्सु दिव्यमुनयस्तत्रोचिता मन्त्रिणो
राष्ट्रं स्वर्गमही महामणिगुरुः कोषः सुधाम्भोनिधिः।
दुर्गं मेरुशिरः स्वसैन्यममराः श्रीमान् मुरारिः सुहृत्
सा बुद्धिर्विबुधाधिपस्य तु यया व्याप्तं भगाङ्कैर्वपुः॥३२॥

लुब्धस्याफलकालकूटकटुकक्रोधस्य निस्तेजसः
सर्वाक्रान्तिनिपीडितस्य जलधेर्दातुं प्रवृत्तस्य ते।
सङ्ख्यातीतसमस्तरत्नवसतेर्मूर्खाः किमेतावता
मोहादेकगजाश्वपादपसुरामात्रेण तुष्टाः सुराः॥३३॥

रामेण हेमहरिणाहरणोत्सुकेन
कूटाक्षकेलिसरणेन युधिष्ठिरेण।
ईर्ष्यारुषा द्विजरुषा जनमेजयेन
दत्तः परं मनुजवर्त्मेति मौग्ध्यसेतुः॥३४॥

नागैस्ताक्ष्र्यसमर्पितं तदमृतं यत्नश्रमैर्दुर्लभं
नो पीतं न विलोकितं न पिहितं मोहात् परं हारितम्।
तस्मान्नास्ति जगत्त्रयेऽपि विमलः प्रज्ञाकणः कस्यचित्-
सर्वः प्राक्तनजन्मकर्म...वशादर्थोद्यमे धावति॥३५॥

एवं जडेषु लोकेषु स्त्रीषु मुग्धासु का कथा।
बुद्धिहीनप्रसादेन जीवामः केवलं वयम्॥३६॥

मुग्धः प्रत्ययमायाति प्रत्यक्षेऽप्यन्यथा कृते।
मायाप्रपञ्चसारश्च वेश्यानां विभवोद्भवः॥३७॥

पुरा मठरकाख्यस्य मया पाणौ द्विजन्मनः।
ताम्बूलकल्ककलितं ष्ठीवितं हास्यलीलया॥३८॥

मुग्धस्ततोऽवमानेन सोऽभिजातोऽभिमानवान्।
जनसंसदि जज्वाल क्रोधादात्मवधोद्यतः ॥३९॥

साधो धातुप्रकोपेन मिथ्या पश्यसि विभ्रमम्।
न मया ष्ठीवितं किञ्चिद् भित्तौ पाणिः प्रमृज्यताम् ॥४०॥

जात्या चर्ममयं चक्षुस्तस्मिन् कः प्रत्ययस्तव।
मम सद्भावशीलायाः प्रमाणं वचनं न किम् ॥४१॥

इत्युक्त्वा तीव्रशपथैर्गलहस्तादिवादनैः।
स मया प्रकृतिं नीतस्तथेति प्रत्ययं ययौ ॥४२॥

पदे पदे जगत्यस्मिन् निधिर्देवेन निर्मितः।
विटचारणवेश्यानां बुद्धिहीनावलम्बनम् ॥४३॥

नवयौवनकाले मे गृहं विप्रसुतः पुरा।
विवेश रात्रिभोगाय नाम्ना शङ्करवाहनः ॥४४॥

शाठ्यादिवातिकठिनं पीनं प्रथमयौवनम्।
तं ब्रह्मचारिणं दृष्ट्वा सोद्वेगाहमचिन्तयम् ॥४५॥

कठिनोऽयं निशा दीर्घा क्षपिता कामुकैरहम्।
तस्माद् भोगावहारोऽस्य मया कार्यः प्रयत्नतः ॥४६॥

इति सञ्चिन्त्य सुचिरं मया तैस्तैः कथाक्रमैः।
आसन्नशय्यावसरे यामः पूर्वोऽतिवाहितः ॥४७॥

आस्तां किमन्यद् वक्तव्यं श्रुतमेतदितस्ततः।
पतिता नेत्रयोर्निद्रेत्युवाच स पुनः पुनः ॥४८॥

कथाबन्धेऽथ विरते तत्सङ्गमनिवृत्तये।
शूलापदेशेन मया कृतः कृतकनिःस्वनः ॥४९॥

सोऽथ मुग्धः प्रकृत्यैव सत्यप्रत्ययमोहितः।
चक्रे शूलोपशान्त्यै मे चक्रे (?) सर्वाङ्गमर्दनम् ॥५०॥

सादरं मृद्यमानेषु तेनाङ्गेषु शनैः शनैः।
प्रययौ सोपरोधेव क्षणदा क्षणवन् मम ॥५१॥

ततः प्रभाते तद्भोगवञ्चने चिन्तितं मया।
पशुबुद्धिर्वराकोऽयं मया शूलेन वाहितः ॥५२॥

अनेन मेषमुग्धेन दत्ता भाटी चतुर्गुणा।
भोगावहारन्यायेन ध्रुवं तामनुयाचते ॥५३॥

तस्मादेष रतिस्पृष्टीकार्यस्तावद् यथा तथा।
न्यायाय सुरतोच्छिष्टं कथं समुपसर्पति ॥५४॥

इति ध्यात्वाहमारब्धरतिभोगा क्षपाक्षये।
प्रीत्येवाकरवं तस्य पण्यानृण्याय चुम्बनम् ॥५५॥

आरूढरतियन्त्रो मे शूलक्लेशकृपाकुलः।
अलं मत्सङ्गमेनेति सानुरोधोऽवदत् स माम् ॥५६॥

आवर्जनाय तस्याथ निर्व्याजार्जवचेतसः।
मया मिथ्याप्रियालापैर्विहितो रञ्जनक्रमः ॥५७॥

अहो बतामृतस्पर्शस्तवाङ्गेषु विभाव्यते।
अधुनैव मया दृष्टं यस्य प्रत्यक्षलक्षणम् ॥५८॥

गूढाङ्गेन त्वया स्पृष्टे ममास्मिन् रमणस्थले।
न जाने क्व गतं शूलं मत्पुण्यैस्त्वमिहागतः ॥५९॥

इति श्रुत्वैव मद्वाक्यं सहसा साश्रुलोचनः।
रत्यर्धविरतः शोकात् सोऽन्तः सानुशयः परम् ॥६०॥

निजं वक्षो ललाटं च ताडयित्वा स पाणिना।
हा कष्टं हा हतोऽस्मीति वदन् मामिदमब्रवीत् ॥६१॥

पूर्वं नैतन्मया ज्ञातं यन्मदङ्गसमागमः।
शूलं हरति नारीणां मणिमन्त्रौषधादिवत् ॥६२॥

मन्दपुण्यस्य जननी वात्सल्यजननी मम।
सुचिरस्थायिना भद्रे शूलेन निधनं गता ॥६३॥

विदितोऽयं प्रकारश्चेदभविष्यदसंशयः।
तज्जनन्या वियोगो मे नाभविष्यद् विचेतसः ॥६४॥

इत्युक्त्वा वञ्चितोऽस्मीति स रुदित्वा विनिर्ययौ।
पुरुषाकारसन्दिग्धनिर्विषाणवृषोपमः ॥६५॥

नित्यं भोजनमैथुनप्रणयिनस्त्यक्तान्यकार्याः परं
लोकेऽस्मिन् गलगर्तमात्रसुखिनः सन्त्येव शून्याशयाः।
ये मेषप्रतिमाः क्षयोद्यतमतेः सर्वस्वहर्तुः क्षणा-
दाप्तस्येव विनिक्षिपन्ति नितरां निः शङ्कमङ्के शिरः ॥६६॥

इत्यबुद्धिधनाधाननिधानैर्विविधोदयैः।
कूटपण्यैरसामान्यैस्तारुण्यमतिवाह्यते ॥६७॥

असत्येनैव जीवन्ति वेश्याः सत्यविवर्जिताः।
एताः सत्येन नश्यन्ति मद्येनेव कुलाङ्गनाः ॥६८॥

सत्यं विनाशाय पराङ्गनानामसत्यसारा गणिकागणश्रीः।
सत्येन वेश्याः किल दृष्टसारा दरिद्रशाला इव कस्य सेव्याः ॥६९॥

दानेन नश्यति वणिङ्नश्यति सत्येन सर्वथा वेश्या।
नश्यति विनयेन गुरुर्नश्यति कृपया च कायस्थः ॥७०॥

वेश्याजनस्य कितवस्येव वञ्चनमायया।
अहो वैदग्ध्यमित्युक्त्वा परोऽपि परितुष्यति ॥७१॥

पुराहं पृथिवीमेतां भ्रान्त्वा जलधिमेखलाम्।
प्राप्ता वेश्यास्पदं लोभात् पुरं पाटलिपुत्रकम् ॥७२॥

कुट्टन्यस्तत्र सर्वज्ञा दृष्ट्वा मामल्पकौशलाम्।
जहसुः सस्वनं येन ह्रीताहं क्ष्मामिवाविशम् ॥७३॥

ततस्तेनावमानेन गणेशायतनाग्रतः।
स्थिता कृतोपवासाहमहङ्कारविवर्जिता ॥७४॥

अथ स्वप्ने गणेनाहं पृष्टा शङ्करसूनुना।
उपवासाः कियन्तस्ते प्राप्ता इति पुनः पुनः ॥७५॥

स मयाभिहितः कूटकृतप्राणान्तचेष्टया।
मासद्वयमतिक्रान्तं व्रतादनशनस्य मे ॥७६॥

तच्छ्रुत्वा स स्मितमुखः सर्वज्ञः प्राह मां गणः।
अहो व्रतेऽपि स्वप्नेऽपि नासत्यादस्ति ते च्युतिः ॥७७॥

परितुष्टोऽस्मि ते भद्रे निश्चलासत्यनिश्चयात्।
महामायामयकला लब्धभोगा भविष्यसि ॥७८॥

गणेशानुचरः पूर्वमिति मह्यं वरं ददौ।
असत्येनैव वेश्यानां भवन्ति धनसंपदः ॥७९॥

धनप्रधानं जनजीवभूतं लोकेषु तत्रापि विशेषयोगात्।
जनाभिसारप्रतिपत्तिभाजां महीभुजां वेशमृगीदृशां च ॥८०॥

धनेन लभ्यते प्रज्ञा प्रज्ञया लभ्यते धनम्।
प्रज्ञार्थौ जीवलोकेऽस्मिन् परस्परनिबन्धनौ ॥८१॥

ईश्वरः स जगत्पूज्यः स वाग्मी चतुराननः।
यस्यास्ति द्रविणं लोके स एव पुरुषोत्तमः ॥८२॥

स एवाहृदयो राहुरलसः स शनैश्चरः।
वक्रः कुजन्मा सततं वित्तं यस्य न विद्यते ॥८३॥

सुजातस्य प्रयातस्य माङ्गल्यस्पृहणीयताम्।
धनिकस्य विकारोऽपि क्षीबस्येव जनप्रियः ॥८४॥

धनिनश्चन्दनस्येव सच्छायस्य मनोमुषः।
निष्फलस्यापि लोकोऽयं सम्पर्कं बहु मन्यते ॥८५॥

निस्त्रिंशा अपि सस्नेहा भवन्ति श्रीमतः परम्।
स्वकेशा अपि निःस्वानां निःस्नेहा यान्ति रूक्षताम् ॥८६॥

सेव्यः कविबुधादीनां गुरुः शूरकलावताम्।
गतिप्रदोऽर्थवानेव व्योममार्ग इवोन्नतः ॥८७॥

विक्रीय स्वगुणं निःस्वः स्वयं मासमिव द्विजः।
सद्यः पतति निःसत्त्वः पतितः केन पूज्यते॥८८॥

गुणिनां चित्तवैकल्याद् गुणा निर्गुणवाञ्छया।
हृदयेष्वेव सीदन्ति विधवानामिव स्तनाः॥८९॥

विद्वद्भिः परिवारिताः सगुणतामायान्ति वित्तैर्नराः
शूरत्वं सुभटैः कुलोन्नततरैः प्रख्यातसद्वंशताम्।
तस्माद् वित्तसमाश्रये गुणगणे वित्ते च नान्याश्रये
वित्तं वित्तमनन्यचित्तनियताः सम्पन्निमित्तं नुमः॥९०॥

अम्लानमाल्याभरणाम्बरस्य वराङ्गनानन्दनमन्दिरस्य।
नित्यप्रकाशोत्सवसेवितस्य स्वर्गस्य वित्तस्य च को विशेषः॥९१॥

अशेषदोषापगमप्रकाशमित्रागमोत्साहमहोत्सवार्हम्।
विकासशोभां जनयत्यजस्रं धनं जनानां दिनमम्बुजानाम्॥९२॥

वित्तेनाभिजनी गुणी परिजनी मानी प्रमाणीकृतः
सद्भिर्जन्तुरुपैति साधुपदवीं किं वा बहु ब्रूमहे।
वित्तेन व्रततीर्थसार्थसरणक्लेशाभियोगं विना
तीर्यन्ते ततपातकव्यतिकरास्ते ब्रह्महत्यादयः॥९३॥

श्रूयतां यत् पुरा वृत्तं वाराणस्यां स्वयं मया।
श्रुतं विश्रुतसत्त्वस्य चरितं गृहमेधिनः॥९४॥

तत्राभवद् गृहपतिर्धरातलधनाधिपः।
द्विजन्मा श्रीधरो नाम महाब्धिरिव रत्नवान्॥९५॥

अर्थिकल्पतरोस्तस्य राजार्हवरभोजनैः।
अवारितमभूद् गेहे भोज्यसत्रं सदार्थिनाम्॥९६॥

तस्य विप्रसहस्रेषु भुञ्जानेषु सदा गृहे।
लोके युधिष्ठिरकथा श्लथादरकथां ययौ॥९७॥

ततः कदाचिदाचारनिधेस्तस्य समाययौ।
नियतात्मा यतिर्गेहं ज्ञानात्मा नाम दिव्यधीः॥९८॥

स पूज्यः पूजितस्तेन श्रद्धयोपनिमन्त्रितः।
पाकशालां ययौ द्रष्टुं भक्ष्यराशिशतान्विताम्॥९९॥

तत्रापश्यत् स सर्वान्नव्यञ्जनादिगणोपरि।
सितयज्ञोपवीताङ्कं लम्बमानतनुं शवम्॥१००॥

स्रवद्भिस्तस्य गात्रेभ्यः सूक्ष्मशोणितबिन्दुभिः।
अन्नं सर्वजनादृष्टैः सिच्यमानं ददर्श सः॥१०१॥

दृष्ट्वा तदतिबीभत्सं घृणासङ्कुचिताशयः।
संस्पृष्टकर्णः स ययौ ततस्तूर्णमलक्षितः॥१०२॥

अथ संवत्सरे याते पुनरभ्येत्य कौतुकात्।
सोऽपश्यन्मांसहीनं तत् स्नायुबद्धं कलेवरम्॥१०३॥

शिरामुखशतैस्तस्य क्लिन्नस्नेहकणैश्चितम्।
स दृष्ट्वा भोज्यमगमत् जुगुप्सामीलितेक्षणः॥१०४॥

वर्षेण पुनरायातः सोऽस्थिशेषशवस्रुतैः।
अन्नव्यञ्जनमद्राक्षीद् व्याप्तं द्वित्रैर्वसाकणैः॥१०५॥

कौतुकाद् वत्सरे याते सोऽपश्यत् पुनरागतः।
कपालशेषकलनादन्नोपरि रजश्च्युतम्॥१०६॥

षड्भिर्मासैरथायातः शुद्धं शवविवर्जितम्।
रम्यं महानसं दृष्ट्वा पुरोहितमुवाच सः॥१०७॥

अहो गृहपतेरस्य महासत्रेण पातकम्।
क्षीणमल्पेन कालेन लीढं याचककोटिभिः॥१०८॥

बभूव पूर्वपुरुषोपार्जितास्य गृहाश्रया।
ब्रह्महत्या शतवती सात्र दानात् क्षयं गता॥१०९॥

यैस्तस्य भवने भुक्तं तैस्तत्पापं समाहृतम्।
पापमन्नाश्रयं पुंसां भोक्तारमुपसर्पति॥११०॥

ब्रह्महत्या भवस्यापि या बभूव भयप्रदा।
धनेन क्षपिता सेयमहो धनमहो धनम्॥१११॥

इत्युक्त्वा स शिलापट्टे लिखित्वा श्लोकमादरात्।
पुरोहितेनाच्र्यमानः प्रययौ ज्ञानलोचनः॥ ११२॥

वाच्यमानः स विद्वद्भिः सस्तवाद्भुतवादिभिः।
श्लोकोऽर्थगौरवरसान् मया तत्र स्वयं श्रुतः॥११३॥

शमयति चितं पापं शापं विलुम्पति दुःसहं
कलयति कुलं कल्याणानां कलङ्ककणोज्झितम्।
धनमकलुषं तीर्थं पुंसां तदेव महत्तपः
सुकृतनिधये श्रद्धाधाम्ने धनाय नमो नमः॥११४॥

एतदाकर्ण्य युक्तार्थमर्थस्तुतिमयं मया।
नीतं दशापदेशानां समये सारतन्त्रताम्॥११५॥

कुरु वित्तार्जनं तूर्णं.....भवति योषिता।
न यौवनसहायोऽयं तनये कायविक्रयः॥११६॥

तनुवल्लीवसन्तश्रीर्वदनेन्दुशरन्निशा।
पयोधरोद्गमप्रावृट् चपला यौवनद्युतिः॥११७॥

तारुण्ये तरले सुभ्रूर्भ्रमद्भ्रूभङ्गविभ्रमे।
स्त्रीणां पीनस्तनाभोगा भोगा द्वित्रिदिनोत्सवा॥११८॥

अयं मुखसरोरुहभ्रमरविभ्रमः सुभ्रुवां
कुचस्थलकुरङ्गकः पृथुनितम्बलीलाशिखी।
न यौवनमदोदयश्चरति चारुकान्तिच्छटा-
कुलत्रिवलिकूलिनीपुलिनराजहंसश्चिरम्॥११९॥

आलानमुन्मूल्य सुखाभिधानं तारुण्यनागे गमनोद्यतेऽस्मिन्।
पलायिते कामिगणेऽङ्गनानां विमर्दभीत्येव कुचाः पतन्ति॥१२०॥

युवतितटिनीप्रावृट्कालः सपीनपयोधरः
कृतमदभरारम्भः कामी विलासशिखण्डिनाम्।
मदनपवनालोल...........................
...................................॥१२१॥

क्रीडावल्लीकुसुमसमये रागपद्माकरार्के
दर्पोद्याने वदनशशभृत्कौमुदीकार्तिकेऽस्मिन्।
याते मुग्धद्रविणतुलया यौवने कामिमित्रे
पण्यस्त्रीणां व्रजति सहसा दुर्दशाशेषतां श्रीः॥१२२॥

न तु यौवनमात्रेण लभन्ते ललनाः श्रियम्।
भोगार्हा वृद्धकरिणी तरुणी हरिणी वने॥१२३॥

रूपवत्यद्भुतास्मीति कान्ते त्याज्यस्त्वया मदः।
वने मयूराः शुष्यन्ति बलिमश्नन्ति वायसाः॥१२४॥

पूर्णां वक्रचलां ............. ते जनाः।
क्षीणोऽपि वृद्धिमायाति कुटिलैककलः शशी॥१२५॥

भ्रूयुग्मं कुसुमेषुकार्मुकलतालावण्यलीलाहरं
वक्त्रं न्यक्कृतचन्द्रबिम्बमधरो बिम्बप्रभातस्करः।
रूपं नेत्ररसायनं किमपरं सुश्रोणि तत्रापि ते
शिक्षाहीनतया मदद्विरदवत् प्राप्नोति नार्थक्रियाम्॥१२६॥

तवेयं यौवनतरोश्छाया विस्मयकारिणी।
यया कामुकलोकस्य स्मरतापः प्रवर्तते॥१२७॥

रागसागरसञ्जातविद्रुमद्रुमपल्लवैः।
तवाधरे स्मितरुचिः करोति कुसुमभ्रमम्॥१२८॥

भाति सचन्दनतिलकं कालागुरुकुटिलपल्लवाभरणम्।
वदनं नन्दनमेतद् भ्रूलतिकालास्यललितं ते॥१२९॥

यातः सुन्दरि सुतरां स्तनभारपरिश्रमः शनकैः।
प्रोषितशैशवशोकादिव मध्यः कृशतरत्वं ते॥ १३०॥

तथाप्युपायशून्येन रूपेणानेन सुन्दरि।
न प्राप्यन्ते प्रकृष्टेन प्रयत्नेनेव संपदः॥१३१॥

गुणवती ललितापि न शोभते तनुतरार्थकदर्थनयान्विता।
सुकविसूक्तिरिवार्थवती परं व्रजति वेशवधूः स्पृहणीयताम्॥१३२॥

संसक्तेषु सुरामयी धनगुणाधानेषु लक्ष्मीमयी
स्फीतार्थेषु सुधामयी विषमयी निष्क्रान्तवित्तेषु च।
वेश्या शङ्कमयी नितान्तकुटिला सद्भावलीनेषु या
देवानामपि सुभ्रु मोहजननी क्षीरोदवेलेव सा॥१३३॥

इति तया वचनामृतमर्पितं श्रवणपेयमवाप्य कलावती।
जननि मे द्रविणाधिगमोचितं परिचयं कथयेति जगाद ताम्॥१३४॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां समयमातृकायां
पूजाधरोपन्यासो नाम चतुर्थः समयः॥

* * * * *

## पञ्चमः समयः - रागविभागोपन्यासः

अथ मन्मथमत्तानां करिणामिव कामिनाम्।
बन्धाय बन्धकीशिक्षामाचचक्षे जरच्छिखा॥१॥

श्रूयतां पुत्रि सर्वत्र विचित्रोपायवृत्तये।
मया दुहितृवात्सल्यादर्थ्यं किंचित् तदुच्यते॥२॥

पूर्वं भावपरीक्षैव कार्या यत्नेन कामिनाम्।
ज्ञातरागविभागानां कर्तव्यौ त्यागसंग्रहौ॥३॥

कुसुम्भरागः सिन्दूररागः कुङ्कुमरागवान्।
लाक्षारागोऽथ माञ्जिष्ठो रागः काषायरागभृत्॥४॥

हारिद्रो नीलरागश्चेत्यष्टौ वर्णानुकारिणः।
सुवर्णरागस्ताम्राख्यो रीतिरागस्तथापरः॥५॥

रागः सीसकसंज्ञश्च लौहो मणिसमुद्भवः।
काचरागस्तथा शैलो ह्यष्टौ धात्वनुकारिणः॥६॥

सांध्यरागस्तथा चान्द्रस्तथैन्द्रायुध एव च।
वैद्युताङ्गारकेत्वाख्यरविरागास्तथैव च॥७॥

राहुरागोऽष्टमश्चेति रागा गगनसङ्गिनः।
श्रोत्ररागोऽक्षिरागश्च रसनासंश्रयस्तथा॥८॥

त्वग्रागो घ्राणरागश्च मानसो बुद्धिसंभवः।
अहंकाराभिधानश्चेत्यष्टाविन्द्रियसंज्ञकाः॥९॥

वृषरागोऽश्वरागाश्च कृकलासाह्वयस्तथा।
मेषरागः श्वरागश्च खररागस्तथापरः॥१०॥

मार्जाररागो हस्त्याख्यश्चेत्यष्टौ प्राणिभेदजाः।
शुकरागो हंसरागस्तथा पारावताभिधः ॥११॥

मायूरश्चटकाख्यश्च कृकवाकुसमुद्भवः।
कोकिलो जीवजीवाख्यश्चेत्यष्टौ पक्षिजातयः ॥१२॥

केशरागोऽस्थिरागश्च नखाख्यः पाणिसङ्गतः।
दन्तरागस्तथा पादरागस्तिलकरागवान् ॥१३॥

कर्णपूराभिधानश्चेत्यष्टावङ्गविभाविनः।
छायारागस्तथा भूतरागोऽपस्मारवानपि ॥१४॥

ग्रहरागोऽथ गान्धर्वो यक्षाख्यः क्षोभरागभृत्।
पिशाचराग इत्यष्टौ महारागाः प्रकीर्तिताः ॥१५॥

कौसुमः कुम्भरागश्च नारङ्गाङ्कोऽथ दाडिमः।
मद्यरागः कुष्ठरागो विसर्पाख्यश्चिताभिधः ॥१६॥

भ्रामरोऽप्यथ पातङ्गो वृश्चिकाख्यो ज्वराभिधः।
भ्रमाख्यः स्मृतिजन्मा च रतिरागो ग्रहाभिधः ॥१७॥

रागो रुधिरसंज्ञश्च षोडशैते प्रकीर्णकाः।
संक्षिप्तं लक्षणं तेषां क्रमेण श्रूयतामिदम् ॥१८॥

कौसुम्भो रक्षितः स्थायी क्षणान् नश्यत्युपेक्षितः।
स्वभावरूक्षः सैन्दूरः स्नेहश्लेषेण धार्यते ॥१९॥

अल्पलीनः सुखायैव घनो दुःखाय कौङ्कुमः।
तप्तः श्लिष्यति लाक्षाङ्कः श्लेषं नायाति शीतलः ॥२०॥

तप्तः शीतश्च माञ्जिष्ठः स्थिरभोगक्षमः समः।
स्थिरो रौक्ष्येण काषायः स्नेहयोगेन नश्यति॥२१॥

सुरक्षितोऽपि हारिद्रः क्षणेनैव विरज्यते।
नीलो देहक्षयस्थायी वार्यमाणोऽपि निश्चलः॥२२॥

सौवर्णश्छेदनिर्घर्षतापैस्तुल्यरुचिः सदा।
मृज्यमानस्य वैमल्यं ताम्रसंज्ञस्य नान्यथा॥२३॥

रीतिनाम्नस्तु मालिन्यं स्नेहेनाप्युपजायते।
सैसस्यादौ च मध्ये च क्षये च मलिना रुचिः॥२४॥

तीक्ष्णस्वभावाल्लोहस्य काठिन्याच्च न नम्रता।
मणिनामा च निर्व्याजः सहजस्वच्छनिश्चलः॥२५॥

स्वभावभिदुरः काचसंज्ञश्छलनिरीक्षकः।
शैलोऽपि गौरवस्थायी हृदयाभावनीरसः॥२६॥

सान्ध्यश्चलश्च नित्यश्च कल्पदोषो दशाश्रयः।
चन्द्ररागः प्रशान्तार्तिशीतलः क्षयवृद्धिभाक्॥२७॥

ऐन्द्रायुधो बहुरुचिर्वक्रमायाविलासभूः।
वैद्युतस्तरलारम्भदृष्टनष्टविकारकृत्॥२८॥

अङ्गारः स्त्रीजनावज्ञाज्वलितो लोहिताननः।
केतुसंज्ञः स्फुटानर्थकारी बन्धवधादिभिः॥२९॥

आर्कस्तीक्ष्णतया नित्यसन्तापः सततोदयः।
मित्रक्षयैषी विषमो राहुरागो महाग्रहः॥३०॥

श्रौत्रः कर्णसुखाभ्यासाद् गुणाकर्णनतत्परः।
अक्षिजन्मा परं रूपमात्रे परिणतस्पृहः ॥३१॥

रासनो विविधास्वादभोज्यसंहारलौल्यवान्।
त्वङ्मयः सर्वमुत्सृज्य सर्वाङ्गालिङ्गनोत्सुकः ॥३२॥

घ्राणाख्यः पुष्पधूपादिभूरिसौरभलोभभृत्।
मानसः सतताभ्यस्तस्पृहामात्रमनोरथः ॥३३॥

बुद्ध्याख्यो गुणवत्कान्तासक्तिव्यसनवर्जितः।
अहङ्काराभिधः श्लाघ्यसङ्गमोन्नतिलक्षणः ॥३४॥

वृषसंज्ञश्च तारुण्यात् कायदर्पबलोद्भवः।
अश्वस्तु रतमात्रार्थी तत्कालोद्यतकातरः ॥३५॥

कृकलासाभिधानश्च स्त्रैणदर्शनचञ्चलः।
मेषाख्यः शष्पकवलाभ्यासतुल्यरतिस्पृहः ॥३६॥

श्वाख्यो रत्यन्तविमुखः स्त्रीरहस्यप्रकाशकः।
गार्दभः क्रूरसम्मर्दतृप्तिमात्रपरायणः ॥३७॥

मार्जारजन्मा सातत्यादत्यन्तनिकटस्थितिः।
कौञ्जरः क्लेशबन्धादिनिरपेक्षसमागमः ॥३८॥

शुकाभिधोऽन्तर्निः स्नेहः कामं मुखसुखस्थितिः।
हंससंज्ञः सुखस्थित्या गुणदोषविभागकृत् ॥३९॥

पारावताख्यः सस्नेहरतिसर्वस्वलक्षणः।
मायूरः स्ववपुः स्फीतरूपप्रमदनृत्तवान् ॥४०॥

बहुशः सुरतासङ्गमात्रार्थी चटकाभिधः।
कृकवाकुभवः कान्ताक्लेशलेशविभागवान्॥४१॥

कोकिलो मधुरालापः प्रभूतप्रसरत्कचः।
जीवजीवकसंज्ञश्च परिचुम्बननिश्चलः॥४२॥

केशाख्यः सप्तदिवसस्थायी कृच्छ्रानुरञ्जकः।
अस्थिसंस्थोऽन्तरस्थश्च प्रच्छन्नस्नेहजीवितः॥४३॥

नखाभिख्यो मासमात्रस्थायी याति शनैः शनैः।
प्राणिनामा प्रबुद्धोऽपि बद्धमुष्टेर्न लक्ष्यते॥४४॥

दन्ताभिधो यस्ताम्बूललीलामात्ररुचिः सदा।
पादाख्यश्चरणालीनः प्रणामैरेव केवलम्॥४५॥

तिलकप्रतिमो नीचस्योत्तमस्त्रीसमागमः।
कर्णपूरश्च कौटिल्यात् कर्णलग्नोऽतिकत्थनः॥४६॥

सर्वत्रानुचरः शोषकारी छायाग्रहाभिधः।
अज्ञातचित्तः स्तब्धाख्यो भूतसंज्ञो विचेतनः॥४७॥

अपस्माराभिधः क्रूरकोपाक्षेपः क्षणे क्षणे।
ग्रहो वस्त्राञ्चलग्राही सजने विजने पथि॥४८॥

गान्धर्वो गीतनृत्तादिरससंसक्तमानसः।
यक्षः क्षिप्तो न निर्याति गृहावृत्तिविचक्षणः॥४९॥

यत्तत्प्रलापमुखरः क्षोभाख्यस्त्यक्तयन्त्रणः।
पैशाचश्चाशुचिरतस्तीव्रक्षतविदारणः॥५०॥

कौसुमः क्षणिकोदारः पूजामात्रपरिग्रहः।
भग्नोऽपि कौम्भः शकलश्लेषे श्लिष्ट इवेक्ष्यते ॥५१॥

नारङ्गः सरसोऽप्यन्तर्बहिस्तीक्ष्णः कटुः परम्।
बहुगर्भतया रूढो हृदये दाडिमाभिधः ॥५२॥

क्षणक्षैब्योपमो माद्यः स्वस्थो वैलक्ष्यलक्षणः।
बीभत्साचारवैरस्यात् कुष्ठाख्योऽतिजुगुप्सितः ॥५३॥

वैरूप्यं च समायाति च्छेदेनेवाङ्गमर्मणाम्।
चिताभिधानः सर्वाङ्गदाही वश्यप्रयोगजः ॥५४॥

भ्रामरः कौतुकास्वादमात्रो नवनवोन्मुखः।
पातङ्गः कामिनीदीप्तिरसिकः क्षयनिर्भरः ॥५५॥

वृश्चिकाख्यो व्यथादायी द्वेष्योऽप्यत्यन्तनिश्चलः।
त्यक्ताहारोऽतिसन्तापनष्टच्छायी ज्वराभिधः ॥५६॥

भ्रमनामा मतिभ्रंशाच् चक्रारूढ इवाकुलः।
स्मरणाख्यः प्रियस्मृत्या कृतान्यस्त्रीसमागमः ॥५७॥

रतिग्रहः सदा स्वप्ने सम्प्राप्तसुरतोत्सवः।
रोधिरः कलहे रक्तपातैर्नीचस्य वर्धते ॥५८॥

इत्यशीतिः समासेन रागभेदाः प्रकीर्तिताः।
विस्तरेण पुनस्तेषां कः सङ्ख्यां कर्तुमर्हति ॥५९॥

सुहृज्जनार्जनं कुर्यात् पूर्वं वारविलासिनी।
वेश्यानां पद्मिनीनां च मित्रायत्ता विभूतयः ॥६०॥

सुहृद्भिरेव जानाति कामुकानां धनं गुणम्।
हृदयग्रहणोपायं शीलं रक्तापरक्तताम्॥६१॥

महाधनस्य सुहृदां कामिनां प्रेमशालिनाम्।
प्रच्छन्नसुरतेनापि कुर्यादाराधनं सदा॥६२॥

एको वित्तवतः सूनुः पितृहीनः सुयौवने।
मुग्धे भूभुजि कायस्थः कामिस्पर्धी वणिक्सुतः॥६३॥

नित्यातुरामात्यवैद्यप्रसिद्धस्य गुरोः सुतः।
.............. प्रच्छन्नकामो जाड्यधन....॥६४॥

नपुंसकप्रवादस्य प्रशमार्थी फलाशनः।
मत्तो धूर्तसहायश्च राजसूनुर्निरङ्कुशः॥६५॥

ग्राम्यो धातृद्विजसुतः प्राप्तलाभश्च गायनः।
सद्यः सार्थपतिः प्राप्तः श्रीमान् दैवपरायणः॥६६॥

गतानुगतिको मूर्खः शास्त्रोन्मादश्च पण्डितः।
नित्यक्षीबश्च वेश्यानां जङ्गमाः कल्पपादपाः॥६७॥

प्रथमं प्रार्थिता वेश्या न क्षणोऽस्तीत्युदाहरेत्।
जनस्यायं स्वभावो हि सुलभामवमन्यते॥६८॥

शिरः शूलादिकं व्याधिमनित्यमजुगुप्सितम्।
अवहारोपयोगाय पूर्वमेव समादिशेत्॥६९॥

पत्नीव कुर्यादनुवृत्तिपूर्वं पूर्वं महार्थस्य वरोपचारम्।
द्रव्यैस्त्वया मन्त्रजपादिभिर्वा वशीकृतास्मीति वदेच्च सर्वम्॥७०॥

स्वयं प्रदत्तेऽपि नखक्षते च शङ्केत तद्भक्तिविवादशीलम्।
निन्देत्प्रकामं जननीं विरुद्धां गच्छेत् स्वयं वेश्म च कामुकस्य॥७१॥

विदेशयात्रामपि मन्त्रयेत तेनैव सार्धं विहितानुबन्धा।
सुप्तस्य कुर्यात् परिचुम्बनं च गुणस्तुतिं चार्धविबोधभाजः॥७२॥

स्वप्ने सदैव प्रलपेत् सरागं सर्वं च तन्नामनिबद्धमेव।
न चास्य तृप्तिं सुरतेषु गच्छेद् व्ययस्य कुर्याच्च मुहुर्निषेधम्॥७३॥

तस्माच्च पुत्रार्थमनोरथा स्यात् प्राणात्ययं तद्विरहे वदेच्च।
इत्यादिभिः स्वीकरणाद्युपायैर्निबद्धबुद्धेर्द्रविणं लभेत॥७४॥

तावच्च तूर्णं धनमाहरेत यावत्स रागेण विनष्टसंज्ञः।
प्रशान्तरागानलशीतलस्तु स लोहपिण्डीकठिनत्वमेति॥७५॥

याचेत सर्वं सुरतार्तिकाले तमूरुबन्धेन निरुद्धकायम्।
प्रायेण तृप्ताय न रोचते हि विनम्रशाखापरिपक्वमाम्रम्॥७६॥

सन्धारयेत्तं च विशेषवित्तं यावन्न निःशेषधनत्वमेति।
पुनः पुनः स्नेहलवार्द्रवक्त्रा दीपं यथा दीपकदीपवर्तिः॥७७॥

निष्पीतसारं विरतोपकारं क्षुण्णेक्षुशल्कप्रतिमं त्यजेत्तम्।
लब्धाधिवासक्षयकारिशुष्कं पुष्पं त्यजत्येव हि केशपाशः॥७८॥

हेमन्तमार्जार इवातिलीनः स चेन्न निर्याति निरस्यमानः।
तदेष कार्यस्तनुमर्मभेदी प्रवर्धमानः परुषोपचारः॥७९॥

शय्यावहारैर्वचनप्रहारैः कोपप्रकारैर्जननीविकारैः।
कौटिल्यसारैर्विविधप्रसारैर्विपद्विचारैर्गणितापचारैः॥८०॥

याच्ञाविवादैरधनापवादैर्दत्तानुवादैः परसाधुवादैः।
निन्दाप्रवादैः परुषप्रवादैर्विटप्रवादैः कथितावसादैः॥८१॥

मुहुः प्रवासैः कलहोपवासैर्मायानिवासैः कटुकाधिवासैः।
सभ्रूविलासैर्व्यसनोपवासैर्निष्कासनीयः स पृथुप्रवासैः॥८२॥

स चेत् पुना रागजतुप्रसक्तस्तीव्रावमानैरपि न प्रयाति।
तदा तमुत्क्षिप्तभुजान्यवक्त्रा दासी वदेद् वित्तवियोगदीनम्॥८३॥

यत्राभवत् कामुकलोकयात्रा विचित्ररूपा सततं विभूतिः।
गृहे चतुर्थं दिनमद्य तस्मिन् दृष्टस्य दृष्टस्य वधूत्सवस्य॥८४॥

क्लीबस्य यस्यास्ति न भोगसंपत् स किं भुजिष्याभवने करोति।
न यस्य हस्ते तरमूल्यमस्ति स किं समारोहति नावमग्रे॥८५॥

प्रक्षीणवित्तेन निरुद्यमेन किं रूपयुक्तेन करोति वेश्या।
विच्छिन्नदुग्धा न पुनः सगर्भा सा कस्य गौश्चारुतयोपयुक्ता॥८६॥

मिथ्यैव रिक्तः कुरुते जडानामावर्जनैः प्रेममयैर्वचोभिः।
क्षीरक्षये चुम्बनलालनेन बालस्य वृद्धिं विदधाति धात्री॥८७॥

इत्यादिभिस्तद्वचनावमानैस्तस्मिन् गते ग्रीष्मतुषारतुल्ये।
क्षीणं निरस्तं पुनराप्तवित्तं भजेत यत्नाहृतवित्तमन्यम्॥८८॥

प्राप्ते कान्ते कथमपि धनादानपात्रे च वित्ते
त्वं मे सर्वं त्वमसि हृदयं जीवितं च त्वमेव।
इत्युक्त्वा तं क्षपितविभवं कञ्चुकाभं भुजङ्गी
त्यक्त्वा गच्छेत् सधनमपरं वैशिकोऽयं समासः॥८९॥

उद्देशलेशेन यदेतदुक्तं तत् कार्यकाले विविधप्रयोगम्।
तस्मात् स्वबुद्ध्यैव विचार्य कार्यमुक्त्वेति तूष्णीं जरती चकार॥९०॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां समयमातृकायां
रागविभागोपन्यासो नाम पञ्चमः समयः॥

* * * * *

## षष्ठः समयः - (निशीथान्त्यवर्णनम्)

अथ क्षणक्षीणधनायमाने शनैः शनैर्निष्प्रतिभे शशाङ्के।
द्यौर्दोषयुक्तेव विलोकनेन सविप्लवा मीलिततारकाभूत्॥१॥

इन्दौ प्रयाते कृतरात्रिभोगे प्रवेशकाले चिरकामुकस्य।
वेश्येव सन्ध्या गगनाङ्गनाग्रं निर्दिष्टताराकुसुमं चकार॥२॥

अथोदिते स्वस्थितिदानदक्षे बाले रवौ श्रीमति पङ्कजिन्याः।
विकासकाले मधुपानकेलिरभूद् विटानामिव षट्पदानाम्॥३॥

कलावती मौक्तिकभूषणाङ्का धम्मिल्लमाल्यप्रणयप्रसक्तैः।
भङ्गैर्वृता दर्पणमीक्षमाणा सतारका चन्द्रवती निशेव॥४॥

स्मराङ्गनाकेलिशुकायमानकरस्थताम्बूलविलासपूर्णा।
समातृका नापितदत्तहस्ता कान्तां तनुं पण्यदशां नयन्ती॥५॥

सलीलमाक्रान्तिविलोलकाञ्चीरवेण पारावतदत्तसंज्ञा।
अर्थार्थिनी राजपथप्रकारं हर्म्यं प्रियोत्सङ्गमिवारुरोह॥६॥

तामब्रवीत् परिभोगयोग्यं प्रातर्नवं कामुकमीक्षमाणः।
विलोक्य कङ्कः शयनोत्थितानां पण्याङ्गनानां गणयन् विचेष्टाः॥७॥

आसन्नमित्रागममुच्यमानसमागमे वासरवल्लभस्य।
निर्यान्ति दीपा इव रात्रिभोग्याः पश्य प्रभाते गणिकागृहेभ्यः॥८॥

एष प्रबुद्धः सहसा जटाभृल्लीलाशिवः कुक्कुटकूजितेन।
गृहान्नलिन्याः परिहृत्य राजरथ्यां कुमार्गेण मठं प्रयाति॥९॥

एते निधेर्निग्रहभट्टसूनोः पृष्टा विटा रात्रिसुखं प्रभाते।
कर्तुं प्रवृत्ताः पृथुभोज्यभूरिव्ययाय भद्राभवने विभागम्॥१०॥

प्राप्ते गृहद्वारमनङ्गसारे महाविटे पश्य वसन्तसेना।
शून्यप्रसुप्तापि पुरः समेत्य निशीथभोगं कथयत्यसत्यम्॥११॥

भग्नाङ्गदा त्रोटितकर्णपाली मतङ्गनाम्ना गणपालकेन।
आत्मापराधं विनिगूहमाना विरौति रामा जननीजनाग्रे॥१२॥

निर्गच्छतो ग्रामनियोगिनोऽस्य ददाति गुप्तस्य समेत्य पश्चात्।
इदं तथेदं च पुरः प्रहेयमित्यादि सन्देशशतानि वृद्धा॥१३॥

संप्रस्थितेयं सह माधवेन कोशं ध्रुवं पातुमनङ्गलेखा।
अग्रे यदस्या मधुकुम्भवाही मेषं विकर्षन् पुरुषः प्रयाति॥१४॥

टक्कस्य सा..च्चलितस्य.....विप्राय यत् स्कन्दकदानकाले।
प्रसाधनाय स्वयमेव गन्तुं समुद्यता पश्य शशाङ्कलेखा॥१५॥

उद्यानलीलागमने निशायां सुनिश्चिते मल्लिकयार्जुनस्य।
कृतः प्रभाते नवचीनवस्त्रदानं विना पश्य मुहूर्तविघ्नः॥१६॥

मेषप्रदस्येन्द्रवसोर्द्विजस्य मुक्त्वा प्रभूतं निशि कालखण्डम्।
विषूचिकार्ता विटहर्षहेतुर्वैद्यार्थिनी क्रन्दति कुट्टनीयम्॥१७॥

वैद्योऽप्यसौ मण्डलगुल्मनामा प्रभातचारी नगरार्जितानि।
समुद्यतः पूगफलानि दातुं कुरङ्गिकायै निजमुष्टिपूरैः॥१८॥

कक्षालनाम्ना निशि गायनेन वारावहारान् निश(?) भग्नभाण्डा।
गृह्णाति का नो (?) चरणस्पृशोऽस्य वरांशुकं कुण्डघटादिमूल्यात्॥१९॥

प्राप्तस्य शम्भोर्वणिजस्तु वारे सुप्तस्य शून्ये शयने निशायाम्।
नन्दा समेत्यापरकामिगेहात् सविप्रलम्भं शपथं करोति॥२०॥

पितुर्गृहाद् भूरिविभूषणानि प्राप्तं गृहीत्वा मदनं मृणाली।
निगूह्य सन्दर्शयति स्वगेहं शून्यं तमन्विष्टुमुपागतानाम्॥२१॥

भोज्यं विना पाटलिका प्रविष्टं मुष्टिप्रदं श्रोत्रियमत्रिरात्रम्।
शुष्कान्नदाता पितृकार्यमेतत् किं किं करोषीत्यसकृद्ब्रवीति॥२२॥

मार्जारजिह्वा जननी हरिण्याः पद्मस्य भोज्यं निशि लुण्ठितं यत्।
तस्मिन् गते तद्विजने विशङ्का पश्य प्रभाते कवलीकरोति॥२३॥

ईर्ष्याविशेषात् कृतकोपवादसम्मूर्छितायां मलयं रमण्याम्।
विभूषणं तोषणमाशु किञ्चिदस्यै प्रयच्छेति वदन्ति सख्यः॥२४॥

रागेण कृष्णीकृतकेश एष वलीविशेषस्फुटवृद्धभावः।
योगागृहं शम्बरसारनामा यागाय युग्येन गुरुः प्रयाति॥२५॥

अयं जनस्थानविनाशहेतुः केतुः खरक्रूरतया प्रसिद्धः।
आस्थानभट्टश्चिटिवत्सनामा प्रयाति युग्येन विशीर्णवस्त्रः॥२६॥

उच्चैश्चिरात् सौधनिषक्तदृष्टिरश्वाधिरूढः कमलोऽधिकारी।
कलावति त्वामयमीक्षमाणः शूलार्पिताकारतुलां बिभर्ति॥२७॥

श्रीखण्डोज्ज्वलमल्लिकातिलकवानक्षामहेमाङ्गद-
श्छिन्नश्लिष्टविनष्टनासिकतया प्रख्यातजारज्वरः।
एष त्वामवलोक्य मालवपतेर्दूतः प्रपञ्चाभिधः
पश्योद्वेष्टविवेष्टनानि कुरुते भोगीव मन्त्राहतः॥ २८॥

एष प्रख्यातकूटः कपटविटघटानर्मकर्मप्रगल्भः
श्रीगुप्तो नाम धूर्तः सकलकलिकलाकल्पनामूलदेवः।

दृष्ट्वा दूरात् प्रसिद्धां तव नवजननीमञ्जलिश्लिष्टहस्तः
पश्याक्ष्णा दत्तसंज्ञः स्मितचलचिबुकः स्तोतुमेतां प्रवृत्तः ॥२९॥

पातालोत्तालतालुप्रविततवदनस्पष्टदृष्टोग्रदंष्ट्रा
विश्वग्रासावहेलाकुलितशिखिशिखाविभ्रमोद् भ्रान्तजिह्वा।
मेषाणां चण्डमुण्डाहरणकटकटारावपिष्टास्थिसंस्था
सिद्धा शुष्कातिपूर्णा जयति भगवती कुट्टनी चण्डघण्टा ॥३०॥

एष स्फीतधनस्य लोभवसतेः पापस्य मूर्तिस्पृशः
शङ्खाख्यस्य महार्घहट्टवणिजः पङ्काभिधानः सुतः।
आकृष्टः प्रतिवेशमनिर्गतविटैः सारङ्गमुग्धः शिशुः
सुभ्रु त्वां तुषराशिलोलचटकाकारः समुद्वीक्षते ॥३१॥

एष निधिर्विधिना तव नूनं मेषमतिर्विधितः प्रहितो वा।
स्थूलमुखः पृथुचूलकलापः स्कन्धयुगाश्रितकर्णसुवर्णः ॥ ३२॥

इत्यादि कङ्केन वितर्क्यमाणं वणिक्सुतं दृक्पतितं विचार्य।
मनोरथाभ्यर्थितलाभतुष्टा कङ्कालिका सस्मितमित्युवाच ॥३३॥

निर्यत्ताम्बूललालालवशबलवलद्ग्रीववक्त्रावलोकी
रक्तोपानद्युगोद्यत्सरसरमुखरप्रस्खलत्पादचारैः।
एवं रूपोऽतिमुग्धः शिशुरखिलधनावाप्तये बन्धकीना-
मक्लेशाराधनार्हः स्वयमुपनमति प्रायशः पण्यपुण्यैः ॥३४॥

कलावति त्वन्मुखनिश्चलोऽयं महाविटश्चारणचक्रचारैः।
निवेदितोऽग्रे तव देवतायाः शिशुः पशुर्भोगविभूतिकामैः ॥३५॥

पार्श्वे त्वमेषां व्रज कङ्क तूर्णं दूतं करिष्यन्ति भवन्तमेते।
तथेति दत्तोचितशासनोऽसौ जगाम सौधादवरुह्य हृष्टः ॥३६॥

इति श्रीव्यादासारपराख्यक्षेमेन्द्रविरचितायां समयमातृकायां
(निशीथान्त्यवर्णनं) नाम षष्ठः समयः ।।

* * * * *

## सप्तमः समयः - कामुकसमागमः

अथाययौ शनैः श्रीमान् नवोद्भूतमनोभवः।
लतालिङ्गनकृद् बालः कालः कुसुमलाञ्छनः ॥१॥

सम्भोगसुखसम्पत्तिः पराधीनैव कामिनाम्।
आललम्बे धनेशाशामितीवाकलयन् रविः ॥२॥

दक्षिणानिलसोच्छ्वासा लसत्कुसुमपाण्डुराः।
जातजृम्भा ययुस्तन्व्यो लताः सोत्कण्ठतामिव ॥३॥

दग्धेऽन्धकद्विषा रोषात् पुराणे पञ्चसायके।
नवं विनिर्ममे काममृतुराजः प्रजापतिः ॥४॥

प्रस्खलत्कोकिलालापा गायन्त्यो भृङ्गशिञ्जितैः।
वेश्या इव मधुक्षीबा विरेजुर्वनराजयः ॥५॥

नवकिसलयलेखा पङ्क्तिसङ्गे लतानां
नखमुखलिपिलीलालोभिनीमाकलय्य।
मधुमदपरिरम्भे भेजिरे लोहितत्त्वं
स्थलकमलवनानामीर्ष्ययेवाननानि ॥६॥

क्षैण्यक्षामं शिशिरसमयं वृद्धमुत्सृज्य दूरे
त्यक्त्वा शीतं तरुणमसकृद् गाढरागानुबन्धम्।
उद्यानश्रीर्मधुमभिमतं बालमेवालिलिङ्ग
प्रायः स्त्रीणां वयसि नियतिर्नास्ति कार्यार्थिनीनाम्॥७॥

अथ नापितदूतेन कृतद्वित्रगतागता।
मिथ्याकृतनिषेधापि ग्रहणाग्रहणे शिशोः ॥८॥

कथञ्चिदभ्यर्थनया गृहीतार्था कलावती।
सन्ध्यायां मण्डनासक्ता ययौ वासकसज्जताम्॥९॥(युगलकम्)

कपोले कस्तूरीस्फुटकुटिलपत्राङ्कुरलिपि-
र्ललाटे कार्पूरं तिलकमलकालीपरिसरे।
तनौ लीना हेमद्युतिपरिचिता कुङ्कुमरुचिः
स तस्याः कोऽप्यासील्ललितमधुरो मण्डनविधिः॥१०॥

प्रौढकामुकसम्भोगसाक्षिणी बालसङ्गमे।
नोचितास्मीति तामूचे लज्जया नतमेखला॥११॥

हारिणी सा तनुलता हारिणी च कुचस्थली।
दृष्टिश्च हारिणी तस्या बभौ स्मरविहारिणी॥१२॥

अत्रान्तरे वणिक्सूनुर्विवेश गणिकागृहम्।
आसन्नलाभाभिमुखैरावृतं क्षेत्रवासिभिः॥१३॥

कर्णसंसक्तमुक्ताङ्कनकस्थूलवालकः।
बहुहेमभराक्रान्तिसव्यथश्रवणद्वयः॥१४॥

कण्ठाभरणमध्यस्थहैमरक्षाचतुष्टयः।
जननीहस्तविन्यस्तसर्षपाङ्कितचूलिकः॥१५॥

राजावर्तमणिस्थूलगुलिकाभ्यां विराजितम्।
राजतं चरणालीनं बिभ्राणः कटकद्वयम्॥१६॥

मुहुर्दीर्घाञ्चलदशां स्रस्तां संकलयन् पटीम्।
बहुचूर्णकताम्बूलदग्धास्यकृतसीत्कृतः॥१७॥

स प्रविश्य प्रकाशाशां ददर्शादर्शमादरात्।
कलावतीं कलाकान्तललितामिव शर्वरीम्॥१८॥

कथं लालनयोग्योऽयं बालः सम्भोगभाग् भवेत्।
इतीव तारहारेण सस्मितस्तनमण्डलात्(?)॥१९॥

द्रविणक्षयदीक्षायां वैचक्षण्यकृतक्षणाः।
ऋत्विजः सप्त विविशुः पुरस्तस्य महाविटाः॥२०॥

निर्गुटः क्षीणसाराख्यो दिविरः कमलाकरः।
रेचको भरताचार्यः क्षुण्णपाणिस्तुलाधरः॥२१॥

गणकः सिंहगुप्तश्च तिक्तनामा भिषक्सुतः।
कटिः कुटिलकश्चेति भोगाम्भोरुहषट्पदाः॥२२॥

वेश्यासमागमे शैलीं शिक्षितः स विटैर्बहिः।
प्रविश्य कामिनीपार्श्वे प्रौढवत् समुपाविशत्॥२३॥

वाससाच्छाद्य नासार्धमप्रस्तावकटूत्कटाम्।
नर्मगोष्ठीं स विदधे शिक्षितां शुकपाठवत्॥२४॥

ततः प्रविश्य कङ्काली गृहीतोच्चतरासना।
रञ्जनाय पुरश्चक्रे विटानां कपटस्तुतिम्॥२५॥

धन्योऽयं बालकः श्रीमान् भवद्भिर्यस्य सङ्गतिः।
युष्मत्परिचयः पुण्यपरिपाकेन लभ्यते॥२६॥

शिशुरप्ययमस्माकं कामुकोऽभिमतः परम्।
बाल एव सहस्रांशुः कमलिन्या विकासकृत्॥२७॥

इत्यादिभिः स्तुतिपदैः कुट्टन्या विटमण्डले।
स्वीकृते भूरभूत् क्षिप्रं ताम्बूलावेलपाटला॥२८॥

ततः काली कलावत्या धात्री वेतालिकाभिधा।
ताम्बूलदानावसरप्रहर्षाकुलितावदत् ॥२९॥

अत्यल्पः परिवारोऽयं ताम्बूलप्रणयी स्थितः।
नास्माकमन्यवेश्यानामिवासङ्ख्यः परिग्रहः॥३०॥

कङ्कः प्रथमपूज्योऽयं देवाकृतिरुदारधीः।
यस्यानुरोधात् सुलभा दुर्लभापि कलावती॥३१॥

जामाता गौरवार्होऽयं पूज्यः कन्यार्पणेन नः।
शाङ्खिकः कमलो नाम सम्मानं पूर्वमर्हति॥३२॥

अयं पितुः कलावत्याः प्रेतकार्यप्रतिग्रही।
ह्यः पर्वदिवसावाप्त....शक्तिर्महाव्रती॥३३॥

अयं स्थलपतेः सूनुः कपिलः कलशाभिधः।
गुरुभ्राता कलावत्याः कल्पपालो मधुप्रदः॥३४॥

मृदङ्गोदरनामायं कलावत्याः स्वसुः पतिः।
मातुलः कलहो नाम बिन्दुसारः सहोदरः॥३५॥

इयं दत्तकपुत्रस्य कलावत्याः कलायुषः।
धात्री कलावती नाम रुग्णचन्द्रश्च तत्पतिः॥३६॥

अयं भरतभाषाज्ञः काम्बो भागवतात्मजः।
गायनः खरदासोऽयं महामात्यस्य वल्लभः॥३७॥

निगिलः सूपकाराख्यः कुम्भकारश्च कर्परः।
बकश्छत्रधरश्चायं खञ्जनो युग्यवाहनः ॥३८॥

रतिशर्मा द्विजन्मायं गणिकाग्रहशान्तिकृत्।
आरामिकः करालोऽयं कीलवर्तश्च नाविकः ॥३९॥

उद्यानपालः कन्दोऽयं मुकुलाख्यश्च पौष्पिकः।
चर्मकृद् वर्मदत्तोऽयं मारच्छिद्रश्च धावकः ॥४०॥

बहिरास्ते च चाण्डाली क्रोशन्ती घर्घराभिधा।
डोम्बश्चण्डरवाख्यश्च कोष्ठागारप्रहारिकः ॥४१॥

ताम्बूलं देयमेतेभ्यः प्रहेयं प्रातरेव तु।
सख्यै शम्बरमालायै गुरवे दम्भभूतये ॥४२॥

उक्त्वेति पूगफललुण्ठिनिविष्टचित्ता
वैतालिका विविधवेशवनीप्रविष्टाः।
चक्रुः प्रभूतमधुपानविघूर्णमाना-
स्ताम्बूलदानबहुमानगतागतानि ॥४३॥

ततः क्षीबैरसम्भाव्यं कत्थमानैर्विटैः परम्।
उद्वेजितेव रजनी धूपव्याजेन निर्ययौ ॥४४॥

नृपस्य बाहुर्युधि दक्षिणोऽहं ममैव राज्यं कलमान्तरस्थम्।
मयि स्थिते तिष्ठति नाट्यशास्त्रं सूते तुला वित्तपतिश्रियं मे ॥४५॥

त्रैलोक्यवृत्तं गणितेन वेद्मि मयैव भोजस्य कृता चिकित्सा।
भुक्ता मया भूपतयः स्वसूक्तैरित्यूचिरे मद्यमदोद्धतास्ते ॥४६॥

विसृष्टास्ते कलावत्या ताम्बूलार्पणलीलया।
निर्ययुः कलयन्तोऽन्तर्भाविनीं भोज्यसम्पदम्॥४७॥

अथ विततवितानं हंसशुभ्रोपधानं
शयनममलचीनप्रच्छदाच्छादिताग्रम्।
अभजत हरिणाक्षी क्षीबमादाय बालं
निजपरिजननर्मस्मेरवक्त्राम्बुजश्रीः॥४८॥

शिशुतररमणेऽस्याः कौसुमामोदलुभ्यद्-
भ्रमरभरनिपातैर्घूर्णमानाः प्रकामम्।
प्रसरदगुरुधूमश्यामलाग्रा बभूवु-
र्बलितविरतवक्त्रा लज्जयेव प्रदीपाः॥५०॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितायां समयमातृकायां कामुकसमागमो नाम सप्तमः समयः॥

* * * * *

## अष्टमः समयः - कामुकप्राप्तिः

अथ सितकिरणरतिश्रमखिन्नेव विनिद्रतारका रजनी।
प्राभातिकसलिललवस्वेदवती क्षामतां प्रययौ॥१॥

गणिका ततः प्रभाते सकलनिशाजागरेण ताम्राक्षी।
रात्रिसुखप्रश्नपरां प्रोवाच समेत्य कङ्कालीम्॥२॥

शृणु मातः शिशुवयसस्तस्य स्फुटतामकालपुष्टस्य।
यस्याल्पकस्य बहुलं मरिचकणस्येव तीक्ष्णत्वम्॥३॥

आरोपितः स चेट्या खट्वामत्युन्नतां शनैः शिशुकः।
निश्चलतनुर्मुहूर्तं धूर्तः स च कृतकसुप्तोऽभूत्॥४॥

ललनासुलभकुतूहलचपलतयालिङ्गितः स्वयं स मया।
तत्क्षणनवसुरतान्ते सहसा निश्चेष्टतां प्रययौ॥५॥

पूगफलमस्य लग्नं ज्ञात्वेति मया स शीतसलिलार्द्रम्।
दत्त्वा वक्षसि हस्तं प्रलयभयाल्लम्भितः संज्ञाम्॥६॥

लब्धास्वादः स ततश्चटकरतिर्मां प्रजागरो मूर्तः।
खेदक्लान्तामकरोद् गणनातीतैः समारोहैः॥७॥

बालमुखं तरुणतरं रभसरसेन प्रबोधयन्त्या तम्।
कष्टं मयैव कृष्टो ज्वलिताङ्गारः स्वहस्तेन॥८॥

रोदिति शिशुरिति दयया यस्य न दशनक्षतं मया दत्तम्।
तेन ममाधरबिम्बं पश्य शुकेनेव खण्डितं बहुशः॥९॥

मुहुरारोहणहेलापरिरम्भैर्वामनीकृतं तेन।
शिशुसंगमात् क्षणं मे लज्जितमिव नोन्ननाम कुचयुगलम्॥१०॥

अहमस्थाननखक्षतविक्षततनुवल्लरी परं तेन।
गुप्तिं कथं करिष्ये विदग्धजनसङ्गमेऽङ्गानाम्॥११॥

उक्त्वेति वाररमणी निखिलनिशीथप्रजागरोद्विग्ना।
क्षोणीं निरीक्षमाणा वैलक्ष्येण क्षणं तस्थौ॥१२॥

तामवदत् कङ्काली सस्मितवदना विटङ्कदंष्ट्राभिः।
भोगोद्भवे विटानां मनोरथं पाटयन्तीव॥१३॥

एवंविधैव मुग्धे परिशीलितहट्टचेटकट्टुकानाम्।
प्रौढिः कण्टकतीक्ष्णा भवति परं पण्यजीवनशिशूनाम्॥१४॥

पितृभवनहृतं नियतं हस्तगतं विद्यते धनं तस्य।
भवति न तद्विधमधिकं प्रागल्भ्यं रिक्तहस्तस्य॥१५॥

बिलनिहितद्रविणकणश्चपलगतिर्मूषकोऽप्यलं प्लवते।
दानक्षीणस्तन्द्रीं सुषिरकरः कुञ्जरो भजते॥१६॥

विटविनिवारणयुक्त्या निर्मक्षिकमाक्षिकोपमं सहसा।
गत्वा करोमि तावत् तवोपजीव्यं वणिक्तनयम्॥१७॥

अस्माकमङ्गमङ्गं पण्योपनतं महाधननिधानम्।
दासीसुताः किमेते खादन्ति विटाः प्रसङ्गेन॥१८॥

इत्युक्त्वा तूर्णतरं शय्याभवनस्थितं समभ्येत्य।
शिशुमवदत् कङ्काली विजनकथाकेलितन्त्रेण॥१९॥

अपि पुत्र रात्रिरखिला सुखेन ते कुमुदहासिनी याता।
बन्धनयोग्योऽस्माकं कलावतीहृदयचोरस्त्वम्॥२०॥

ध्यानं वलनं जृम्भणमुच्छ्वसनं वेपनं परिस्खलनम्।
त्वत्सङ्गमेऽपि यस्याः किं कुरुते निर्गते त्वयि सा॥२१॥

लङ्घिततरुणसमुद्रा कलावती यत्पटाञ्चले लग्ना।
यामर्थयते दूतैर्दक्षिणदिग्वल्लभो भोजः॥२२॥

जन्मान्तरेऽनुबद्धा यदि नेयं सङ्गतिः कृता विधिना।
तत्किं त्वयि मम जाता परलोके पुत्रकार्याशा॥२३॥

विघ्नस्तु सङ्गमेऽस्मिन्नेकः परिचिन्तितोऽस्ति मे भयदः।
यदयं विटसङ्घातः कण्टकजालायते परितः॥२४॥

भुक्त्वा पीत्वा भवतः परधनवर्णाः स्ववित्तपरिहीणाः।
धूर्तास्त्वामेव पितुर्बन्धनयोग्यं प्रयच्छन्ति॥२५॥

तस्माद् यदि दिनमेकं तिष्ठसि सुतरामदृश्यरूपस्त्वम्।
तदयं कुटिलविटानां नैराश्याद् भिद्यते यूथः॥२६॥

इत्युक्ते कुट्टन्या शैशवसरलाशयो वणिक्सूनुः।
तामवदत् सत्यमिदं स्नेहान्मातस्त्वया कथितम्॥२७॥

अस्ति ग्रन्थिनिबद्धं मम किञ्चिज् जनकभाण्डशालात्तम्।
तदिदं गृहाण दुहितुर्मण्डनभोगव्यये योग्यम्॥२८॥

इत्युक्त्वा सारतरं दत्त्वा तस्यै शिशुर्गुरुद्रविणम्।
तत्सन्दर्शितमविशच्छन्नपथं पृथुलहर्म्यतलकोष्ठम्॥२९॥

तं प्रच्छाद्य सहर्षा कृत्वा मिथ्या मुखं नवविषादम्।
अभ्येत्य विटानवदत् कङ्काली कलकलारम्भे ॥३०॥

आजन्मसहजसुहृदामस्मत्प्रणयोपचारतुष्टानाम्।
उचितः किमयमकस्माद् भवतां निन्द्यः समाचारः ॥३१॥

दस्युसुतस्तीक्ष्णतरः स भवद्भिः किं वणिक्सुतव्याजात्।
रत्नाभरणाकीर्णं प्रवेशितोऽस्मद्गृहं रात्रौ ॥३२॥

अन्यगणिकाप्रयुक्ता यदि यूयं प्रहसनोद्यताः प्रसभम्।
तत् किं स्त्रीवधसदृशं क्रियते पृथुसाहसं पापम् ॥३३॥

स परं प्रभातनिद्रालवविवशायां क्षणं कलावत्याम्।
आदाय हारसहितं केयूरयुगं गतः कामी ॥३४॥

श्रूयन्ते प्रतिनगरं भूषणलुब्धैः पणाङ्गना निहताः।
निजदेवताप्रसादात् कलावती किं तु मुक्ताद्य ॥३५॥

तेन यदेतन्नीतं राजकुले कस्य मूर्ध्नि परिपतति।
प्रतिभूर्भवद्विधानां क्व गृहीतः पण्यललनाभिः ॥३६॥

पश्यत पश्यत लोकाः कलिकालः कीदृशः प्रवृत्तोऽयम्।
स्निग्धाः सुहृदः सधनाः स्त्रीवधपापं भजन्ते यत् ॥३७॥

को वेत्ति गुणविभागं हस्तेन परीक्ष्यते कथं जातिः।
दुर्ज्ञेयं कुटिलानां चेष्टितमन्यद् वचश्चान्यत् ॥३८॥

इत्युक्त्वा गृहपरिजनकलकलहोदग्रदुः सहविकारा।
कङ्काली राजपथे चुक्रोश गतागतैस्तारम् ॥३९॥

तन्द्रीत्यैव विटास्ते सपदि विवर्णा निरुत्तरप्रतिभाः।
निर्गत्योत्पथविवरैर्दूरतरे सङ्गमं चक्रुः ॥४०॥

अथ ते विचार्य सुचिरं भोगभ्रष्टाः समापतितकष्टाः।
मिथ्यापवादनष्टा विफलक्लिष्टा मिथो जग्मुः ॥४१॥

जाताक्षपटलदोषैरिव नास्माभिर्व्रजन् वणिग् दृष्टः।
कङ्काल्यैव हृतोऽसावित्यवदन् निर्गुटस्तत्र ॥४२॥

राशिं निगूह्य वणिजं पश्यत भूर्जेन निग्रहोऽस्माकम्।
कुट्टन्यैव कृतोऽयं परिशोचन्नब्रवीद् दिविरः ॥ ४३॥

विहिताङ्गहारयुक्तिः कुट्टन्या मूर्वङ्गयोग्योऽयम्।
अस्मन्नृत्तं वृत्तं किमन्यदिति नाट्यवित् प्राह ॥४४॥

कपटतुलां कङ्कालीमङ्कशताङ्कामहं वेद्मि।
विहितस्तया भ्रमोऽसावित्याह तुलाधरः कोपात् ॥४५॥

आकृष्य मेषभोगाद् दूरतरं मित्रमण्डलं वणिजः।
कालकलयेव नीतं कङ्काल्या गणक इत्यूचे ॥४६॥

पेया मद्यसमृद्धिस्तयैव सा कृतचिकित्सायाम्।
लङ्घनमिदमुपदिष्टं तापादित्यब्रवीद् वैद्यः ॥४७॥

नवसुखचरितं नष्टं कष्टं विभ्रष्टनियमवृत्तानाम्।
अस्माकमेतदनुपममित्याह कविः श्वसन् विरसः ॥४८॥

इति दुःखकोपविस्मयलज्जाकुलिताः कथां मिथः कृत्वा।
कुसुमारामभ्रष्टा इव मधुपास्ते विटाः प्रययुः ॥४९॥

अथ कङ्काली गूढं निःशल्यां कामभोगसामग्रीम्।
आस्वाद्य निशामनयन् निःशब्दमहोत्सवोत्साहा॥५०॥

प्रातर्विचिन्त्य युक्तिं सा गत्वा हट्टभाण्डशालाग्रम्।
कामिजनकस्य वणिजः स्फीतार्थसमृद्धिमद्राक्षीत्॥५१॥

सोऽपि महाधनसञ्चयलाभविशेषेऽपि सद्ग्राहः।
पुत्रहृतहेमचिन्तासन्तापात् कातरतरोऽभूत्॥५२॥

उन्नतबृसीनिविष्टः कोटित्रयलेख्यसम्पुटीहस्तः।
अर्थिजनवदनदर्शनमीलितनयनप्रसक्तसततान्ध्यः॥५३॥

बन्धादिमोक्षणागतलाभपरित्यागयाचने बधिरः।
अत्यल्पपण्यदानप्रश्नप्रतिवचनजल्पने मूकः॥५४॥

तैलमलकललला‍ञ्छितमूषकजग्धार्घट्टुप्पिकाविकटः।
शीर्णोर्णाप्रावरणप्रलम्बघनकञ्चुकाञ्चलालोलः॥५५॥

नग्नोरुजानुजर्जरधूमारुणपृथुलशिथिलमोचोटः।
रूक्षश्मश्रुकलापस्थूलप्रचलल्लुटुम्पकग्रन्थिः॥५६॥

निजगृहदिवसपरिव्ययया‍च्ञागतकन्यकाप्रहारोग्रः।
रज्जुग्रथितबुभुक्षितमार्जारीरावनिर्दयप्रकृतिः॥५७॥

दूराद् वितर्क्यमाणः स तया नासार्पिताङ्गुलीलतया।
ख्यातः स एव वणिगयमिति विदधे स निश्चितं तस्याः॥५८॥

साथ शनैरुपसृत्य प्रविरलजननिर्मलावसरे।
तमभाषत भाण्डपते वक्तव्यं किञ्चिदस्ति मम विजने॥५९॥

पुत्रस्ते मुग्धमतिर्मृगशिशुरिव लुब्धकैर्विटैः कृष्टः।
हारितभूषणवसनः सन्ध्यायां ह्यो मया दृष्टः ॥६०॥

दयया प्रवेशितोऽसौ मया स्वगेहं मनोहराकारः।
अविशत् क्षणं न जाने केन पथा मत्सुताहृदयम् ॥६१॥

स तया स्नानानन्तररुचिराम्बरभूषणार्पणप्रणयैः।
राजार्हविविधभोगैः काम इवाभ्यर्चितो भक्त्या ॥६२॥

वंशजगौरवयोगात् सुवृत्तताश्लाघ्यरूपसम्भारः।
कण्ठे हार इवासौ कृतस्तया गुणगणोदारः ॥६३॥

कायपणार्जितबहुविधराजसुतामात्यबहुधनेन सह।
अधुना त्वत्तनयोऽस्याः स्वामी प्रागजन्मसम्बन्धात् ॥६४॥

उचिततरसङ्गसुभगां दृष्ट्वैव कलावतीं रागयौवनोन्मत्ताम्।
तव हस्ते निक्षिप्तं स्त्रीधनसहितं मया गेहम् ॥६५॥

यातायां मयि तीर्थं कञ्चित् कालं त्वया कलावत्याः।
मुद्रामुद्रितमखिलं सर्वस्वं पालनीयं तत् ॥६६॥

अद्य तु भवता कार्यः पुत्रस्नेहात् स्नुषानुरोधाच्च।
अस्मद्गेहे स्वल्पो भोज्योत्सवमङ्गलाचारः ॥६७॥

उक्त्वेति साश्रुनयना कङ्काली तस्य वज्रहृदयस्य।
निपपात चरणयुगले सुतलाभविशेषतुष्टस्य ॥६८॥

स च तामुवाच भद्रे सर्वमिदं हर्षकारि कुशलतरम्।
किं तु त्वद्गमनं मे नाभिमतं सह गमिष्यावः ॥६९॥

परभोजननियमवता भोक्तव्यं त्वद्गृहे कथं नु मया।
सम्भोजनमूल्यं मे गृह्णासि तदा गमिष्यामि॥७०॥

इत्युक्त्वास्या हस्ते दत्त्वा हृष्टः स रूपकं सार्धम्।
तामन्तः स्मितवदनां विसृज्य पश्चाद् ययौ भोक्तुम्॥७१॥

तत्र सुतं सविलासं दृष्ट्वा कान्तासनाथसम्भोगम्।
निर्व्ययभोज्यसमृद्ध्या निश्चिन्तः प्रीतिमानभवत्॥७२॥

कर्पूरैलापरिमलरसवासितविविधभोजनं भुक्त्वा।
पीत्वा च भूरि मद्यं जगाद लुब्धः स कङ्कालीम्॥७३॥

सततं दिनव्ययं वः सर्वमहं समुचितं प्रदास्यामि।
एवं विधस्तु न पुनः कार्यः स्थूलव्ययारम्भः॥७४॥

इत्युक्त्वा स गृहं निजमगमद् गगनस्थलीकृषिकृताशः।
लाभप्रदर्शनं किल लुब्धधियां वञ्चनोपायः॥७५॥

अन्येद्युर्दिवसव्ययमानेतुं कुटिलचेतसस्तस्मात्।
चित्तग्रहणाय निजां विससर्ज कलावती दासीम्॥७६॥

सुचिरात् समेत्य दासी शरावचञ्चत्सहिङ्गुकणभूर्जा।
हस्तेन विस्फुटन्ती कलावतीं सस्मितामवदत्॥७७॥

श्वशुरेण ते महार्घः प्रहितोऽयं भूरिभोज्यसम्भारः।
उत्तिष्ठ कुरु विभागं निमन्त्र्यतां बन्धुवर्गश्च॥७८॥

तैलस्य तोलकमिदं तोलकयुगलं च चूर्णलवणस्य।
दत्त्वा मामिदमूचे भ्रुकुटीकुटिलाननः स परम्॥७९॥

तैलमिदं लवणमिदं शाकाय श्वेतिकाद्वयं दत्तम्।
वेश्यायाः किं कामी ददाति दिवसव्यये लक्षम्॥८०॥

इत्युक्त्वा तत्प्रहितं दासी सन्दर्श्य थूत्कृतं बहुशः।
क्षिप्त्वा दूरे तन्मुखदर्शनमलिनां निनिन्द दृशम्॥८१॥

अन्येद्युः कङ्काली विचिन्त्य तद्वञ्चने सुखोपायम्।
प्रययौ कृत्वा विजने कलावतीं विदितवृत्तान्ताम्॥८२॥

सा वर्णमानमुद्रासदृशसमुद्गद्वयं विधाय भवम्।
एकस्मिन्नाभरणान्यन्यस्मिन्नुपलखण्डिकां विदधे॥८३॥

स्थूलतरतूलपटिकाप्रावरणं प्राप्य भाण्डशालाग्रम्।
सा कक्षाञ्चलसंवृतसमुद्गयुगलावदद् वणिजम्॥८४॥

वाराणसीप्रयाणे नक्षत्रं क्षिप्रकृन्ममोपनतम्।
नास्ति पुनर्वसुनातरदर्शनमात्रं त्वयि गतायाम् (?)॥८५॥

इदमाभरणं सर्वं समुद्गकन्यस्तमस्ति रत्नाङ्कम्।
स्त्रीबालधनं भवता प्राणसमं सर्वथा रक्ष्यम्॥८६॥

इत्युक्त्वा तत् सर्वं संदर्श्य पुनः सुमुद्रितं कृत्वा।
निक्षिप्य पुरः प्रचुरं सा तमवादीत् सहेलैव॥८७॥

पाथेयमतः पृष्ठाल्लाभेन ममोपयुज्यते लक्षम्।
त्वं दातुमर्हसि सखे देवालयधान्यभुक्तिसंशोध्यम्॥८८॥

इति लीलया ब्रुवाणा समुद्गयुगलस्य विनिमयं कृत्वा।
लक्षं क्षणाद् गृहीत्वा जगाम निजवेश्म कङ्काली॥८९॥

अथ निर्वर्तितकृत्यां ज्ञात्वा तामागतां वणिग्भवनात्।
शङ्खसुतं हर्म्यगतां प्रोवाच कलावती विजने ॥९०॥

त्वयि मे हृदयमकस्मादन्तः सक्तं बलान्न निर्याति।
त्वं तु धनवान् विवाहं करिष्यसीत्येव मे शङ्का ॥९१॥

दिनरमणीयः पुंसां जन्मजघन्यस्तु गेहिनीसङ्गः।
तदपि विवाहे मोहादविचारतरादराः पशवः ॥९२॥

नित्यप्रसूतिहतसुस्थिरयौवनेषु
वेशोपचाररहितेषु मदोज्झितेषु।
गोष्ठीविलासरसकेलिनिरादरेषु
दारेषु का स्मररुचिः कलहाङ्कुरेषु ॥९३॥

जात्यैव कामिजनरञ्जनजीवितासु
वेशोपचारनिरतासु ससौरभासु।
कामप्रमोदममकासु (?) सविभ्रमासु
वेश्यासु कस्य न रतिः सततस्मितासु ॥९४॥

कुरु मे प्रत्ययहेतोर्धनधारणपत्रिकां विवाहे त्वम्।
विहिता सैव तवास्ते मत्तगजस्याङ्कुशशिखेव ॥९५॥

इत्युक्तः स रमण्या स्थूलतरोज्जासपत्रिकामलिखत्।
नाम्ना विक्रमशक्तेर्नृपमहिषीभ्रातृपुत्रस्य ॥९६॥

अथ शय्याभवनगतं प्रातः स्वयमेत्य कङ्काली।
जामातरमिदमवदन् मिथ्यैव सखेदवदनेव ॥९७॥

आसन्नयौवनस्त्वं दुहितुर्मे यौवनं त्वया प्रायः।
क्षपितमलक्ष्यं स्त्रीणां गलति हि सहसैव तारुण्यम्॥९८॥

स्थिरयौवनाः प्रकृत्या पुरुषाः किल तालसालसङ्काशाः।
ह्यः कन्यकाद्य तरुणी प्रातर्वृद्धा भवत्येव॥९९॥

मासादधिकायातं दिनद्वयं पुष्पदर्शनस्नाने।
अद्यैव कलावत्या गर्भाशङ्काकुलं चेतः॥१००॥

यौवनविभ्रमशापस्तनुनलिनीतुहिननिकरघनपातः।
प्रसवदिनं नारीणां पातकमुग्रं स्तनयुगस्य॥१०१॥

प्रसवहृतयौवनानामधोमुखे लज्जयेव कुचयुगले।
भवति न पण्यवधूनां विक्रयचर्चा तृणेनापि॥१०२॥

स्थविरत्वे पुरुषाणां भवन्ति सुखजीविकाः परिज्ञानैः।
यौवननाशे वेश्या यदि परमटति स्फुटं भिक्षाम्॥१०३॥

तस्मात् जनकाभावादविकलमापत्स्यमाननिजविभवम्।
अधिकरणपत्रलिखितं प्रयच्छ सुमते कलावत्यै॥१०४॥

इत्युक्ते कुट्टन्या सोत्साहः प्रीतये वणिक्तनयः।
आपत्स्यमानमखिलं प्रददौ हृष्टः कलावत्यै॥१०५॥

अथ शिथिलादरया स द्वित्रैर्दिवसैः समेत्य कङ्काल्या।
कृतसङ्केतः कङ्कः....श्रुत्यै कलावतीमूचे॥१०६॥

अयि रागदग्धहृदये कलावति व्रतवतीव कस्य त्वम्।
एष त्वामर्थयते ठक्कुरपुत्रो रणविलासः॥१०७॥

देवगृहगञ्जदिविरस्तव सततप्रार्थनानुबन्धेन।
पदमुक्तिधन्यकाले गणयति चण्डं मकरगुप्तः ॥१०८॥

अद्यापि महामात्यः सत्यरथस्त्वत्कृते समर्धदिने।
प्रहिणोति वस्त्रयुगलं न च प्रसादस्त्वयास्य कृतः ॥१०९॥

प्रेक्षणके त्वां दृष्ट्वा साहसराजेन राजपुत्रेण।
त्वद्गतसरभसमनसा वासवसेनावरुद्धिका त्यक्ता ॥११०॥

विरजसि वयसि नवेऽस्मिन्नेकश्चेदीप्सितस्तव स्वामी।
तत्किं यौवनभङ्गे ददाति कश्चिद् धनं मुग्धे ॥१११॥

याभिर्यौवनसमये रागेण धनार्जनं परित्यक्तम्।
ता एताः पर्यन्ते भस्माङ्ग्यश्चीवरिण्यश्च ॥११२॥

कुचकाञ्चनकलशवती नितम्बसिंहासना स्मितच्छत्रा।
एकपुरुषोपसेव्या नूनं त्वं रतिरमणराज्यश्रीः ॥११३॥

भुक्तं मयास्य वित्तं दाक्षिण्यमिति प्रनष्टविभवेऽपि।
मा त्वं कृथाः सुमध्ये ह्यो भुक्तं नाद्य तृप्तिकरम् ॥११४॥

दासी दासी तावद् यावत् पुरुषस्य किञ्चिदस्ति करे।
क्षीणधनपुण्यराशेर्दुष्प्रापा स्वर्गनगरीव ॥११५॥

ह्यो दत्त्वार्थं कथमिव गच्छाम्यद्येति निवसते प्रायम्।
कः कुरुते वेश्यानां तत्क्षणधनदानभोग्यानाम् ॥११६॥

इति कङ्कवदननिर्गतवचनशरैर्दारितो वणिक्तनयः।
निश्चेष्टः क्षणमभवद् वैलक्ष्याद् वीक्षमाणः क्ष्माम् ॥११७॥

अथ शूलबन्धुनिधनव्यसनाद्यङ्गप्रसङ्गकथनाद्यैः।
शय्यावहारमकरोत् कलावती शङ्खतनयस्य॥११८॥

अद्य व्रतनियमो मे दुःस्वप्ननिरीक्षणात् परं मातुः।
षष्ठीप्रजागरेऽद्य च राजकुले तत्र मे शय्या॥११९॥

अद्य वयस्यासूनोश्चूडाकरणं मृगाङ्कदत्तस्य।
इत्यादिभिरपदेशैः सा प्रययौ कामिनां भवनम्॥१२०॥

त्वरिता ततः प्रभाते कदाचिदभ्येत्य कम्पविकलाङ्गी।
कङ्काली शङ्खसुतं जगाद भयसम्भ्रमार्तेव॥१२१॥

उत्तिष्ठ पुत्र तूर्णं व्रज दत्त्वा शिरसि किञ्चिदविभाव्यम्।
अस्मत्कृतेऽद्य यूनोः सपत्नकलहे वधो वृत्तः॥१२२॥

नगरपतिर्विषमतरः कलावती मित्रमन्दिरं याता।
त्वं तु वणिक्सुत साधुर्धनगन्धे धावति क्ष्मापः॥१२३॥

तूलपटीं त्यज पृष्ठाद् गृहाण तूस्तीं (?) घरट्टमालातः।
को जानीते वर्त्मनि किं कुरुते कः परिज्ञाय॥१२४॥

इत्युक्ते कङ्काल्या मिथ्यैव विशल्यवेश्मकरणाय।
कृत्वा तदुक्तमखिलं पङ्कः प्रययौ कुमार्गेण॥१२५॥

वेश्यालताः सरागं पूर्वं तदनु प्रलीनतनुरागम्।
पश्चादपगतरागं पल्लवमिव दर्शयन्ति निजचरितम्॥१२६॥

इति समयमातृकायाः कङ्काल्या बुद्धिसंविभागेन।
भुक्त्वा वणिजः सकलं कलावती पूर्णविभवाभूत्॥१२७॥

इति बहुभिरुपायैः कुट्टनी कामुकानां
कृतसुकृतविहीना वञ्चनां सा कृतघ्ना।
वनभुवि मृगबन्धं हन्त पश्यन्ति नित्यं
तदपि हरिणशावाः कूटपाशं विशन्ति॥१२८॥

समयेन मातृका सा कृत्रिमरूपा कृता कलावत्या।
तन्नाम्नैव निबन्धः क्षेमेन्द्रेण प्रबद्धोऽयम्॥१२९॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृतायां समयमातृकायां
कामुकप्राप्तिर्नामाष्टमः समयः ।।

* * * * *

सालङ्कारतया विभक्तिरुचिरच्छाया विशेषाश्रया
वक्रा सादरचर्वणा रसवती मुग्धार्थलब्धा परम्।
आश्चर्योचितवर्णनानवनवास्वादप्रमोदार्चिता
वेश्या सत्कविभारतीव हरति प्रौढा कलाशालिनी॥१॥

संवत्सरे पञ्चविंशे पौषशुक्लादिवासरे।
श्रीमतां भूतिरक्षायै रचितोऽयं स्मितोत्सवः॥२॥

अद्रिच्छिद्रविनिद्ररौद्रफणिनामत्रास्ति कालं कुलं
मत्तास्तत्र वसन्ति दन्तिपतयः सिंहाश्रयेयं गुहा
इत्यार्तिप्रतिबद्धवृद्धशबरीवर्गेण मार्गाग्रगा
यद्वैरिप्रमदाः सदा वनमहीगाढग्रहे वारिताः॥३॥

वीरस्यार्तदयाविधेयमनसः शीलव्रतालङ्कृते-
र्निस्त्रिंशः परदारकृज्जयविधौ यस्यैककार्यः सुहृत्।
तस्यानन्तमहीपतेर्विरजसः प्राज्याधिराज्योदये
क्षेमेन्द्रेण सुभाषितं कृतमिदं सत्पक्षरक्षाक्षमम्॥४॥

॥ इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृता
समयमातृका समाप्ता॥

* * * * *

# ६. आत्मवृत्तम्

## आत्मवृत्तम्

(१)

**दशावतारचरितोपसंहारस्य अन्तिमाः श्लोकाः १-५**

यो मत्स्यकूर्मादिविचित्ररूपैराश्चर्यकारी हृदयस्थरत्नः।
श्रीमाननन्तः स्फुटशङ्खचक्रः श्रियेऽस्तु विष्णुर्विभवोदधिर्वः ॥१॥

कश्मीरेषु बभूव सिन्धुरधिकः सिन्धोश्च निम्नाशयः
प्राप्तस्तस्य गुणप्रकर्षयशसा पुत्रः प्रकाशेन्द्रताम्।
विप्रेन्द्रप्रतिपादितान्नधनभूगोसङ्घकृष्णाजिनैः
प्रख्यातातिशयस्य तस्य तनयः क्षेमेन्द्रनामाभवत् ॥२॥

तेन श्रीत्रिपुरेशशैलशिखरे विश्रान्तिसन्तोषिणा
विष्णोः स्वल्पविलोकिताकृतिसुधा संवर्धितोत्कण्ठया।
वाक्पुष्पैरमलैर्गुणप्रणिहितैरम्लानशोभैः स्थिरैः
भक्तिव्यक्तदशावतारसरसः पूजाप्रबन्धः कृतः ॥३॥

स्तुतिसङ्कीर्तनाद् विष्णोर्विपुलं यन्मयार्जितम्।
तेनास्तु सर्वलोकानां कल्याणकुशलोदयः ॥४॥

एकाधिकेऽब्दे विहितश्चत्वारिंशे सकार्तिके।
राज्ये कलशभूभर्तुः कश्मीरेष्वच्युतस्तवः ॥५॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितदशावतार-
चरितोपसंहारभूतात्मचरितम् ॥

* * * * *

(२)

## बृहत्कथामञ्जर्या उपसंहारलम्बकसङ्ग्रहश्लोकाः ३१-४१

काश्मीरको गुणाधारप्रकण्डश्चाभिधोऽभवत्।
नानार्थिजनसङ्कल्पपूरणे कल्पपादपः ॥१॥

यस्य मेरोरिवोदारकल्याणापूर्णसम्पदः।
अगणेयमभूद् गेहे यस्य भोज्यं द्विजन्मनाम् ॥२॥

सूर्यग्रहे त्रिभिर्लक्षैर्दत्त्वा कृष्णाजिनत्रयम्।
अल्पप्रदोऽस्मीत्यभवत् स लज्जानतकन्धरः ॥३॥

स्वयम्भूनिलये श्रीमान् यः प्रतिष्ठाप्य देवताः।
दत्त्वा कोटिचतुर्भागं देवद्विजमठादिषु ॥४॥

पूजयित्वा स्वयं शम्भुं प्रसरद्बाष्पनिर्भरः।
गाढं दोर्भ्यां समालिङ्ग्य यस्तत्रैव व्यपद्यत ॥५॥

क्षेमेन्द्रनामा तनयस्तस्य विद्वत्सु विश्रुतः।
प्रयातः कविगोष्ठीषु नामग्रहणयोग्यताम् ॥६॥

श्रुत्वाभिनवगुप्ताख्यात् साहित्यं बोधवारिधेः।
आचार्यशेखरमणेर्विद्याविवृतिकारिणः॥७॥

श्रीमद्भागवताचार्यसोमपादाब्जरेणुभिः।
धन्यतां यः परं यातः नारायणपरायणः॥८॥

कदाचिदेव विप्रेण स द्वादश्यामुपोषितः।
प्रार्थितो रामयशसा सरसः स्वच्छचेतसा॥९॥

कथामेतामनुध्यायन् दिनेषु विपुलेक्षणः।
विदधे विबुधानन्दसुधास्यन्दतरङ्गिणीम्॥१०॥

स श्रीदेवधराख्यस्य द्विजराज्यपदस्थितेः।
सर्वज्ञस्याज्ञया चक्रे कथामेतां विनोदिनीम्॥११॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रकृतायां
बृहत्कथामञ्जर्यां स्वचरित्रम्॥

* * * * *

(३)

## भारतमञ्जर्युपसंहारस्थश्लोकाः १-५

काश्मीरको गुणाधारः प्रकाशेन्द्राभिधोऽभवत्।
नानार्थिसार्थसङ्कल्पपूरणे कल्पपादपः॥१॥

सम्पूर्णदानसन्तुष्टाः प्राहुस्तं ब्राह्मणाः सदा।
इन्द्र एवासि किं त्वेकः प्रकाशस्ते गुणोऽधिकः॥२॥

कदाचिद् ब्राह्मणेनैत्य स रामयशसार्थितः।
संक्षिप्तां भारतकथां कुरुष्वेत्यार्यचेतसा॥३॥

स तमूचे करोम्येव प्रागेतच् चरितं मम।
हृष्टः सत्यवतीसूनुः स्वप्ने ज्ञाननिधिर्ददौ॥४॥

तं नमस्कृत्य वरदं सज्जोऽहं त्वत्समीहिते।
इत्युक्त्वा स्वप्नदृष्टस्य मुनेस्तुष्टाय तद्वपुः॥५॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितभारतमञ्जरी-
समुद्धृतं स्वकीयचरितम्॥

* * * * *

## (४)

## रामायणमञ्जर्युपसंहारस्य १-७ श्लोकाः

कश्मीरेष्वभवत् सिन्धुजन्मा चन्द्र इवापरः।
प्रकाशेन्द्रः स्थिरा यस्य पृथिव्यां कीर्तिकौमुदी॥१॥

सदा दयार्द्रहस्तेन महता भद्रमूर्तिना।
साधु कुञ्जरिता येन प्राप्ता कीर्तिपताकिना॥२॥

विद्वज्जनसपर्याप्तपर्याप्तस्वजनोत्सवः।
कथासारसुधासारं क्षेमेन्द्रस्तत्सुतो व्यधात्॥३॥

मुक्तात्मना रणत्तारहारनूपुरमेखला।
विलासलासिका यस्य वदनं भाति भारती॥४॥

लोभाभिमानमलिनानि धनानि नित्यं
कान्ताकटाक्षचटुलानि च जीवितानि।

ज्ञात्वेति चन्द्रधवलानि यशांसि येन
काव्यैः स्थिराणि भुवनेषु निवेशितानि ॥५॥

आमोदयन्ति सरसान्यतिकोमलानि
विप्रेण रामयशसा प्रणयार्थितानि।
येनानिशं प्रणयभूषणतां जनस्य
नीतानि काव्यकुसुमान्यसितानि तानि ॥६॥

गुणा गुणितया भान्ति येषु वस्तेषु विस्मयः।
निर्गुणेषु गुणानेव ये वदन्ति जयन्ति ते ॥७॥

**इति**
**श्रीव्यासदासापराख्यक्षेमेन्द्रविरचितरामायणमञ्जरीसमुद्धृतं**
**स्वकीयोदन्तम् ।।**

* * * * *

# परिशिष्टानि

(१) श्लोकानुक्रमणिका
(२) क्षेमेन्द्रनिर्दिष्टाः ग्रन्थकाराः ग्रन्थाश्च
(३) क्षेमेन्द्रोदाहृताः स्वग्रन्थाः श्लोकाश्च
(४) क्षेमेन्द्रस्य अनिर्दिष्टग्रन्थश्लोकसूची
(५) शब्दार्थसङ्ग्रहः
(६) क्षेमेन्द्रकृतिसम्बद्धसाहित्यसूची (Bibliography)
(७) Historical Notes on the Authors cited by Kshemendra
(८) Abbreviation Index

# श्लोकानुक्रमणिका

# श्लोकानुक्रमणिका

* * * * *

## परिशिष्टम् - २
## क्षेमेन्द्रोदाहृताः ग्रन्थाः ग्रन्थकाराश्च

| कविः | कृतिः | श्लोकः | पृ.सं |
|---|---|---|---|
| अभिनन्दः | | तस्यां निजभुजो | 119 |
| अमरुकः | *अमरुशतकम्* | (३)आलोलामळाबली | 64 |
| | | गन्तव्यं यदि नाम | 71 |
| आनन्दवर्धनः | *ध्वन्यालोकः* | (३-८७) विरोधी वा | 30 |
| आर्यभट्टः | | शब्दैर्निसर्गकटु | 71 |
| उपाध्यायगङ्गकः | | स कोऽपि प्रेमार्द्रः | 63 |
| कलशकः | | उज्जलौ जलमधीर | 103 |
| कार्पटिकः | | शीतेनोद्धृषितस्य | 17 |
| कालिदासः | कुन्तेश्वरदौत्यम् | इह निवसति मेरुः | 107 |
| | *कुमाकसम्भवम्* | (८-६३) अङ्गुलीभिरेक | 120 |
| | | (२-६४) अथ स ललित | 107 |
| | | (१-६०) अवचितबलिपुष्पा | 120 |
| | | (१-१) अस्त्युत्तरस्यां दिशि | 102 |
| | | (८-८२) ऊरुमूलनख | 13 |
| | | (३-७२) क्रोधं प्रभो संहर | 63 |
| | | (३-२७) बालेन्दुवक्त्राणि | 18 |
| | | (१-३९) मध्येन सा वेदि | 119 |
| | | (३-२८) वर्णे प्रकर्षे सति | 18 |
| | *मेघदूतम् -* | (१) कश्चित् कान्ताविरह | 112 |
| | | (२) जातं वंशे त्रिभुवन | 11 |

| | | | |
|---|---|---|---|
| | | (३) तस्मिन्नदौ | 121 |
| | | (५१) ब्रह्मावर्तं जनपदं | 111 |
| | | (१०१) श्मामास्वङ्गं | 80 |
| | *रघुवंशम्* - | (३-७०) अथ स विषय | 50 |
| | | (१-१२) तदन्वये शुद्धिमतिः | 101 |
| | | (१-१) वागर्थाविव | 69 |
| | | (१-३३) व्यूढोरस्को वृष | 86 |
| | *विक्रमोर्वशीयम्* | (२-६) इदमसुलभवस्तु | 62 |
| | *शाकुन्तलम्* | (२-६) गाहन्तां महिषाः | 114 |
| **कुमारदासः** | *जानकीहरणम्* | अयि विजहीहि | 44 |
| | (महाभाष्ये (१.३.४८) उदाहृतं किन्तु जानकीहरणे न दृश्यते) | | |
| **गन्दिनकः** | | करतरलितबन्धम् | 107 |
| **गौडकुम्भकारः** | | लाङ्गूलेन गभस्तिमान् | 35 |
| **चक्रः** | | नेतुं नौभिरिभाः | 122 |
| | | सत्यं पातालकुक्षि | 115 |
| **चन्द्रकः** | | कृशः काणः खञ्जः | 24 |
| | | कृष्णोनाम्ब गतेन | 25 |
| | (लीलासुखस्य कृष्णकर्णामृते (२.६३) दृश्यते) | | |
| | | खगोत्क्षिप्तैः | 16 |
| | | यत्रानेके क्वचिदपि | 87 |
| | | युद्धेषु भाग्यः | 14 |
| | | स्तनौ सुपीतौ | 81 |
| **तुञ्जीरः** | | त्वन्मुखचन्द्रनिरीक्षण | 102 |

(न एष बाणभट्टस्य श्लोकः किन्तु रविचन्दस्य एव-प्रा.सी. आर. देवधरमिश्राणां अमरुशतकम् अत्र द्रष्टव्यम्)

| | | | |
|---|---|---|---|
| | | हृताञ्जनश्यामल | 101 |
| श्रीहर्षः | रत्नावली | (२ ४) उद्दामोत्कालिका | 17 |
| | | (४.२१) एष ब्रह्मा सरोजे | 87 |
| | | (२.२) कण्ठे वृत्तावशेष | 23 |
| | | (२.७) दुर्वासकुसुमशर | 105 |
| | | (२.३) नष्टं वर्षवरैः | 23 |
| | | (२.१३) परिम्लानं पीन | 9 |
| | | (१.८) विश्रान्तविग्रह | 15 |
| साहिलः | | कचग्रहमनुग्रहम् | 109 |

*****

## परिशिष्टम् - ३

## क्षेमेन्द्रोदाहृताः स्वकीयाः श्लोकाः

| कृतिः | श्लोकः | पृ.सं |
|---|---|---|
| अमृततरङ्गः | आवर्तशोभी | 85 |
| अवसरसारः | भग्नाहितश्वसित | 34 |
| कनकजानकी | अत्रार्थः खरदूषण | 1 |
| | आर्यस्यास्त्रधन | 86 |
| | कर्णाभ्यर्णविकीर्ण | 86 |
| | जम्बूबिम्ब | 88 |
| | वामस्कन्दनिषण्ण | 88 |
| चतुर्वर्गसंग्रहः | (४.२३) चित्तं वातविकासि | 89 |
| | (४.७) भोगे रोगभयं | 26 |
| | (१.२६) मान्यः कुलीनः | 88 |
| चित्रभारतनाटकम् | इतश्चश्चत् | 77 |
| | नदीवृन्दोद्दाम | 53 |
| | पृथुशास्त्रकथा | 85 |
| देशोपदेशः | (४.५) भगदत्तप्रभावाढ्या | 84 |
| नीतिमाला | त्रैलोक्याक्रमणैः | 41 |
| | यः प्रख्यातजवः | 32 |
| | वरुणरणसमर्था | 40 |
| | शौर्याराधित | 21 |
| पद्यकादम्बरी | अंगं चदन | 85 |
| | अंगेऽनङ्गज्वर | 76 |

* * * * *

## परिशिष्टम् - ४

## क्षेमेन्द्रस्य अनिर्दिष्टग्रन्थश्लोकाः स्वकीयाः



* * * * *

# परिशिष्टम् (५)

## शब्दार्थसङ्ग्रहः

| | |
|---|---|
| अकालपुष्ट-a | precocious ४०३-३ |
| अकृतश्रम-a | one who has never studied |
| अक्षरभक्षकमेलालिप्तमुख-m. | whose mouth is besmeared with the black soot while licking off letters from writing, |
| अक्षरशिक्षक-m. | a tutor teaching the alphabets |
| अक्षिकोप-m. | irritation of the eyes |
| अक्षिराग-m. | eye love; love as expressed by an exchange of glances (cf ) |
| अक्षिजन्मन्-a. | born of eyes |
| अक्षिजीवाञ्जन-a. | collirium making the eyes lively |
| अक्षोट-n. | a walnut fruit |
| अङ्कशताङ्का-a. | marked out with hundred figures |
| अङ्कसहस्राङ्क-a. | marked with thousands of curves (hooks) |
| अङ्कुशशिखा-f. | the tip of the goad (अंकुश) |
| अगारदाहिन्-n. | (cf आगलाव्या in marathi) a legal term (?) |
| अङ्गमर्मन्-n. | vitals of the body |
| अङ्गरक्षक-n. | cloth soft to touch outer covering of the body |
| अङ्गविद्धविषा-a.f. | whose body is pervaded by poison (cf विषकन्या) |
| अङ्गविभाविन्-a. | apparent on the body |
| अङ्गहारयुक्ति-f. | a plan for gesticulation |
| अङ्गारराग-m. | love representing charcoal or fire |

अञ्चलाकर्ष-a. pulling at the end of the garment
अचिकित्सक-m. one who does not diagnose
अचुल्लीपाक-m. without anything ever being cooked in the fireplace
अचौर-m. not a thief, i.e honest
अज्वर-a. having no fever
अज्ञातचित्त-a. of an unknown mind
अञ्जलिसृष्टहस्ता-a f. with hands closed (embraced)
अतिचौर-a. expert in theft, surpassing thieves, better than ordinary thief
अतिपूर्ण-a. excessively full (of wealth or pus)
अतिरात्र-m. a proper name
अतिसन्तापनष्टच्छाय-a. losing lustre through great heat or pain
अत्यन्तनिकटस्थिति-a staying very close
अत्यन्तनिश्चल-a. extremely steady
अदृष्टलवणा-a.f. who had never seen salt (on account of stingyness)
अधनापवाद-m. scandals concerning poverty
अधमगा-a.f. going to the wicked or the lowest persons; acting wickedly (the three musical notes)
अधिकरणद्विज-m. the birds of the court; judicial officers, cf.अधिकरणभट्ट ३३४-१३३
अधिकरणपत्रलिखितं-n, writing on a stamp; a letter of authority.
अधिकरणभट्ट-m. an officer in the court (नाझर in marathi) ३२४-१३३
अधिकारपरिभ्रंश-m. loss of authority

| | |
|---|---|
| अधिकारमद-m. | vanity of authority |
| अधिकारिसूनु-m. | the son of an officer |
| अनङ्गलेखा-f. | a proper name |
| अनङ्गसार-m. | the essence of love |
| अनन्त-a. | having no end. N of a king in kashmir |
| अनन्यचित्तनियत-a. | solely bent upon other's mind |
| अनशनव्रतिन्-a. | having a vow of not eating; abstaining from food |
| अनुपमा-f. | a proper name |
| अनुवर्तनजीविन्-a. | living on compliance |
| अनुवृत्तिपूर्वम्-ad. | preceded by obedience |
| अनेकजिह्व-a. | speaking in different languages; double tongued i.e.a deceiver |
| अन्तः सक्त-a. | firmly attached |
| अन्तः सानुशय-a. | internally repenting |
| अन्तक्षण-m. | last moment at the time of death |
| अन्तरस्थ-a. | lying inside |
| अन्तरालीन-a. | abiding within himself |
| अन्तर्निःस्नेह-a. | having no love in the heart |
| अन्तर्मुख-a. | turned towards; self centred; introvert |
| अन्त्याङ्गुलि- m. | the small finger |
| अन्धकद्विष्-m. | enemy of the demon अन्धक i.e. god siva |
| अन्यप्रकारता-f. | assuming different form |
| अन्यराशिप्रवण-a. | inclined to acquire other's wealth |
| अन्यवक्त्र-a.f. | with her face turned aside |

अन्याश्रय-a. depending on others
अपरपाकिन् (स्वयंपाकिन्)-a. one who cooks his own food himself
अपरपुत्र-m. another's son or another son
अपस्माराग-m. love resembling epilepsy
अन्नव्यञ्जन-n. food and condiments
अन्नसंकाङ्क्षिन्-m. desirous of food
अपुनर्दानचेतसा-ad. not with a view of returning
अयोष्यपरिपूरक-a. filling the wealth of the poor
अप्रस्तावकटूत्कटा-a.f. bitter and unpleasant on account of being inopportune
अभिचारहुत-a. offered to for exorcising purpose; fire to whom an oblation is offered cf अभिचारहोम ३८५-९
अभ्यङ्गपट्टिका-f. ointment bandage
अमङ्गलाकृति-a. having an inauspicious face
अमृतस्पर्श-m. nectarlike touch
अम्भोभर-m. volume of water
अभ्युत्थितस्तब्ध-a. risen and stiff (prosperous and haughty)
अयत्नसाध्य-a. available without effort; loose
अधर्मपथ-m. a path of sin
अर्थप्राण-a. who rega0rd wealth as his life i.e. richman
अर्थलुब्थ-a. greedy of wealth; desirous of good meaning
अर्थस्तुति-f. praise of money or wealth
अर्धक्षीराभिधा-f. named अर्धक्षीरा ३६२-६८
अर्धधर्धटिका-f. a proper name

| | |
|---|---|
| अर्धनिबोधभाज्-a. | half awakened |
| अर्थोद्यम-m. | efforts for acquiring or earning |
| अर्धवेलाम्-ad. | for half a time i e. for a short time. |
| अवाप्ततिलक-a. | marked with a तिलक at the time of feeding |
| अलिपिज्ञ-a. | not conversant with writing; ignorant; illiterate |
| अर्थशास्त्र-n. | (should be as अर्थज्ञातम्) plenty of wealth |
| अलीकनिःस्पृह-a. | pretending to be desireless |
| अल्पकौशला-a.f. | having little skill |
| अल्पलीन-a. | sticking for a short time; disappearing in a short time |
| अवद्यकारिन्-a. | doing blameable actions; doing base actions |
| अवद्यविद्यावित्-a. | knowing the censurable lore |
| अवनिसक्त-a. | rooted to the ground |
| अवरुद्धिका-f. | a woman secluded in the inner apartment; a kept woman or a keep |
| अवस्करक्षेत्र-n. | a place for a closet |
| अवसादपदवी-f. | state of distress |
| अवहारोपयोग्याय-a. | for use in breaking an appointment |
| अवारितम्-ad. | unrestricted |
| अविकार-m. | no change |
| अविचिन्तित-a. | unexpected |
| अविदितसकलसमास-a. | who did not understand the whole compound |
| अशुचिरत-a. | attached to unclean things |
| अशेष-a. | without a remainder i.e. a popper |

| | |
|---|---|
| अशेषायुस्-a. | about to die |
| अशौचनिधि-m. | store of impurities |
| अश्रुतपण्डित-m. | conversant with ignorance; ignorant |
| अविचलेक्षण-a. | steady eyed |
| अश्रुवर्षिन्-a. | shedding tears; weeping |
| अश्वराग-m. | horse-like love |
| अश्वशालादिविर-m. | a stable man; a groom or warder |
| अष्टावतारस्तोत्र-n. | a stotra referring to the अष्टावतार or कृष्णस्तोत्र |
| असाधुशब्द-a. | using bad words |
| असूचिभेद्य-a. | not to be pierced even by a needle; too young for the amorous sport |
| असत्यसारा-a.f. | based on falsehood, having a false principle |
| अस्थाननखक्षत-a, | nail wounds given at an improper place (pudenda) |
| अस्थियन्त्रशिरातन्त्री-f. | the frame of bones and a lute with strings |
| अस्थिरता-f, | unsteadiness, attached to or fond of bones (sch.) |
| अस्थिराग-m. | bone-like love |
| अस्थिशेष-a. | one whose bones have only remained |
| अस्थिशेषता-f. | reduction to a skeleton |
| अस्थिसंस्थ-a. | lying in bones |
| अहंकारस्तब्ध-a. | stiff or weak with vanity |
| अहंकाराभिधान-a. | having the name of ego |

## आ

आकारशीर्षहारिन्-a. omitting sign of the long आ and the head destroying body and headliness of letters,

आक्रन्दवर्जित-a. devoid of crying

आखुविखण्डित-a. damaged or bored by rats

आचारनिधि-m. store of good conduct

आतरदर्शनमात्रम्-ad. enough for the sight of freit for crossing the river

आतुरवित्त-n. money received from a diseased person (by a physician)

आन्त्रोदरकृत्तिका-f. having skin over bowels and stomach. sunk deep inside

आत्मारामता-f. condition or state of rejoicing in one's self (M.W.)

आत्मारामस्थिति-a. staying in his own garden; rejoicing in self position

आपत्प्रशमन-n. pacification of the distress; removing distress

आपत्स्यमान-a. what was going to be obtained

आपाण्डुरमुखी-a.f. (पाण्डुमुखी) pale faced (M.W.)

आप्तवित्त-a. with wealth obtained or acquired

आमोचोट-m. a kind of dress; a piece of cloth (cf sch) (कुडते in marathi)

आयव्ययकार्य-n. transaction concerning income and expenditure

आयातकार्य-a. with whom people have some business

आयुः क्षयङ्कर-a. causing destruction of life.
आरामिक-m. a gardener
आरूढरतियन्त्र-a. (रतिपाश - संयोग) being in the posture of cohabitation
आर्याङ्गना-f. a noble lady
आमपक्वसंहारकारिन्-a, consuming or devouring raw as well as cooked food
आसन्नयौवन-a. approaching youth; adolescent
आसन्नरोग-a. who is almost to fall ill
आसन्नलाभाभिमुख-a. with face turned towards eminent profit
आश्लिष्टकूट-a. deceitful without efforts
आस्थानदिविर-m. the assembly clerk
आस्थानभट्ट-m. a clerk of the assembly
आस्थानभट्ट-m. court officer, medical officer

इ

इन्द्रियसंज्ञक-a. named after इंद्रिय
इन्द्रायुधराग-m. rainbow like love
इन्द्रियेच्छा-f. desire of the senses

ई

ईर्ष्यारुष्-f. anger due to envy; wounded or scared with spite (vedic) अरुष् - f. soar or wounds (M.W)

उ

उच्छिष्टफालक-n. a wooden tray for throwing the
उच्छिष्ट फालकम्-n.a showel
उज्जामतण्डुल-m. a kind of rice (?)

उच्छृंखलायास-a. tormenting of perversed men

उज्जास-m. liberation कबजेपत्र तावा in marathi)

उत्कोचभक्षण-n. swallowing bribes; corruption

उत्क्षिप्तभुजा-a f. with hands raised

उत्क्षिप्तशृंखला-a. one who has thrown off the chains

उत्तमस्त्रीसमागम-m. intercourse with high class women

उत्पथविवर-m. hole made through wrong road or a byelane

उत्पुंसिताक्षर-a. who had rubbed off the letter

उत्सरत्पटलीमिश्रकंकावलयमालित-a. having a large number of sandal bracelets interwoven with a moving golden ring (पटली)

उत्स्फोटितमुख-a. (of उल्लुञ्चितमुख) whose beard has been plucked ऋणराशि)

उदञ्चित च-a. with the hair raised up or combed backward

उद्देशनिदर्शन-n. illustration by the object of description

उद्देशलेशेन-ad. in the form of statement; by way of sample

उन्मार्जितानना-a. having a clean face

उद्बाष्पदृश्-a. having tearful eyes

उद्वेष्टविवेष्टन-n. writing and squirming

उपताप-m. pain; troubles; N. of a demon

उपबिन्दु-m. smaller dot

उपलखण्डिकां-f. piecess of stones; rubbles

उपस्करण-n. utensils or house-hold articles

उपानत्कुत्सितारावगर्वित-a. haughty on account of the despised noise of a shoe

| | |
|---|---|
| उपायशून्य-a. | devoid of expedient |
| उपासकदास-m. | a buddhist servant |
| उलूकवदन-a. | having owl-like face; owl faced |
| उष्ट्रगल-m. | the neck of a camel |

ऊ

| | |
|---|---|
| ऊरुस्वस्तिक-n.a | स्वस्तिक formed by crossing the thighs |
| ऊर्णायु-m. | a ram (मेष) a blockhead (vedic) |
| ऊर्ध्वनयन-a. | with his eyes upwards; looking up |
| ऊष्मन्-m. | fire |

ऋ

| | |
|---|---|
| ऋणराशि-a. | having a burden of debts; greatly in debts |
| ऋद्धिवर्धन-n. | increase in prosperity; growth of wealth |

ए

| | |
|---|---|
| एकदृष्टि-a. | one eyed; concentrating solely upon one thing |
| एकपुरुषसेव्य-a. | fit to be enjoyed by one man only |
| एकाङ्गनाशन-a. | destroying one side of the body |

क

| | |
|---|---|
| कक्षाकुट्टन-n. | pounding the sides |
| कक्षालनामन्-m. | named कक्षाल |
| कङ्क-m. | a proper name |
| कङ्कमुखः-a. | a pincer; a sharp instrument; a sort of forceps (M.W) |
| कंकाली- f. | (पिशाचिनी) devouring human flesh; a female demon, a proper name |

कङ्क + आली (?) a row of birds

कङ्कावलय-n. a sandal bracelet
कञ्चुकाभ-a. like to a कंचुक
कटि-f. a proper name
कटक-n. (?)
कटीघण्टाभिधान-a. कटीघण्ट name
कण्टकतीक्ष्ण-a. as sharp as a thorn
कटीशूल-m. sciatic pain; plurisy
कटुकाधिवास-m. bitter smelling cosmetics
कण्टकजालायते-a. behaving like thorns
कण्ठप्रणाल-m. throat passage
कण्डूविखंडन-a. appeasement of itch (sexual desire of women)
कथितावसाद-m. (?) expressed indifference
कदशन-n. bad food or little food
कन्यामंजरी-f. a blossom like girl i.e. a beautiful young girl
कपटकाममयी-a.f. full of false love
कपटतुला-f. a balance of deceit
कपटनाटक-n. a drama of deceit
कपटाश्रय-a. based on tricks; full of tricks
कपटाक्षशालाका-f. a false dice
कपटाक्षशाला-f. a gambling house for deceiving. cf. द्यूतशाला
कपालपाणि-a. with a skull in hand
कपिमुख-a. having a monkey-like face; N. of a demon
कमल-m. a proper name
करङ्क-m. (?) skeleton

| | |
|---|---|
| करणी-f. | a mason's instrument (थापी in marathi) |
| करण्ड-m. | a bamboo basket |
| करभग्रीवा-f. | long necked as a camel |
| करिका-f. | water vessel |
| कर्णपूरराग-m. | love resembling ear ornaments |
| कर्णलग्न-a. | attached to the ear; constantly lacking |
| कर्ततीहस्त-a. | with a scissor in hand |
| कर्णसुखाभ्यास-m. | practice of giving pleasure to the ear |
| कर्पर-m. | a proper name |
| कर्परी-f. | a torn cloth; a ragged cloth |
| कलमकर्तरी-f. | a penknife or scissor to cut the ends of a pen |
| कलमच्युत-a. | fallen or dropped down from the pen |
| कलमरेखा-f. | the pen point |
| कलमशिखाहत-a. | beaten with a stroke of a pen i.e. destroyed through writing |
| कलमाकर-m. | a mine of pens; working with a pen |
| कलमास्त्र-n. | a weapon in the form of a pen |
| कलश-m. | a proper name |
| कलशप्रद-a. (?) | giver of a pot (pitcher) |
| कलह-m. | a proper name |
| कलहाङ्कुर-m. | sprouts producing quarrels |
| कलहोत्कट-a. | furious in quarrel; quarrelsome |
| कलहोपवास-a. | fast due as a result of quarrels |
| कलङ्ककण-m. | slightest blame |
| कला-f. | a proper name |

कलाकोश-m. wealth of arts

कलाभृत्-m. one holding some art, an artisan, the digit bearer, i.e. the moon, god siva

कलावत्-a. possessing arts, skilled in fine arts, the moon

कलिपन्नग-m. a serpent during the कलि age.

कल्मषमानस-a. desirous of moral stain

कल्पदोष-d. having the defects of a kalpa

कल्यपाल-m. a distiller or seller of spirituous liquors कल्यपाली

कवलिताखिल-a. swallowing every thing

कष्टं मयैव कृष्टः ज्वलितांगारः स्वहस्तेन, alas, I have myself pulled out chestnuts out of fire

कस्तूरिकामधु-n. liquor or honey scented with musk

काकग्रीवा-a. (f) with neck just like a crow; crow-necked

काचकाचरलोचन-a. with glassy eyes; having eyes shining like glass

काचर-a. (कपिल) tawny, brown

काचराक्ष-a. having glassy eyes.

काचराग-m. glass-like love

काञ्चनी-a.f. a poisonous medicine producing jaundice and ultimately death

काञ्जिका-f. sour gruel of rice (पेज in marathi)

कान्ताकृति-f. the appearance or form of a lovely woman

कान्ताक्लेशलेशविभागवत्-a. sharing in the least the pain of the female companion

| | |
|---|---|
| कापालिकव्रत-n. | a vow observed by a कापालिक |
| कामतत्त्व-n. | principles of love |
| कामतात्त्विक-a. | expert in the science of sexual love |
| कामप्रमोदममका-f. | (? owned by (or subservient) or completely under the control of sexual enjoyment |
| कामप्रमोद-f. | sexual enjoyments |
| कामभोगसामग्री-f. | materials of enjoyment |
| कामला-f. | jaundice |
| कामलाहरितच्छायशिरः शाटककञ्चुक-a. | whose shirt and head dress had a green lusture like that of jaundice |
| कामसत्त्वम्-n. | amorous sport; free enjoyment |
| कामिगण-m. | a friend of the lustful |
| कामिनीदीप्तिरसिकः a. | taking delight in the lustre of women |
| कामिस्पर्थिन्-a. | vying with lovers |
| कामुकछद्मचारिन्-a. | (णीf) - (prostitute) practising deceit towards lovers |
| कामुकलोक-m. | a group of lovers |
| कामुकलोकयात्रा-f. | condut of lovers |
| काम्ब-m. | a proper name |
| कायपण-m. | wealth in the form of body |
| कायविक्रय-m. | sale of body (prostitution) |
| कायस्थनाथ-m. | chief of writers |
| कायदर्पबलोद्भव-a. | born of pride in one's own physique |
| कायस्थसुन्दरी-f. | the beautiful lady of the writer |
| कार्यदूत-m. | a messenger |

कालकङ्काल-a. reduced to death-like skeleton
कालखण्ड-m. a part of time
कालदौरात्म्य-n. wickedness of time (age)
कालाहार-m. (कालापहार) whiling away the time; waste of time
काव्यहेवाकिन्-a. devoted to composing poetry
काषायराग-m. love resembling brown colour
काष्ठभूतता-m. the state of being reduced to a piece of wood i.e. as if completely unconscious
किंशारुवर्ति-f. (?) ointment prepared from the beard of corn
कितवचक्र-n. a group of gamblers
किलाट-m. inspissated milk
कीलवत-m. a proper name; a helmsman सुकाणूवाला
कुकुटीकोटरोदर-n. the inside of which is like the nest of a hen
कुक्षिभेद-m. splitting the sides; N. of a demon
कुक्षिभेदिन्-a. loosening the bowels; splitting the bowels
कुङ्कुमराग-m. love resembling कुंकुम
कुम्भादेवी-f. a proper name
कुटुम्बिभट-m. hosts of family relatives
कुटिलक-m. a cook; a proper name
कुट्टनी-f. a pestle (मुसळ in marathi)
कुट्टनीकृतान्त-a. like god of death for a harlot
कुण्डघण्टादिमूल्य-n. cost of कुण्ड (pots) bells etc
कुद्दालकभार्या-f. the wife of a potter (कुद्दालक)
कुलटागृह-n. the house of a prostitute (कुलटा)

कुमुदहासिनी-a.f. (a night) laughing through kumud flowers
कुशतिलराजतवालीकलितकरा-a.f. whose hands are filled with कुश, तिल, and a silver ring; who has got कुल, तिल and a silver ring in hand
कुलवागीशी-f. family deity of learning
कुशलवादिन्-a. speaking good
कुलाली-f. a potter woman
कुल आली कुलपरंपरा-f. the ways and customs of the family
कुष्ठराग-n. leprosylike love
कुसुम्भराग-m. love resembling the colour of saffron
कूटकामिन्-a. false lover
कूटकुटिला-a.f. crooked in her tricks
कूटकुचकञ्चुक-m. a bodice containing falsies (false breasts)
कूटकृतप्राणान्तचेष्टा-f. pretending to attempt to end one's own life
कूटकेशवत्-a.f. having false hair
कूटकपटप्रकटाक्षरकोविद-a. (ती) expert in कूट (ambiguous), कपट (tricky and प्रकट (clear) writing
कूटपण्य-n. deceitful trade
कूटरक्षण-n. hiding or guarding of the tricks
कूटरथ-m. a proper name
कूटसंकेतपटोपात्र-n. (?) cloth and pot containing secret signs
कृतकनिद्रा-f. feigned sleep; pretended sleep
कृतकनिस्वन-m. false groaning
कृतकोपवादसंमूर्च्छित-a. fainted on account of angry speech

| | |
|---|---|
| कृतद्वित्रगतागता-a.f. | come and gone twice or thrice |
| कृतदीक्ष-a. | initiated |
| कृतविस्मरण-n. | forgetting of services rendered |
| कृतरात्रिभोग-a. | who has enjoyed the night; who has enjoyed during night |
| कृतान्यस्त्रीसमागम-a. | having intercourses with another's wife or another woman |
| कृतान्ताधिकृत्-a. | an officer of death i.e. |
| कृताभियोग | making efforts |
| कृतारुचि-a. | having loss of apetite; one who has created displeasure |
| कृतोपवास-a. | one who has fasted |
| कृत्ताङ्गुष्ठ-a. | whose thumb has been cut off |
| कृत्याश्रमक-a. | hermitage of a witch |
| कृत्रिमकुञ्चित-a. | artificially made crooked; curled |
| कृत्रिमराग-m. | false (artifical) tunes |
| कृत्रिमरागिणी-a.(f) | showing false love; pretending to love |
| कृपापर-a. | kind, compassionate |
| कृसरा-(f) | (खिचडी) a mixture of rice, peas with a few spices |
| कृष्णीकृतकेश-a. | one who has darkened (dyed) his hair |
| केतुराग-m. | love resembling केतु |
| केवलभक्त-m. | a mere devotee |
| केलिपटह-m. | a drum for sport; playfully struck again and again |
| केलिप्रांगण-n. | courtyard for playing sports; a playing ground |

केशधन-a. having good hair as his wealth (fine looking on account of hair)
केशरञ्जन-n. colouring of the hair
केशराग-m. love resembling the hair
कोच्छिकावाद्य-n. a musical instrument called कोच्छिका.
कोपप्रकार-m. ways of causing or showing anger
कोपविकृत-a. estranged with anger
कोषपानम्-n. swallowing of treasure or money
कोष्ठागलग्रह-m. (?) seigure of abdomen and throat
कोष्ठागारप्रहारिक-a. a robber of treasury
कौकिलरागा-m. cuckoo-like love
कौटिल्यसार-a. essentially crooked
कौतुकास्वादमात्र-a. interested only by way of curiosity
कौतुकौषधी-f. (?) an herb or plant used in ceremony
कौलकथा-(f). family tradition; the tradition of the kaulas
कौसुम-a. flowery; coming from flowers
क्रयविक्रयिक-a. having rules of sales and purchases
क्रूरकोपाक्षेप-a. convulsed on account of great anger
क्लान्तशतेषु-(ad). out of whom hundreds have faded (died)
क्लेशबन्धादिनिरपेक्षसमागम-a. indulging in intercourse without caring for the pain or bandage
क्लेशमूल्य-n. price of trouble (?)

क्ष

क्षणक्षीणधनायमान-a. behaving like a person quickly grown poor
क्षणिकोदार-a. noble for a moment

| | |
|---|---|
| क्षत्रिन्-a. (?) | |
| क्षपारंभ-m. | beginning of the night; evening |
| क्षपाशिन्-a. | eating during the night |
| क्षपितविभव-a. | whose wealth is lost |
| क्षपितेन्द्रिय-a. | destroying the limbs of others; killing others |
| क्षय-m. | undergoing waning and waxing |
| क्षयहेतु-m. | cause of destruction |
| क्षयनिर्भर-a. | deeply attached to destruction |
| क्षयवृद्धिभाक्-a. | undergoing waxing and waning |
| क्षयोद्यतमति-a. | with mind bent on destruction |
| क्षयोद्यत-a. | ready for destruction |
| क्षिप्तचक्षुस्-a. | directing the eye upwards |
| क्षिप्रकृत्-a. | hastening; fast approaching |
| क्षिप्रोपदेश-a. | quick advice, quick instruction |
| क्षिप्रागिणी-a. (f) | showing transitory (quick) love or colour |
| क्षीणपटा-a (f) | with saintly cloth; having no cloth i.e. poor |
| क्षीणवित्त-a. | having tatted clothes; one whose wealth is exhausted |
| क्षीरक्षय-m. | drying up of mother's milk |
| क्षीरसंक्षय | |
| क्षुण्णपाणि-a. | proper name; with hands folded |
| क्षुण्णेक्षुशल्कप्रतिम-a. | similar to the crushed sugar cane chips (शल्क) (चिपाड in marathi) |
| क्षुतक्षतोदर-a. | whose belly has been suffering through hunger |
| क्षुत्क्षामकुक्षि-a. | having his stomach imatiated through hunger |

| | |
|---|---|
| क्षुद्राभृत्-a. | supporting the harlots (क्षुद्रा) (sch.) of कुट्टनीमत. |
| क्षेत्रवासिन्-a. | living in the region |
| क्षेमकारिन्-a. | conferring happiness or security (M.W.) |
| क्षैण्यक्षाम-a. | imatiated through weakness |
| क्षैब्यसुप्त-a. | who had slept due to intoxication |
| क्षोभराग-m. | love causing fury |
| क्ष्माप-m. | a king |
| क्षुरिकापट्ट-m. | a belt for holding a dagger |

ख

| | |
|---|---|
| खञ्जन-n. | a proper name |
| खटिका-f. | a chalk |
| खट्वांगशरण-a. | supported on the खट्वांग or leaning on the staff (M.W.) |
| खडखडाराव-m. | the noise खडखड |
| खण्डितमानस-a. | having a disappointed mind; distracted, broken hearted |
| खड्ग-m. | a javelin (खजिर) |
| खड्गपात्र-m. | a vessel made of a rhinoceros' horn (M.W.) |
| खड्गपत्र-n. (?) | the blade of the sword |
| खण्डलेख्य-n. | difficient records |
| खरदास-m. | a proper name |
| खलमैत्री-f. | friendship of a wicked person |
| खरक्रूरता-f. | cruelty of the खर demons; terribly cruel |
| खरराग-m. | donkey like love |
| खरस्वनः-a. | speaking like a donkey; having a harsh noise |

| | |
|---|---|
| | as that of a donkey |
| खशकुटीरक-n. | a hut made of khasha grass |
| खलतर-a. | very wicked |
| खलपण्डित-m. | a learned rogue |
| ख्वाश-m. (?) | death |
| ख्वाशपति-m. (?) | one who brings on death |
| खेदक्लान्त-a. | weary on account of sexual pleasures (खेद - sexual passion of महाभाष्य वार्तिक) |
| खल्वाटकर्पर-n. | a cranium of a bald man; a bald cranium |

ग

| | |
|---|---|
| गगनसंगिन्-a. | attached to the sky |
| गगनस्थलीकृषि-f. | farming in the sky |
| गगनाङ्गन-n. | the courtyard of the sky i.e. the sky |
| गंगामृत्-a. | earth from the ganges |
| गञ्जदिविर-m. | chief clerk in charge of treasury (गञ्ज) or a treasury officer |
| गडंकार-m. | the sound गडगड |
| गणनापति-m. | an arithmetician; a calculator; an accountant or accounts officer |

गणपालक-m. गणपति - m. गणाधिपति - m. protector of clans, tribes, corporations

| | |
|---|---|
| गणविज्ञानिका-f. | one who has the knowledge of गण i.e. female astrologer |
| गणिकागुरु-m. | preceptor of courtesans |
| गणितापचार-m. | astrological troubles; trouble indicated by |

astrolgy
गणेशनैवेद्यमण्डक-m. sweet balls (मण्डक) to be offered to Ganesha
गतिप्रद-a. giving final beatitude
गण्डक-m. (?) a ball
गन्धयुक्ति-f. blending of fragrant substance i.e. perfumery
गन्धयुक्तिकथा-f. stories relating to the preparation of perfumes
गर्भभार-m. responsibility of carrying a womb
गर्भाशंका-f. fear of pregnancy
मलसुखम्, गर्तसुखम्-a. pleasure of cohabitation
गलगर्तमात्रसुखिन्-a. finding pleasure only in gullet and cavity (of a woman)
गलग्रह-m. seizing by the throat
गलपूरम्-ad. upto the throat
गलहस्तादिवादन-m. (?) sound produced with throat and hands
गान्धर्वराग-m. love belonging to a singer
गान्धर्विक-m. a singer
गारुडकल्पज्ञः-a. one who knows the गारुडकल्प. m (jugglery) art of a charmer - (M.W.)
गीतनृत्तादिरससंसक्तमानस-a. greatly attached to singing, dancing etc.
गुणदोषविभागकृत्-a. making a distinction between virtues and vices
गुणवत्कान्तासक्तिव्यसनवर्जितः-a. void of attachment towards a virtucus
गुणमद-m. pride of one's merits
गुणविभाग-m. classification of merits; distribution of merits

| | |
|---|---|
| गुणाकर्णनतत्पर-a. | bent on (engaged in) listening to the qualities (of wife) |
| गुणोचित-a. | adjusted with strings, or appropriated to qualities |
| गुरुद्रविण-n. | father's money |
| गुणोज्झित-a. | void of merit i.e. worthless; free from the presence of the three qualiteis (सत्त्व, रजस् तमस्) |
| गुरुभ्रातृ-m. | uncle or father's brother; an elder brother |
| गुल्फदामन्-n. | string reaching the ankles |
| गुरुभट्ट-m. | venerable preceptor (गुरु) of गुरुनाथ |
| गुरुनाथ-m. | lord preceptor (ironical) |
| गुल्फास्फालन-n. | (?) the expanse of the ankles |
| गुढाङ्ग-n. | the private part, secret part of गुह्यांगम् |
| गूथलिप्त-a. | besmeared with ordure |
| गृहकृत्य-n. | affairs of a royal house |
| गृहकृत्यमहत्तम-a. | supervisor of the household affairs |
| गुहकृत्याधिपति-m. | a chief person looking after the house hold affairs |
| गृहभञ्जन-n. | demolishing the house |
| गुहनिधान-n. | a house treasure |
| गृहावृत्तिविचक्षण-a. | expert in returning to the house |
| गृहाश्रय-a. | residing in a house |
| गृहोल्मुक-m. | a fire brand in the house N. of a demon |
| गेहिनीसङ्गम-m. | intercourse with one's own wife |

| | |
|---|---|
| गृहनारी-f. | a woman of the household |
| गोघासलवणच्छिद्-a. | stealing salt and grass meant for the cow |
| गोचर-m. | a pasture land |
| गोपालता-f. | state of a herdsman |
| गोप्रदक्षिणकृत्-a. | circumambulating a cow or the earth |
| गोभक्ष-a. | a cow eater |
| गोष्ठीविधायिन्-a. | making conversation |
| गोष्ठीरसाभिज्ञ-a. | knowing the pleasure of association (with women) |
| गौडशरण्ड-m. | a gaud rogue |
| गौरवस्थायिन्-a. | lasting for the duration of respectability (गौरव) |
| गौरीगर्भगृह-n. | inner apartment of the gauri temple |
| ग्रन्थिजूट-a. | having knotted hair |
| ग्रन्थिनिबद्ध-a. | kept in a knot; perfectly knotted |
| ग्रन्थिभेदिन्-a. | a pick-pocket; breaking open the baskets of others |
| ग्रस्तस्थावरजंगम-a. | swallowing or capturing the moveables and immoveables; destroying all moveable and immoveable creation |
| ग्रहण-n. | the fees of a prositute |
| ग्रहणद्वय-n. | double fees |
| ग्रहवार-m. (गृहवारः) | planetary days; eating at different houses by turns |
| ग्रहराग-m. | planet like love |
| ग्रहस्थिति-f. | position of stars |

| | |
|---|---|
| ग्रहाभिध-a. | known as planets |
| ग्रामगणेश-m. | a leader of the village |
| ग्रामचिकित्सा-f. | medical practice in a village |
| ग्रामदास-m. | a village servant |
| ग्रामनियोग-m. | appointment in the village |
| ग्रामनियोगिन्-a. | village officer |
| ग्राममत्स्य-m. | a village fish; a fish in the village tank |
| ग्रामयात्रा-f. | village fair; pilgrimages |
| ग्राहकघट्टन-n. | pushing the customers, bringing round the customers or deceiving the customers. |
| ग्रासीकर्तुम्-inf. | of p. to swallow or steal |
| ग्रीष्मतुषारतुल्य-a. | like the dew or frost in the summer |
| ग्रीष्मग्लान-a. | withering due to summer |

घ

| | |
|---|---|
| घटघटारव-m. | the noice घटघट while drinking |
| घटिल-a. | having a prominent neck (गणरत्नमहोदधि |
| gives | घाटाल) |
| घटी-f. | a water jar or a small bell |
| घटीप्रतिष्ठा-f. | ceremony performed on the first day of आश्विन (known as घटस्थापना) |
| घण्टा-f. | a large bell |
| घण्टिका-f. | a small bell |
| घरट्टमाला-f. | series of grind stones; a proper name |
| घर्घरा-f. | a proper name |
| घर्घरस्वन-a. | having indistinct sounds |

घुणजग्ध-a. eaten by worms
घृणासंकुचिताशय-a. with mind repulsed with disgust (घृणा)
घृताभ्यक्त-a. anointed with ghee
घ्राणराग-m. love resembling the nose
घृतनाडी-f. a नाडी for feeding घृत (ghee)

च

चक्र-n. (?) the part of the body
चक्रचारिन्-a. acting crookedly
चक्रनाराचसंचय-m. (?) collection of wheels and arrows
चक्रलिका-f. patches
चक्रलिरूढ-a. riding on a wheel
चक्रिकाशिव-m. (?) fraudulent sivas
चक्षुर्वैद्य-m. quack-eye specialist, eye-doctor
चटकरति-a. having a sparrow-like intercourse
चटकाराग-m. a sparrow-like love
चटिका-f. (चटणी) chatnee
चण्डघण्टा-a.f having harsh bells
चण्डतरोद्धृष्ट-a. rubbing fiercely (violently in sexual intercourse)
चण्डरव-m. a proper name
चतुरताचार्य-m. a preceptor teaching cleverness
चतुर्भुज-a. one who had taken all the four sides; four sided; all sided
चतुराननत्व-n. god Brahma; state of being clever mouthed i.e. clever in speech

| | |
|---|---|
| चन्द्रापीडान्वयिन्-a. | born in the family of चन्द्रापीड a kashmerian prince of the 9th century |
| चरणतललिह्-a. | licking the soles of the feet |
| चरणस्पृश्-a. | touching the feet |
| चरणालीन-a. | lying at the feet; worn on the feet; sticking to the feet |
| चरणोपान्ते-ad. | near the feet; at the feet |
| चर्मकारगुरु-a. | who has become the guru of the shoe-maker |
| चलहण्ठा-f. | (चलहट्टा) a female hawker having a moving shop |
| चर्मकत्-a. | चर्मकार a shoe-maker |
| चर्मबन्धन-n. | tied or covered in a skin |
| चर्मलिङ्ग-n. | artificial penis made of skin (this was known even to the Greeks in olden times) |
| चर्मवसन-a. | (कृत्तिवास्) covered with hyde; wearing only skin clothes |
| चाक्रिक-n. (?) | trickery |
| चाक्रिक-a. | moving in bad company |
| चान्द्रराग-m. | love resembling the moon;-moon-like love |
| चाम-m. (?) | water in which rice is boiled (पेज in marathi) |
| चारुवेश-m. | pretty dress (M.W.) |
| चिकित्साचतुर-a. | expert in curing; expert in diagnosing |
| चिटिवत्स-m. | a proper name |
| चिताभिध-a. | pyrenamed; a proper name |
| चित्तग्रहण-n. | captivation of the heart (cf मनोग्रहणम्) |

चित्रगुप्तविचेष्टित-a.acting or behaving like चित्रगुप्त
चित्राम्बर-a. having multicoloured clothes
चीनानक-m. (?) some kind of a bird
चिरिका-f. a piece of paper
चीरिकालिखित-a. written on a slip of paper
चीरीचीत्कारतार-a. as loud as the noise of a cricket or the tip of the pen-point (चीरी)
चीवरिन्-a. clad in rags
चुम्बनलालन-n. kissing and caressing
चुल्लमुख-a. having blear face
चुल्ललोचन-a. having blear eyes (cf. क्लिन्नस्य चिल् पिल् लश्चास्य चक्षुषी चुल् च P.v. 2-35 वार्तिक
चुल्लीसुप्त-a. lying in (at) the fire place
चूर्णलवण-n. salt powder
चोरिका-f. a female thief
चौरग्रस्त-a. robbed by thieves
चौरद्रविण-n. the money of a thief or stolen money

छ

छगलशृङ्गम्-n. horn of a he-goat
छन्नपथ-m. a closed path;(a) having a secret path or way
छलनिरीक्षक-a. observing all pretences or tricks
छागगोचर-a. having a large number of goats and pasture land
छागशृङ्ग-n. the horn of a goat
छायाग्रहाभिध-a. named छायाग्रह

छायाञ्जन-n. a magic ointment
छायाराग-m. shadow-like love
छिन्ननासिक-a. (छिन्ननास) cut-nose
छिन्नार्धनासिका-a.f. having half the nose cut off
छिद्रशिक्षण-n. acquistion of knowledge of other's weak points

ज

जगदुन्मूलनव्रत-a. who has taken a vow of destroying the world
जघनस्पर्श-m. touching of pudenda (cf.गुह्यस्पर्श)
जटाधर-a. an ascetic, one who has matted hair
जटाभृत्-a. wearing matted hair
जतुरक्षा-f. (?) protection with the help of lac (जतु) used as a charm
जनजीवापहार-a. taking away the life of people; killing the people
जनदुष्कृत-n. wicked actions of the people; sins
जननीविकार-m. disturbance due to her mother
जनपुण्यम्-n. meritorious actions of the people
जनस्थानविनाशहेतु-m. cause of destruction of an area
जनाभिसार-m. meeting of the people
जनार्दन-a. name of the vishnu; tormentor of people
जनितशिरःशूल-a. having head-ache
जन्मजघन्य-a. condemnable throughout life
जन्मदिनोत्सव-m. birthday celebrations
जन्महीन-a. not having birth

| | |
|---|---|
| जन्मसंचित-a. | acquired during life-time |
| जन्मावधि-m. | the lower limit of adult life (the age of puberty) |
| जपोच्छलत्कूर्च-a. | whose beard is moving while muttering |
| जयपट्टक-n. | a record of victory in a law suit |
| जयनुति-f. | eulogy for victory |
| जरच्छिखा-a.f. | a grey haired women |
| जरद्विट-m. | an old paramour or keeper of harlots |
| जरठाखु-m. | an old rat or an old thief |
| जाड्यधन-m. | having foolishness as his wealth i.e. a fool |
| जानुघंटिक-a. | to whose knees bells are tied |
| जापिन्-a. | muttering something to himself |
| जारगुरु-m. | a paramour in the guise of गुरु (preceptor) |
| जारोत्सव-m. | merry-making with a paramour |
| जालवध-m. | killing after catching in snares or tricks |
| जीर्णवीणोपमकृति-a. | having a form just like an old lute |
| जीवनदिविर-m. | a dairy clerk; a clerk in charge of births and deaths |
| जीवनहृत्-a. | robbing of life, life-destroyer |
| जीवंजीवराग-m. | pheasant-like love |
| जीवितापहा-a. | taking away life; destroying life |
| जीविताभ्यधिक-a. | more precious than life |
| जेष्ठार्कवासर-m. | sunday in the month of ज्येष्ठ |
| ज्योतिर्गणक-m. | an astrologer or astronomer |
| ज्वराभिध-a. | called ज्वर |
| जुगुप्सामीलितेक्षण-a. | with his eyes closed through disgust |

| | |
|---|---|
| ज्योतिः शास्त्रविद्-a. | one knowing astrology or astronomy i.e. an astrologer or astronomer |
| ज्ञानसर्वस्व-n. | the whole essence of knowledge |
| ज्ञानलोचन-m. | with (having) an eye of knowledge i.e. a wise man |
| ज्ञानात्मन्-a | proper name |
| **झ** | |
| झिलीमली-f. | cymbals (झांज) |
| **ट** | |
| टक्क-m. | a salesman (sch) |
| टक्क-m. | a proper name |
| टक्कराकोटि-f. | crores of blows; millions of blows |
| टक्कन-n. | blow on the head |
| टनत्कार-m. | (टणत्कार) twang of a bow (M.W.) |
| टिप्पिक-n. (?) | (टुप्पिक) cap |
| टिप्पिकाबन्ध-m. | (?) arranged with the help of a gloss (टिप्पिका) (बन्ध composition such as गद्यबन्ध, पद्यबन्ध, सर्गबन्ध, cf टिप्पणी - ) |
| टुप्पिका-f. | a cap |
| **ठ** | |
| ठक्कगृह-n. | the house of a merchant |
| ठक्कुरपुत्र-m. | the son of a chief (सरदारपुत्र) |
| **ड** | |
| डामर-m. | a lord; a baron, (adj) causing tumult |
| **त** | |
| तक्षकयात्रा-f. | the Naga fair held in honour of तक्षक or a naga |

prince

तत्कालोद्यतकातर-a. agitated or overpowered on account of being ready for immediate intercourse

तत्क्षणधनदानभोग्य-a. enjoyable on account of wealth to be paid then and there.

तनुतराम्बर-n. thin cloth.

तनुतरार्थकदर्थना-f. distress on account of scantiness or shortage of money

तनुमर्मभेदिन्-a. piercing the vitals of the body

तनुविभूषण-n. ornament for the body.

तनुवोरशोषा-a.f. (?) (wrong reading for तनुचीरशेषा) having rags on her body

तन्त्रमन्त्रहीन-a. void of तन्त्र & मन्त्र

तन्त्रस्थानायात-a. who had come to or from a तन्त्रस्थान (a place of worship or a temple)

तरमूल्य-n. freit for crossing a river (तरीचा उतार)

तरलारम्भ-m. with a fickle beginning

तरुणाकांक्षिन्-a. (.णी f desirous of young men

तवैरिषु-m. (?)

तस्त्रा-f. (तसर, तसरिक) something woven (झोळी) in marathi)

तरुणीभार्य-a. having a young wife

तरुशिलाप्राय-a. full of trees and rocks

ताडीयुग-n. a pair of ear ornaments

ताम्बूलकल्ककलित-a. full of remains of ताम्बूल

ताम्बूलगण्डूष-m. spitting of a ताम्बूल (विडयाची चूळ)
ताम्बूलप्रणयिन्-a. attached through receiving the ताम्बूल
ताम्बूलावेलपाटल-a. red with spitting of the chewed betel
ताम्बूललीलामात्ररुचि-a. desirous of only of chewing the betel
ताम्रकुण्डक-a. copper vessel
ताम्रज-a. made of copper
ताम्राख्य-a. (love) resembling copper colour
ताम्राक्ष-a. (क्षी f) red eyed
तालक्षुद्र-m. (?) as small as- (span) measure (ताल) (M.W.)
तारी-f. a proper name
तिलकराग-m. love esembling sandal (तिलक)
तीक्ष्णाक्षिपटल-n. keen eye (अक्षिपटल - क्षि)
तीरमण्डूक-m. a frog at the bank
तीर्थार्थिन्-a. (नी) desirous of a holy place
तीर्थोपसेविन्-a. resorting to sacred places
तीव्रक्षतविदारण-a. tearing through terrible wounds
तीव्रदर्प-a. full of strong (great) pride; greatly proud
तीव्रशपथ-m. strong oaths
तीव्रावमान-a. bitter dishonour; strong insults
तुलाधर-m. a goldsmith or a scale holder; a proper name
तुल्यरुचि-a. having the same lustre; having the same attachment
तुल्याप्त-a. equally obtained; equally intimate
तुहिनत्विष्-a. the moon
तुहिनागम-m. advent of winter

तूणरक्षक-m. a person in charge of arrows (it may be a mistake for तृणरक्षक a stable-man)

तूस्तप्रावरण-n. covering of dust lying in dust

तूस्ती-f. dust

तृणबुस-n. chaff i.e. worthless stuff

तृणापात-m. falling down of a blade of grass or straw

तैलोन्मृष्ट-a. rubbed with oil

त्यक्तयन्त्रण-a. losing restraint; unrestrained

त्यक्ताहार-a. avoiding or giving up food

त्रिगुणावर्तवालिक-m. a thin ring with three golden threads

त्रिघण्टिक-a. having three bells

त्रिटांकार-m. (?)

त्रिदशोचित-a. fit for gods

त्रिफलाक्षालनविमल - a. without dust on account of washing with त्रिफला

त्रिमलक्षालक-a. purifying the three unclean humours

त्रैलोक्यतुलन-a. weighing or comparing of the three worlds

त्रैलोक्याक्रमण-n. crossing the three worlds as in the incarnation of vaman

त्रोटितकर्णपाली-a.f. with ear-ornaments broken

त्वग्राग-a. love resembling skin

## थ

थूत्कृत-a. disregarded; scorned (cf. राजतरंगिणी 7, 1116)

थूत्कृतमुख-a. whose face has been spit upon

द

| | |
|---|---|
| दसन-m. | destroying |
| दण्डत्याजनलेख-m. | letters as to the acquitance to condone punishment or fine |
| दण्डधृत्-a. | having a stick in hand |
| दण्डनिषेधिन्-a. | who oppose punishment or fine |
| दत्ताक्षिजीवाञ्जना- | a.f. who had made her eyes lively |
| दत्तानुवाद-m. | repeated mentioning of what is given by others |
| दधिक्षीर-n. | curds and milk |
| दन्तताम्बूल-m. | having a betal-nut under his teeth |
| दन्तराग-m. | tooth like love |
| दन्तरूप-a. | prominently looking on account of teeth |
| दम्भनिधान-a. | store house of hypocricy i.e. excessively hypocrite |
| दम्भध्वज-a. | having hypocricy as his characteristic |
| दम्भभूति-m. | a proper name |
| दम्भभोग-m. | feigned enjoyments |
| दम्भसंभावित-a. | being honoured on account of hypocricy |
| दम्भस्तम्भ-a. | stiff with hypocricy |
| दम्भहरार्चन-n. | pretended worship of siva |
| दरिद्रशाला-f. | a house of a poor man |
| दर्पणपरा-a.f. | frequently looking in the mirror |
| दर्वी-f. | a ladle |
| दशाश्रय-a. | depending on condition or wick |

